समइति समः नातिदीर्घोनातिह्रस्वः षण्णवत्यंगुलोत्सेधोयोनांशःसदिवौकसामित्युक्तेः समानिअन्यूनानधिकपरिमाणानिविभक्तानिपृथग्भूतानिअंगानिअवयवायस्यसः भ्रुवौनासापुटेनेत्रे कर्णावोष्ठौचचूचुकौ कूर्परौमणिबंधौचजानुनीवृषणौकटी करौपादौस्फिजौयस्यसमौज्ञेयःसभूपतिरित्युक्तेः स्निग्धवर्णःस्निग्धश्यामलवर्णइत्यर्थः स्निग्धेंद्रनीलवर्णस्तुभोगांविंदतिपुष्कलमित्यु क्तेः प्रतापःस्मृतिमात्रेणरिपुहृदयविदारणक्षमंपौरुषंतद्वान् प्रतापौपौरुषातपाविति कोशः पीनवक्षाःमांसलसमोन्नतवक्षाः विशालाक्षः विस्तृतायतनेत्रः नासिकाचक्षुषीकर्णौयस्यायतावित्यु क्तेः लक्ष्मीवान्सीनारूपलक्ष्मीशक्तिमान्सर्वावयवसौंदर्यवान्वा मोपधत्वाद्वत्वम् एवमुक्तरीत्याशुभानिसामुद्रिकशास्त्रोक्तानिलक्षणानियस्यसशुभलक्षणः ॥ ११ ॥ धर्मज्ञइति सत्याअमो घासंधा सकृदेवप्रपन्नायतवास्मीतिचयाचते अभयंसर्वभूतेभ्योददाम्येतद्व्रतंममेत्यादिरूपिणीप्रतिज्ञायस्य यशस्वीरावणवधादिनादिव्ययशःसंपन्नः ज्ञानसंपन्नःब्रह्मज्ञानपरिपूर्णः अतएवज टायुषंप्रतिमयात्वंसमनुज्ञातोगच्छलोकाननुत्तमानित्युक्तिःसंगच्छते ब्रह्मज्ञस्यैवब्रह्मोपदेशेअधिकारात् विनाब्रह्मोपदेशमनुत्तमलोकावाप्त्यसंभवात् नविद्यंतेउत्तमायेभ्यस्तेअनुत्तमाः आत्मानं

समःसमविभक्तांगःस्निग्धवर्णःप्रतापवान् ॥ पीनवक्षाविशालाक्षोलक्ष्मीवाञ्छुभलक्षणः ॥ ११ ॥
धर्मज्ञःसत्यसंधश्चप्रजानांचहितेरतः ॥ यशस्वीज्ञानसंपन्नःशुचिर्वश्यःसमाधिमान् ॥ १२ ॥
प्रजापतिसमःश्रीमान्धातारिपुनिषूदनः ॥ रक्षिताजीवलोकस्यधर्मस्यपरिरक्षिता ॥ १३ ॥

मानुषंमन्येरामंदशरथात्मजमित्यादिवचस्तुमायामात्रमित्यन्यत्रविस्तरः शुचिःप्रातःस्नानादिनाप्राणायामाभ्यासादिनाप्रत्याहारादिजन्यरागद्वेषहानेनचमायिकशरीरत्वाच्चनित्यंबाह्यांतरशु द्धः वश्यःपित्राचार्यदेवेषुविनीतः समाधिमान्निजतत्त्वसमाधिमान् ॥ १२ ॥ प्रजापतीति प्रजापतिसमः यद्यपिरामोब्रह्मैवतथापिमानुषधर्माणांशोकमोहादीनांमायिकानांतत्रदर्शनेनऔ पाधिकभेदमादायतत्समत्वोक्तिः भार्गवलोकप्रतिबंधरूपात्जटायुमोक्षप्रदानरूपात्स्वेनसहसर्वायोध्यावासिजनस्यसशरीरस्यब्रह्मलोकनयनरूपाच्चकारणात्तत्समत्वम् सर्वथास्वतंत्रस्यैवेद शेषुयोग्यत्वात् श्रीमानित्येवमादीनांपौनःपुन्यंसकलैश्वर्यादिसत्वबोधनार्थं धातापितेवसर्वप्रजाधारणपोषणसामर्थ्ययुक्तः रिपुनिषूदनः आश्रितजनरिपुनाशकःकामादिरिपुनाशकश्चअन्य थाजगद्गुरोर्भगवतोरिपोरेवाभावेनैतद्विशेषणासंगतिःस्यात् बाहुलकात्कर्तरिल्युट् जीवलोकस्यप्राणिसमूहस्यसकलव्यवहारप्रवर्तकत्वेनरक्षिता धर्मस्यतत्तद्वर्णाश्रमधर्मस्यमर्यादापरिपाल नद्वारारक्षिता ॥ १३ ॥

रक्षितेति स्वस्यधर्मस्ययज्ञाध्ययनदानदंडयुद्धादिरूपस्यरक्षितासादरमनुष्ठाता स्वजनस्यस्वभक्तजनस्यअवश्यभाविनोप्यनिष्टस्यनिरासपूर्वकंपरमेष्टमोक्षदानेनरक्षिता तच्चांबरीषप्रह्लादध्रुवा दीनांरक्षणेनप्रसिद्धमेव वेदानांऋग्यजुःसामाथर्वणां छंदःकल्पव्याकरणज्योतिषनिरुक्तशिक्षारूपवेदांगानांचतत्त्वज्ञःपाठतोऽर्थतश्चज्ञाता शस्त्रास्त्रादिप्रतिपादकंशास्त्रंधनुर्वेदःतस्मिन्निष्ठितःसम्य क्परिज्ञाता ॥ १४॥ सर्वेति सांख्ययोगतर्कपूर्वोत्तरमीमांसासूत्राणिसव्याख्यानानिशास्त्राणि स्मृतयउपस्मृतयश्चतत्त्वार्थशासकत्वाच्छास्त्रम् सर्वमूलशब्दशासकत्वाद्व्याकरणंचशास्त्रम् तथैव कामंदकादीन्यपिनीतिशास्त्राणि सर्वेषामेषामर्थतत्त्वज्ञः स्मृतिमान्उक्ताधीतवेदशास्त्रार्थविस्मरणरहितः प्रतिभानवान्व्यवहारकालेश्रुतस्याश्रुतस्यचउचितार्थस्यशीघ्रंप्रतिभासः प्रतिभानंत द्वान् तदुक्तम् प्रज्ञांनवनवोन्मेषशालिनींप्रतिभांविदुरिति सर्वलोकप्रियःद्रष्टृस्मर्तृलोकानामिहामुत्रहितावहः साधुःमृदुमधुरस्वभावः अदीनात्मासहजासाधारणक्षात्रभावेनअदीनस्वभावः अ तिव्यसनपरंपरायामपिअक्षुभितांतःकरणोवा विचक्षणःयथोचितलौकिकालौकिकसर्वक्रियासुकुशलः ॥ १५ ॥ सर्वदेति सर्वदाहोमदेवपूजासभाधिष्ठानकालेषुतत्तत्कालोचितैःसद्भिःसा

रक्षितास्वस्यधर्मस्यस्वजनस्यचरक्षिता ॥ वेदवेदांगतत्त्वज्ञोधनुर्वेदेचनिष्ठितः ॥ १४ ॥ सर्वशास्त्रार्थतत्त्वज्ञःस्मृतिमान्प्रतिभानवान् ॥ सर्वलोकप्रियः साधुरदीनात्माविचक्षणः ॥ १५ ॥ सर्वदाभिगतःसद्भिःसमुद्रइवसिंधुभिः ॥ आर्यःसर्वसमश्चैवसदैवप्रियदर्शनः ॥ १६ ॥ सचसर्वगुणोपेतःकौसल्या नंदवर्धनः ॥ समुद्रइवगांभीर्येधैर्येणहिमवानिव ॥ १७ ॥ विष्णुनासदृशोवीर्येसोमवत्प्रियदर्शनः ॥ कालाग्निसदृशःक्रोधेक्षमयापृथिवीसमः ॥ १८ ॥

त्त्विकस्वभावैःपुरोहितद्विजमंत्रिप्रधानादिभिः सिंधुभिर्नदीभिःसमुद्रइवअभिगतःसेवितः यद्वा सद्भिर्भक्तैःसदासेवितः भगवत्सेवायांकालनियमाभावात् दृष्टांतेनतंप्राप्तानांसतांभक्तानांतेनसहऐ क्यंव्यनयति आर्यःसर्वपूज्यः सर्वेषुसुखदुःखोदर्केषुसमःहर्षविषादरहितःशत्रुमित्रोदासीनेषुवैषम्यरहितःतत्तत्कार्यानुरूपफलदातेत्यर्थइत्यन्ये सदैवसर्वावस्थासुमुहुर्मुहुरनुभवेपिअननुभूतपूर्ववद्विस्मयनीयदर्शनः ॥ १६ ॥ सचेति सरामःसर्वैर्गुणैर्युक्तः उक्तैर्वक्ष्यमाणैश्च कौसल्यानंदवर्धनत्वेनमहाकुलप्रसूतत्वप्रधानमहिषीपुत्रत्वादिरूपस्याभिषेकोचितधर्मस्यसत्तादर्शिता गांभीर्यम गाधाशयत्वंतत्रसमुद्रतुल्यः धैर्यमनसाप्यधृष्यत्वंइष्टवियोगादौअनभिभूतचित्तत्वंचरणेअचलतयासहायाभावेपिस्थितिश्चतेनहिमवत्सदृशः ॥ १७ ॥ विष्णुनेति यद्यपिरामोविष्णुरेवसर्वरूप श्चतथापिमानुषोपाधिभेदात्सर्वत्रसादृश्यंद्रष्टव्यम् यद्वा विष्णुनासदृशइतिअनन्वयालंकारः चंद्रवत्प्रजाव्यवहारनिरीक्षणकालेसौम्यदर्शनः क्रोधेयुद्धकालिकेकालाग्निसदृशःपरैरधृष्यइतिय वत् क्षमाप्रतीकारसामर्थ्येपिअपकारसहिष्णुतातयापृथिवीतुल्यः ॥ १८ ॥

धनदेनेति त्यागेधनत्यागेधर्मार्थंधनव्ययविषयेअपेक्षितधनसंपत्तौधनदेननवनिधीशेनसमः अस्मिन्नेवांशउपमानतुल्यागांशे तस्यधनसंग्रहएवप्रवृत्तेः धनदव्यवहारस्तुकतिपयत्रिदशेभ्योभगव
दाज्ञयाकतिपयधनदानमात्रादितिवहवः सत्येसत्यवचनेअपरोधर्मइवधर्मस्यमूर्त्यंतरमिवेत्युत्प्रेक्षा एतदंतंबालकांडीयार्थसंग्रहः तमेवमित्यादिनाअयोध्याकांडीयार्थसंग्रहआरभ्यते तत्रइक्ष्वा
कुवंशप्रभवइत्यनेनभगवदाविर्भावःसूचितः महावीर्यःशत्रुनिवर्हणइत्यनेनविश्वामित्रानुग्रहजशस्त्रास्त्रसंपत्तिताटकावधादिसूचितम् लक्ष्मीवानित्यनेनसीतापरिणयःसूचितः सत्यपराक्रममि
त्यनेनभार्गवलोकप्रतिबंधादिसूचितम् एवंगुणसंपन्नंप्रागुक्तरीत्यासकलकल्याणगुणयुक्तम् सत्यपराक्रमंअमोघपराक्रमम्॥१९॥ज्येष्ठमिति ज्येष्ठगुणैःयौवराज्याभिषेकार्हगुणैःयुक्तम् प्रकृती
नांप्रजानांहितैःइहामुत्रहितावहैःयुक्तम् ज्येष्ठंसुतंरामम् प्रकृतिप्रियकाम्ययाप्रकृतीनांप्रियंकर्तुमिच्छया छांदसःकाम्यजितिप्राञ्चः प्रकृतिसंबंधेनआत्मनःप्रियंकर्तुमिच्छया युवराजेनहिप्रजा
कृत्येसंपादितेसतिव्यवहारादिनिरीक्षणजन्यश्रमनिवृत्तिरूपंप्रियंस्वस्यभवतीतिवयम् ॥२०॥ यौवराज्येनेति युवराजस्यभावोयौवराज्यम् पितरिराज्यंकुर्वत्येवसर्वराज्यव्यापारेअभिषेकपूर्व

धनदेनसमस्त्यागेसत्येधर्मइवापरः॥ तमेवंगुणसंपन्नंरामंसत्यपराक्रमम् ॥ १९ ॥ ज्येष्ठंज्येष्ठगुणैर्युक्तंप्रियंदशरथःसुतम् ॥ प्रकृतीनांहितैर्युक्तंप्र
कृतिप्रियकाम्यया॥२०॥ यौवराज्येनसंयोक्तुमैच्छत्प्रीत्यामहीपतिः॥ तस्याभिषेकसंभारान्दृष्ट्वाभार्याथकैकयी॥२१॥ पूर्वंदत्तवरादेवीवरमेनम
याचत॥ विवासनंचरामस्यभरतस्याभिषेचनम्॥२२॥ ससत्यवचनाद्राजाधर्मपाशेनसंयतः॥ विवासयामाससुतंरामंदशरथःप्रियम्॥ २३॥

कर्माधिकृतःपुत्रोयुवराजः संयोक्तुंयोजयितुम् महीपतिःदशरथःऐच्छत् अथतस्यरामस्ययौवराज्याभिषेकेअपेक्षितान्संभारान्औदुंबर्यासंदीतस्यैप्रादेशमात्राःपादाःस्युरित्यादिनाबह्वृचब्राह्म
णेनउपदिश्यमानान्दधिमधुसर्पिरादीन्संभृतान्दृष्ट्वामंथरावचनाज्ज्ञात्वा कैकयीराज्ञःकनीयसीभार्या अत्रकैकेयीत्येवयद्यपिकेकयशब्दादञिकेकयमित्रय्वित्यादिनायादेरियादेशेगुणेआदि
वृद्धौङीपियस्येतिलोपेसाधुतथापिअपिमाषंमषंकुर्याच्छंदोभंगंनकारयेदितिन्यायेनकैकयीतिप्रयोगः पुंयोगलक्षणङीषिकेकयीतिपाठइत्यन्ये॥२१॥ पूर्वंपूर्वस्मिन्कालेइंद्रसहायार्थंप्रवृत्तदश
रथस्यदैत्यैर्युद्धकालेदशरथेतरप्रयुक्तामासुरींमायांधवलांगमुनिदत्तविद्ययानिवारयित्र्यैकैकेय्यैतुष्टेनदशरथेनदत्तौवरौयस्यैसादेवीसैवराज्याभिषेकसमयेरामाभिषेकादेवीनद्वृत्वियतमाएनंव
क्ष्यमाणलक्षणंवरंप्रागनकालत्वादयाचतराजानम् याचेर्द्विकर्मकत्वात् वरद्वयमाह रामस्यराज्यादुद्वासनंभरतस्यस्वपुत्रस्यअभिषेचनम् ॥ २२ ॥ सइति सत्यवचनात् धर्मपरनिर्देशनसत्यप्र
तिज्ञत्वादित्यर्थः अतोहेतोःसत्यरूपेणधर्मपाशेनसंयतःवद्धःसन्दशरथःप्रियंसुतमपिविवासयामास ॥ २३ ॥

सइति वीरः अनेकैरपराङ्मुखतया योद्धापि सरामः पितुः प्रतिज्ञां सत्यतयाऽस्वविवासनेन अनुपालयन् यद्वा कैकेयीसन्निधौ पितृवचनपरिपालनविषयां स्वकृतां प्रतिज्ञां परिपालयन् पितृवचनकृतान्निर्देशात् आज्ञातः मातुश्च कैकेय्याः प्रियकारणात् प्रियसिद्धिनिमित्तं वनं जगाम अनेन पितृतत्पत्नीसंतोषकरणमेव सर्वात्मना पुत्रस्य धर्म इति भगवता उपदिष्टम् ॥ २४ ॥ तमिति व्रजंतं भ्रातरम् प्रियः रामे सहजप्रीतिमान् ॥ २५ ॥ भ्रातरमिति भ्रातुः रामस्य दयितः प्रियः सौभ्रात्रं सुभ्रातृभावं स्नेहमिति यावत् स्नेहादेव जगाम न पित्रादिनिर्देशादिति भावः अथ रामस्य दयिता इष्टा प्राणसमा निरतिशयप्रेमास्पदम् हिता नित्यं हितकारिणी ॥ २६ ॥ जनकस्य कुले अन्वये जाता यद्यप्येषा अयोनिजा तथापि सीरध्वजस्य देवयजनलांगलपद्धतौ आविर्भूतत्वादेवमुक्तिः अतएवाह देवमायेवेति से वआचित्योदयस्थितिलया दैवैरवश्यकार्यसिद्ध्याकांक्षिभिर्निर्मिता आविर्भाविता यद्वा इवशब्द एवार्थे देवेन भगवता आविर्भाविता स्वमायैव भगवतोऽनाद्यंता सर्वकार्यसहायभूता सहजशक्ति

सजगाम वनं वीरः प्रतिज्ञामनुपालयन् ॥ पितुर्वचननिर्देशात्कैकेय्याः प्रियकारणात् ॥ २४ ॥ तं व्रजंतं प्रियो भ्राता लक्ष्मणोनुजगाम ह ॥ स्नेहाद्विनयसंपन्नः सुमित्रानंदवर्धनः ॥ २५ ॥ भ्रातरं दयितो भ्रातुः सौभ्रात्रमनुदर्शयन् ॥ रामस्य दयिता भार्या नित्यं प्राणसमा हिता ॥ २६ ॥ जनकस्य कुले जाता देवमायेव निर्मिता ॥ सर्वलक्षणसंपन्ना नारीणामुत्तमा वधूः ॥ २७ ॥ सीताप्यनुगता रामं शशिनं रोहिणी यथा ॥ पौरैरनुगतो दूरं पित्रा दशरथेन च ॥ २८ ॥ शृंगबेरपुरे सूतं गंगाकूले व्यसर्जयत् ॥ गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ॥ २९ ॥ गुहेन सहितो रामो लक्ष्मणेन च सीतया ॥ ते वनेन वनं गत्वा नदीस्तीर्त्वा बहूदकाः ॥ ३० ॥ चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ॥ रम्यमावसथं कृत्वा रममाणा वने त्रयः ॥ ३१ ॥ देवगंधर्वसंकाशास्तत्र ते न्यवसन्सुखम् ॥ चित्रकूटं गते रामे पुत्रशोकातुरस्तथा ॥ ३२ ॥

रेव हि माया यत्तु तिलोत्तमादिवद्देवमायेव स्थितेति तन्न निर्मितपदवैयर्थ्यापत्तेः सर्वैः स्त्रीलक्षणैः संपन्ना युक्ता ॥ २७ ॥ सीतेति सीता लांगलपद्धतिः तदुत्थत्वात्सीता शशिनं रोहिणीव राममनुगता ॥ २८ ॥ शृंगेति गंगाकूले वर्तमानशृंगबेरपुरे स्थितं निषादाधिपतिं प्रियं इष्टं गुहं आसाद्य तत्सहितो लक्ष्मणादिसहितश्च रामः सूतं रथेन स्वप्रापणार्थमागतं गंगाकूले व्यसर्जयत् परावर्तितवान् ॥ २९ ॥ गुहेनेति पूर्वार्धं पूर्वश्लोकान्वयि अथ ते सीतारामलक्ष्मणाः वनेन पुरोवर्त्तिप्राप्तवनद्वारेण परं अपरं वनं गत्वा ते वनं पादचारास्तेन वनं गत्वेत्यर्थ इति संप्रदायः ॥ ३० ॥ चित्रेति अनुपश्चात् भरद्वाजस्य शासनात् चित्रकूटं प्राप्य तत्र रम्यं आवसथं पर्णशालां कृत्वा तत्र वने रममाणास्त्रयः देवगंधर्वसदृशाः सुखं न्यवसन्नित्यन्वयः ॥ ३१ ॥ तथा पुत्रशोकातुरः अनिर्वाच्यपुत्रवियोगजन्यशोकपीडितः ॥ ३२ ॥

राजेति तस्मिन्दशरथेगतेलोकांतरंगतेसतेवसिष्ठाद्यैर्द्विजैस्त्रैवर्णिकैः इदमुपलक्षणम् तत्सहितैर्मंत्रिवृद्धैरित्यपिबोध्यम् ॥ ३३ ॥ राज्यायराज्यंकर्तुंतैर्नियुज्यमानःप्रेर्यमाणोमहाबलःसमर्थोपि
सौभ्रात्राद्राज्यंनैच्छत् ततःरामपादप्रसादकःपूज्यंरामंप्रसादयितुंवनंजगाम पादशब्दःपूज्यवाची ॥ ३४ ॥ गत्वेति सभरतःमहात्मानंसत्यप्रतिज्ञत्वादिधर्मैर्महावैभवंभ्रातरंरामंगत्वाआर्यभाव
पुरस्कृतःविनीतवेषःतंरामंराज्यायप्रतिनिर्वृत्तिअयाचत् याचिर्द्विकर्मकः ॥ ३५ ॥ ननुपितृमातृदत्तंराज्यंतवैवयोग्यमितिममप्रतिनिवृत्तिरनुचिताइत्यत्राह त्वमेवेति सर्वगुणश्रेष्ठेज्येष्ठेसतिकनि
ष्ठोनराज्यार्हइतिधर्मंत्वमेवजानासिइतित्वमेवराजाइतिवचोराममब्रवीत् रामोपिरमयतीतिव्युत्पत्त्याआश्रितचित्तरंजकोपिपितुरादेशात्राज्यंनैच्छदित्युत्तरेणान्वयः अत्रहेतुगर्भंविशेषणम् प
रमोदारःस्वसुखसाधनस्यपरस्मैदानमौदार्यंतद्युतः सुमुखःराज्यादपिवनेअम्लान्याद्यधिकमुखप्रसादयुक्तः सुमहायशाःप्रतिज्ञापालनरूपयशोभंगभियानैच्छदितिकतककृतः तीर्थस्तु परमोदा

राजादशरथःस्वर्गंजगामविलपन्सुतम् ॥ गतेतुतस्मिन्भरतोवसिष्ठप्रमुखैर्द्विजैः ॥ ३३ ॥ नियुज्यमानोराज्यायनैच्छद्राज्यंमहाबलः ॥ सजगामव
नंवीरोरामपादप्रसादकः ॥ ३४ ॥ गत्वातुसमहात्मानंरामंसत्यपराक्रमम् ॥ अयाचद्भ्रातरंराममार्यभावपुरस्कृतः ॥ ३५ ॥ त्वमेवराजाधर्मज्ञइति
रामंवचोब्रवीत् ॥ रामोपिपरमोदारःसुमुखःसुमहायशाः ॥ ३६ ॥ नचैच्छत्पितुरादेशाद्राज्यंरामोमहाबलः ॥ पादुकेचास्यराज्यायन्यासंदत्वापुनः
पुनः ॥ ३७ ॥ निवर्तयामासततोभरतंभरताग्रजः ॥ सकाममनवाप्यैवरामपादावुपस्पृशन् ॥ ३८ ॥ नंदिग्रामेऽकरोद्राज्यंरामागमनकांक्षया ॥ ग
तेतुभरतेश्रीमान्सत्यसंधोजितेंद्रियः ॥ ३९ ॥

रःयाचकाभीष्टप्रदाननिरतः अर्थिलाभेनप्रसन्नमुखः सुमहायशाःअर्थ्यवैमुख्येनप्रसिद्धकीर्तिरपिपित्राज्ञयैवभरतवाक्यंनैच्छदित्याह ॥ ३६ ॥ ततःअस्यभरतस्यराज्यायराज्यरक्षणसाम
र्थ्यंलब्धुंअहल्यादौदृष्टशक्तिकाचित्यवैभवस्वपदस्पृष्टेपादुकेन्यासरूपेणदत्वापुनःपुनःप्रतिनिर्वृत्तियाचमानंभरतंचतुर्दशसमानंतरंसर्वथाप्रतिनिवर्तितव्यमित्यभ्युपेत्यनिवर्तयामास अस्येतिरा
ज्यापेक्षयाषष्ठी दत्वेत्यत्रअस्मैइत्यर्थलभ्यम् दत्वेत्यन्वयेपिसंप्रदानस्यशेषत्वविवक्षयाषष्ठीत्यन्ये यत्तुनिक्षेपमुख्यदानाभावान्नचतुर्थीदत्वेत्यन्वयेपीतितन्न खंडिकोपाध्यायस्तस्मैचपेटांददा
तीतिमहाभाष्यप्रयोगविरोधात् ॥ ३७ ॥ सभरतःरामप्रतिनिवृत्तिरूपंकाममनवाप्यैवरामपादौनमस्कुर्वन्प्रतिनिवृत्तइतिशेषः ॥३८॥ ततोनमस्कृत्यप्रतिनिवृत्तोनंदिग्रामेस्थित्वारामश्चतुर्दशस
मारूपप्रतिज्ञातसमयानंतरंराज्यायआगमिष्यतीतिरामागमनकांक्षयापादुकेपुरस्कृत्यराज्यमकरोत् उत्तरार्धंस्पष्टम् ॥ ३९ ॥

रामइति उक्तगुणविशिष्टोरामस्तु अत्यासन्नतयानागरस्यमंत्रिवृद्धादिपौरजनस्यभरतस्यचतत्रचित्रकूटेआगमनमालक्ष्यसंभाव्यतेषांप्रतिनिवर्तनप्रयासाद्दूरमितोपिदूरगमनमितिसंचिंत्यदंडका
न्दंडकारण्यानि अवांतरवनबहुत्वाद्बहुवचनम् तेषांरक्षश्चोरादिभूयिष्ठत्वादेकाग्रःसज्जोभूत्वाप्रविवेश हेतिप्रसिद्धौ ॥ ४० ॥ प्रविश्येति महारण्यमितिअरण्यकांडकथासंग्रहः राजीवंपद्म
म् अनेनराक्षसयुद्धारंभकृतहर्षोऽध्वनितः शरभंगाद्याऋषयः ॥ ४१ ॥ चापीतिनिपातसमुच्चयःपद्यपूरकः अगस्त्यभ्राताइध्मवाहननामेतिकेचित् ततोमुनेरगस्त्यस्यभ्रातागस्त्यइतिश्रुतः सचिन्व
न्कानेनवन्यंसखीभिःकोपितोशपदितिमार्कंडेयपुराणेश्रूयते दिव्यंधनुरादिकंकार्यायप्रतिगृहाणेत्येवंरूपादगस्त्यवचनात् ऐंद्रंइंद्रादगस्त्यस्यागतंशरासनंधनुर्जग्राह पूर्वंभार्गवंजित्वाततःप्राप्तंय
द्वैष्णवंधनुर्भगवतारामेणवरुणेन्यस्तंतदिंद्रेणवरुणादानीयागस्त्येस्थापितमित्ययंअरण्यकांडेस्फुटम् ॥यद्वाइंद्रोविष्णुः ॥ ४२ ॥ खड्गंचेति अनुरूपनिजायुधलाभात्परमप्रीतःअक्षयाःसायकाः

रामस्तुपुनरालक्ष्यनागरस्यजनस्यच ॥ तत्रागमनमेकाग्रोदंडकान्प्रविवेशह ॥ ४० ॥ प्रविश्यतुमहारण्यंरामोराजीवलोचनः ॥ विराधंराक्षसंहत्वा शरभंगंददर्शह ॥ ४१ ॥ सुतीक्ष्णंचाप्यगस्त्यंच अगस्त्यभ्रातरंतथा ॥ अगस्त्यवचनाच्चैवजग्राहैंद्रंशरासनम् ॥ ४२ ॥ खड्गंचपरमप्रीतस्तूणीचाक्षयसायकौ ॥ वसतस्तस्यरामस्यवनेवनचरैःसह ॥ ४३ ॥ ऋषयोऽभ्यागमन्सर्वेवधायासुररक्षसाम् ॥ सतेषांप्रतिशुश्रावराक्षसानांतदावने ॥ ४४ ॥ प्रतिज्ञातश्चरामेणवधःसंयतिरक्षसाम् ॥ ऋषीणामग्निकल्पानांदंडकारण्यवासिनाम् ॥ ४५ ॥ तेनतत्रैववसताजनस्थाननिवासिनी ॥ विरूपिता शूर्पणखाराक्षसीकामरूपिणी ॥ ४६ ॥ ततःशूर्पणखावाक्यादुद्युक्तान्सर्वराक्षसान् ॥ खरंत्रिशिरसंचैवदूषणंचैवराक्षसम् ॥ ४७ ॥

बाणाःययोस्तौ तूणीइषुधी वनचरैःवानप्रस्थैः ॥ ४३ ॥ ऋषयइति तद्वनेवसतोरामस्यांतिकंअसुराःकबंधादयःरक्षांसिखरादयःतेषांवधायवधंप्रार्थयितुंसर्वेऋषयःअभ्यागमन् सरामःतेषांरा
क्षसानांवधंतस्मिन्वनेतेभ्योऋषिभ्यःप्रतिशुश्रावप्राप्तकालमसुररक्षोयोधयिष्येनोपेक्षिष्येइतितद्वचोंगीकृतवानित्यर्थः ॥ ४४ ॥ प्रतिज्ञातइति अग्निकल्पानांअग्निसदृशानांऋषीणांसन्निधावि
तिशेषः अपेक्षितइतिवाशेषः संयतियुद्धेअचिंत्यामितनिजशक्तिवैभवाद्रक्षसांवधःप्रतिज्ञातश्चेतिसंबंधः ॥ ४५ ॥ तेनेति तेनरामेणतत्रैवदंडकारण्यदक्षिणप्रदेशवर्तिपंचवट्याश्रमेजनस्थानंना
मदंडकारण्येरावणस्यबलनिवेशस्थानम् कामरूपिणीइच्छयानानारूपधारिणी यद्वापुंसांकाम्यमानरूपवतीविरूपिताकर्णनासाछेदनवैरूप्यंप्रापिता शूर्पणखेत्यत्रनखमुखात्संज्ञायांङीषूनिषे
धः पूर्वपदात्संज्ञायामितिणत्वम् ॥ विरुद्धंरूपंविरूपंतत्संजातमस्याइतितारकादित्वादितच् ॥ ४६ ॥ ततइति ततःतद्वैरूप्यकरणानंतरम् सर्वराक्षसान्जनस्थाननिवासिनइतिशेषः उद्युक्तान्युद्धा
र्थंसन्नद्धान् ॥ ४७ ॥

पदानुगान् अनुचरान् निवसता रामेणेति शेषः उत्तरश्लोकान्वयी॥४८॥रक्षसामिति ॥ चतुर्दशसहस्राणि तत्संख्यासंख्यातानि सैन्यानि इति शेषः ज्ञातयः खरादयः खरादयो हि रावणस्य वैमात्रेयाः
श्रुत्वा शूर्पणखामुखादिति शेषः मूर्छितः व्याप्तचित्तः॥४९॥क्रोधेन व्याप्तः स रावणः मारीचेन बहुशः बहुवारं परदारहरणस्य परमाधर्मत्वं बलवद्विरोधस्य निजनाशांतत्वमतस्तेन रामेण बलवता विश्वा
मित्राश्रमे मदनुभूतबलेन नेतव विरोधो न क्षमो न युक्तः न हितश्च इति वार्यमाणोपि मारीचं नाम प्रसिद्धं राक्षसं सीताहरणे सहायं वरयामास वृञ् वरणे इति स्वार्थे णिच्यंतोपि ॥ ५० ॥ नेति पूर्वार्धं पूर्वान्वयि
कालचोदितः मृत्युप्रेरितः रावणः तद्वाक्यं मारीचवाक्यं तु अनादृत्य ॥५१॥ सहमारीचः मारीचसहितः वोपसर्जनस्येति विकल्पात् सहस्य सादेशाभावः तस्य खरादिहंतृत्वेन प्रसिद्धस्य रामस्य आश्र

निजघान रणे रामस्तेषां चैव पदानुगान् ॥ वने तस्मिन्निवसता जनस्थाननिवासिनाम् ॥ ४८ ॥ रक्षसां निहतान्यासन्सहस्राणि चतुर्दश ॥ ततो ज्ञाति
वधं श्रुत्वा रावणः क्रोधमूर्छितः ॥ ४९ ॥ सहायं वरयामास मारीचं नाम राक्षसम् ॥ वार्यमाणः सुबहुशो मारीचेन स रावणः ॥ ५० ॥ न विरोधो बलव
ता क्षमो रावण तेन ते ॥ अनादृत्य तु तद्वाक्यं रावणः कालचोदितः ॥ ५१ ॥ जगाम सहमारीचस्तस्याश्रमपदं तदा ॥ तेन मायाविना दूरमपवाह्य नृपात्मजौ
॥ ५२ ॥ जहार भार्यां रामस्य गृध्रं हत्वा जटायुषम् ॥ गृध्रं च निहतं दृष्ट्वा हृतां श्रुत्वा च मैथिलीम् ॥ ५३ ॥ राघवः शोकसंतप्तो विललापाकुलेंद्रियः ॥ ततस्ते
नैव शोकेन गृध्रं दग्ध्वा जटायुषम् ॥ ५४ ॥ मार्गमाणो वने सीतां राक्षसं संददर्श ह ॥ कबंधं नाम रूपेण विकृतं घोरदर्शनम् ॥ ५५ ॥ तं निहत्य महाबाहु
र्ददाह स्वर्गतश्च सः ॥ स चास्य कथयामास शबरीं धर्मचारिणीम् ॥ ५६ ॥ श्रमणां धर्मनिपुणामभिगच्छेति राघव ॥ सोभ्यगच्छन्महातेजाः शबरीं श
त्रुसूदनः ॥ ५७ ॥

मपदं आश्रमस्थानं जगाम ततः तेन मायाविना मारीचेन नृपात्मजौ रामलक्ष्मणौ दूरं अपवाह्य अपसार्य ॥ ५२ ॥ जहारेति हत्वा हतप्रायं कंठगतप्राणं कृत्वा रामस्य भार्यां जहारेति संबंधः निहतं
निहतप्रायम् श्रुत्वा गृध्रमुखादिति शेषः ॥ ५३ ॥ विललाप पर्यदेवयत् आकुलेंद्रियः शोकपरवशेंद्रियः तेनैव शोकेन निवृत्तिहेतुमप्राप्तेन अभिभूयमान एव सन् गृध्रं रावणेन सीता अपहृतेति निवेद्य
मृतं दग्ध्वा विधिना संस्कृत्य ॥ ५४ ॥ सीतां वने मार्गमाणः मार्गयमाण इत्यर्थः रूपेण विकृतं कबंधं राक्षसं ददर्शेति संबंधः ॥ ५५ ॥ तमिति तं कबंधं निहत्य ददाह महाबाहू रामः स च कबंधः स्वर्गतः स्व
र्गगमनयोग्यं स्वीयं गंधर्वरूपं प्राप्तवान् ततः तेन रूपेण अस्य रामस्य ॥ ५६ ॥ श्रमणां तापसीम् धर्मनिपुणां सकलधर्मज्ञाम् धर्मचारिणीमित्यस्य तु सकलधर्मानुष्ठात्रीमित्यर्थः श्रमणामित्यत्र कर्त
रि ल्युट् तपसा श्राम्यतीत्यर्थात् तामभिगच्छेति कथयामासेत्यन्वयः ॥ ५७ ॥

शवर्येति सम्यक्पूजितःयथाविधिअर्घ्याद्युपचारैःपूजितः पंपेत्यादिनाकिष्किंधाकांडकथासंग्रहः संगतःमिलितः ॥ ५८ ॥ हनुमद्वचनात्सुग्रीवोयुष्मन्मैत्रीमपेक्षतेइत्यादिरूपात् समागतःमै त्रीकृतवान् हनुशब्दोकारांतोदीर्घांतश्च सुग्रीवायेतिसंगतायेतिशेषः शंसत्अकथयत् छांदसोऽडभावः महाबलःसुग्रीवेणस्वकार्यसाधकमहाबलवत्त्वेनावगतः ॥ ५९ ॥ आदितइति जन्मार भ्येत्यर्थः तत्प्रसिद्धंवृत्तंचरित्रंसीतायाश्चवृत्तंविशिष्यरावणापहारांतंअशंसत् यद्यपिमहाबलत्वाद्विनापिसहायंसर्वनिर्वाहकःतथापिलोकरीतिमनुसृत्यसुग्रीवमैत्रीमुद्दिश्यसर्वमकथयदितिबोद्ध व्यम् वानरःसुग्रीवोपिरामस्यसंबंधितत्सर्वंश्रुत्वा ॥ ६० ॥ स्वसमानदुःखमहाबलसंबंधलाभात्प्रीतःसुग्रीवः अग्निसाक्षिकंअग्निरेवसाक्षाद्द्रष्टायस्यतादृशंसख्यंचकार ततोवैरानुकथनंवालिन

शबर्यापूजितःसम्यग्रामोदशरथात्मजः ॥ पंपातीरेहनुमतासंगतोवानरेणह ॥ ५८ ॥ हनुमद्वचनाच्चैवसुग्रीवेणसमागतः ॥ सुग्रीवायचतत्सर्वंशंस द्रामोमहाबलः ॥ ५९ ॥ आदितस्तद्यथावृत्तंसीतायाश्चविशेषतः ॥ सुग्रीवश्चापितत्सर्वंश्रुत्वारामस्यवानरः ॥ ६० ॥ चकारसख्यंरामेणप्रीतश्चैवाग्नि साक्षिकम् ॥ ततोवानरराजेनवैरानुकथनंप्रति ॥ ६१ ॥ रामायावेदितंसर्वंप्रणयाद्दुःखितेनच ॥ प्रतिज्ञातंचरामेणतदावालिवधंप्रति ॥ ६२ ॥ वा लिनश्चबलंतत्रकथयामासवानरः ॥ सुग्रीवःशंकितश्चासीन्नित्यंवीर्येणराघवे ॥ ६३ ॥ राघवप्रत्ययार्थंतुदुंदुभेःकायमुत्तमम् ॥ दर्शयामाससुग्रीवो महापर्वतसन्निभम् ॥ ६४ ॥ उत्स्मयित्वामहाबाहुःप्रेक्ष्यचास्थिमहाबलः ॥ पादांगुष्ठेनचिक्षेपसंपूर्णंदशयोजनम् ॥ ६५ ॥

स्वचवैरेकिंकारणमितिरामकृतप्रश्नंप्रतिप्रश्नोत्तरमितियावत् ॥ ६१ ॥ रामाययत्प्रत्युत्तरमावेदितव्यंतत्सर्वंरामवद्दारापहारांतकष्टैःसंजातदुःखेनसुग्रीवेणप्रणयाद्रामायआवेदितम् तदातद्वृत्तां तश्रवणानंतरकालेरामेणवालिवधंप्रतिवालिवधमुद्दिश्यअवश्यंवालिनंवधिष्यामीतिप्रतिज्ञातम् ॥ ६२ ॥ वालिनश्चेति तत्रऋष्यमूकपर्वते वानरःसुग्रीवोवालिनोबलंअरुणोदयानंतरंसूर्योद यात्प्रागेवरावणंगृहीत्वाचतुःसमुद्रलंघनादिरूपंकथयामास किंचसुग्रीवःरामोवालितुल्योनवेतिशंकितःसंजातशंकआसीत् ॥ ६३ ॥ राघवेति राघवस्यवालिमहाबलत्वेविश्वासार्थमुत्तमंबल प्रत्यायनोत्तमसाधनंमहापर्वतसदृशंदुंदुभेर्दैत्यस्यशरीरंदर्शयामास यस्यकायइदानीमेतादृशस्तादृशोदुंदुभिर्वालिनाहत्वाएतावद्दूरंप्रक्षिप्तइत्युक्त्वादर्शयामासेत्यर्थः ॥ ६४ ॥ उत्स्मयित्वेति बाहुलकात्स्वार्थेणिच् ईषत्स्मितंकृत्वा ॥ ६५ ॥

बिभेदेति पुनश्चप्रत्ययं जनयन्नूत्स्वबलविश्वासमुत्पादयन् हेतौंशता फलमपिहेतुः तदा एकेनैव महेषुणा सकृत्प्रयोगेणैव सप्तशालान् सप्तशालवृक्षानूतत्समीपस्थं गिरिपर्वतं रसातलं षष्ठमधोलोकंच बिभेद अतलवितलसुतलतलातलमहातलरसातलपातालाइतिसप्त अधोलोकाः एकशालमात्रभेदनेअस्यवालिसाम्यशंका जायेततन्निवृत्त्यर्थमनुक्तानामप्यशालगिरिप्रस्थादीनां भेदनमितिमं तव्यम् ॥ ६६ ॥ ततइति ततः शालभेदानंतरंतेनअतिदुष्करेणकर्मणावालिवधेविश्वासंप्राप्तः प्रीतमनाः कपिराज्यलाभोऽचिरादेवेतिसंतुष्टमनाः किष्किंधाख्यांगुहांरामसहितोजगाम ॥ ६७ ॥ ततइति हरिवरः कपिश्रेष्ठः अगर्जत्सिंहनादंकृतवान् हरीश्वरः वाली ॥ ६८ ॥ अन्विति तदाअंगदमुखादवगतसुग्रीवराममित्रत्वेनसंयुगनिर्गमनंवारयंतींतारांस्वस्त्रियंमयाअकृतापकारोधर्मज्ञो रामोमद्वधंनापकरिष्यतिइत्यादिवचनैरनुमान्यअनुमतिंप्रापय्य कृतानुमतिकांकृत्वेतियावत् सुग्रीवेणसहवालीयुद्धायसमागतोभवत् ॥ तत्रसंयुगे एनंवालिनम् ॥ ६९ ॥ ततइति सुग्रीववचना

बिभेदचपुनःशालान्सप्तैकेनमहेषुणा ॥ गिरिंरसातलंचैवजनयन्प्रत्ययंतदा ॥ ६६ ॥ ततःप्रीतमनास्तेनविश्वस्तःसमहाकपिः ॥ किष्किंधांरामसहितोजगामचगुहांतदा ॥ ६७ ॥ ततोगर्जद्धरिवरःसुग्रीवोहेमपिंगलः ॥ तेननादेनमहतानिर्जगामहरीश्वरः ॥ ६८ ॥ अनुमान्यतदातारांसुग्रीवेणसमागतः ॥ निजघानचतत्रैनंशरेणैकेनराघवः ॥ ६९ ॥ ततःसुग्रीववचनाद्धत्वावालिनमाहवे ॥ सुग्रीवमेवतद्राज्येराघवःप्रत्यपादयत् ॥ ७० ॥ सचसर्वान्समानीयवानरान्वानरर्षभः ॥ दिशःप्रस्थापयामासदिदृक्षुर्जनकात्मजाम् ॥ ७१ ॥ ततोगृध्रस्यवचनात्संपातेर्हनुमान्बली ॥ शतयोजनविस्तीर्णंपुप्लुवेलवणार्णवम् ॥ ७२ ॥ तत्रलंकांसमासाद्यपुरींरावणपालिताम् ॥ ददर्शसीतांध्यायंतीमशोकवनिकांगताम् ॥ ७३ ॥ निवेदयित्वाभिज्ञानंप्रवृत्तिंविनिवेद्यच ॥ समाश्वास्यचवैदेहींमर्दयामासतोरणम् ॥ ७४ ॥

त्वालिनंजहिकाकुत्स्थमयाबद्धोयमंजलिरित्येवंरूपात्सुग्रीववचनात् आहवेरणेप्रत्यपादयत्प्रतिष्ठापितवान् सुग्रीववचनादित्यनेनअनपकारिवालिवधस्यायुक्तत्वेपिमित्रापकारित्वेनतदुक्त्या हननमितिध्वनितम् ॥ ७० ॥ सचेति ससुग्रीवः दिदृक्षुः अन्वेषिषुः सर्वान्वानरान्समानीयसर्वादिशःप्रस्थापयामास ॥ ७१ ॥ ततइति गृध्रस्यसंपातेर्वचनात्तस्यांवसतिवैदेहीदीनाकौशेय वासिनीत्येवंरूपात् पुप्लुवेउल्लंघितवान् इतःसुंदरकांडकथासंग्रहः ॥ ७२ ॥ तत्रेति अशोकवनिकांगतांप्रमदवनस्थितांध्यायंतींराममितिशेषः ॥ ७३ ॥ निवेदयित्वेति अभिज्ञानंअंगुलीयकरूपम् प्रवृत्तिरामसुग्रीवसख्यादिसर्ववृत्तांतम् समाश्वास्यराघवस्यसर्वोपिव्यापारस्त्वत्प्राप्त्येकफलकइत्यादितत्त्वकथनेनवैदेहींसमाश्वास्य गृहीत्वाप्रत्यभिज्ञानमितिपाठेप्रत्यभिज्ञानंसीतालकस्थितचूडामणिरूपम् तोरणंअशोकवनिकागतप्रासादबहिर्द्वारसन्निवेशंचकारादशोकवनंचमर्दयामास ॥ ७४ ॥

पंचेति सेनाग्रगाःसैन्यपतयःपिंगलनेत्रप्रभृतयः मंत्रिसुताःजंबुमाल्यादयः अक्षंरावणसुतंनिष्पिष्यचूर्णीकृत्यग्रहणंइंद्रजित्प्रयुक्तब्रह्मास्त्रकृतबंधनंसमुपागमत्प्राप्तः ॥ ७५ ॥ अस्त्रेणेति मदस्त्र स्यामोघत्वात्तेनबंधनमात्रंचतुःपंचघटिकानंतरंपुनर्मोक्षश्चेतिब्रह्मदत्तवरात् तावताकालेनब्रह्मास्त्रमुक्तमात्मानंज्ञात्वापियदृच्छयाकार्यांतरप्रसंगेनरावणदर्शनापेक्षया मंत्रिणःबद्धानेतॄन्तान्रा क्षसान्मनिवीरःहनुमत्समर्थोपिमर्षयन्क्षमांकुर्वन्रावणसमीपंप्राप्तवानितिशेषः ममर्षेतिवापाठः ॥ ७६ ॥ ततइति ततःरावणदर्शनादिव्यापारानंतरंसीताम्रतेसीतावस्थानप्रदेशंविनालंकांदग्ध्वारा मायप्रियंसीतादर्शनरूपप्रियवार्तामाख्यातुंपुनःरामांतिकंमहाकपिःहनुमान्आयात्आगतः ॥ ७७ ॥ सोऽभीति प्रदक्षिणंप्रदक्षिणादिमुख्यमुपचारम् महात्मानंपरमात्मानम् अमेयात्माअपरि च्छेद्यबलबुद्धिधैर्यादिवैभवः तत्त्वतः सार्वविभक्तिकस्तसिः दृष्टासीतेतितत्त्वंन्यवेदयदित्यर्थः अत्रदृष्टेतिपदस्यप्रथमप्रयोगोरामस्यसीतेतिश्रवणेतद्विषयक्रियापदसंशयोमाभूदित्यर्थः ॥ ७८ ॥

पंचसेनाग्रगान्हत्वासप्तमंत्रिसुतानपि ॥ शूरमक्षंचनिष्पिष्यग्रहणंसमुपागमत् ॥ ७५ ॥ अस्त्रेणोन्मुक्तमात्मानंज्ञात्वापैतामहाद्वरात् ॥ मर्षयन्राक्ष सान्वीरोयंत्रिणस्तान्यदृच्छया ॥ ७६ ॥ ततोदग्ध्वापुरींलंकामृतेसीतांचमैथिलीम् ॥ रामायप्रियमाख्यातुंपुनरायान्महाकपिः ॥ ७७ ॥ सोऽभिग म्यमहात्मानंकृत्वारामंप्रदक्षिणम् ॥ न्यवेदयदमेयात्मादृष्टासीतेतितत्त्वतः ॥ ७८ ॥ ततःसुग्रीवसहितोगत्वातीरंमहोदधेः ॥ समुद्रंक्षोभयामासशरै रादित्यसन्निभैः ॥ ७९ ॥ दर्शयामासचात्मानंसमुद्रःसरितांपतिः ॥ समुद्रवचनाच्चैवनलंसेतुमकारयत् ॥ ८० ॥ तेनगत्वापुरींलंकांहत्वारावणमाह वे ॥ रामःसीतामनुप्राप्यपरांव्रीडामुपागमत् ॥ ८१ ॥

ततइति ततोयुद्धकांडकथासंग्रहः क्षोभयामास लंकागमनमार्गदानेऔदासीन्यात्समुद्रमापातालमाकुलीचकारेत्यर्थः ॥ ७९ ॥ दर्शयामासेति समुद्रःशरक्षोभितइतिशेषः समुद्रवचनात् ए षसेतुमहोत्साहःकरोतुमयिवानरः तमहंधारयिष्यामीत्येवंरूपान्नलंसेतुंअकारयत्नलेनसेतुंकारितवानित्यर्थः ॥ ८० ॥ तेनेति तेनसेतुना आहवेयुद्धे अत्रक्वचिन्मध्येऽभ्यषिचदित्यादिश्लो कद्वयम् अभ्यषिचत्सलंकायांराक्षसेंद्रंविभीषणम् कर्मणातेनमहतादेवाइंद्रपुरोगमाः ॥ १ ॥ सदेवर्षिगणास्तुष्टाराघवंतेऽभ्यपूजयन् तथापरमसंतुष्टैःपूजितःसर्वदैवतैः ॥ २ ॥ लंकायांराज्येरा क्षसेंद्रंतस्यव्यवहारविषयोभवतियथातथाभ्यषिचत् तेनकर्मणारावणहननादिरूपेण सदेवर्षिगणादेवर्षिसहितागणाः अर्थादृषिगणास्तत्सहितादेवाइत्यर्थः तदिदंश्लोकद्वयंपूजितःसर्वदैवतैः अभिषिच्यचेत्यनेनपुनरुक्तमितिप्रक्षिप्तमेवबोध्यम् सीतांप्राप्यअनुपश्चात्परांव्रीडांरक्षोगृहेचिरोषितांपुनर्गृहीतवानितिलोकापवादशंकयाअतिशयितांलज्जामुपागमत् ॥ ८१ ॥

नामिति जनसंसदिवानरराक्षससभायां परुषंमर्मस्पृकूदीपोनेत्रातुरस्येवप्रतिकूलासिमेदृढमित्यादिवचनमुवाचलोकस्यनास्यांरामस्यकामादिदोषनःपुनर्जिघृक्षास्तीतिप्रत्यायनार्थं अमृष्यमा
णापातिव्रत्यसंशयजनितमुक्तवचनम् सतीत्यनेनपातिव्रत्यबलान्निजेच्छयाअग्निप्रादुर्भावनशक्तिमत्त्वद्योतनमितिकेचित् लक्ष्मणप्रादुर्भावितोज्वलनइत्यन्ये ॥ ८२ ॥ ततइति अग्निवचनात्
विशुद्धभावांनिष्पापांप्रतिगृह्णीष्वराघवेत्येवंरूपात् विगतकल्मषांनिष्पापांस्वयंज्ञात्वालोकस्यचतथात्वंप्रत्याय्यसीतामंगीचकारेतिशेषः क्वचित्तुअपहीदमलांरामोवचनाच्चगुरोस्तदेतिपठ्यते
तत्रामलामितिपुनरुक्तमापद्यते ॥ ८३ ॥ तेनकर्मणासीताप्रत्यानयनांतेनकर्मणा ऋषिदेवगणसहितचराचरप्रजासहितंत्रैलोक्यंतुष्टंतुतोष तत्संतोषेणचप्रहृष्टःसंतोषवशादेवसर्वदैवतैः पूजितश्च
रामोबभौ अत्रकेचित्अचराणांवृक्षादीनांरावणकृतपीडापरिज्ञानाभावेनरावणवधजन्यसंतोषाभावादेवंव्याचक्षते देवऋषिगणमितिपाठः ऋत्यकइतिप्रकृतिभावः तत्रदेवगणाइंद्रादयः ऋ

तामुवाचततोरामःपरुषंजनसंसदि ॥ अमृष्यमाणासासीताविवेशज्वलनंसती ॥ ८२ ॥ ततोग्निवचनात्सीतांज्ञात्वाविगतकल्मषाम् ॥ कर्मणातेन
महतात्रैलोक्यंसचराचरम् ॥ ८३ ॥ सदेवर्षिगणंतुष्टंराघवस्यमहात्मनः ॥ बभौरामःसंप्रहृष्टःपूजितःसर्वदैवतैः ॥ ८४ ॥ अभिषिच्यचलंकायांराक्ष
सेंद्रंविभीषणम् ॥ कृतकृत्यस्तदारामोविज्वरःप्रमुमोदह ॥ ८५ ॥ देवताभ्योवरंप्राप्यसमुत्थाप्यचवानरान् ॥ अयोध्यांप्रस्थितोरामःपुष्पकेणसुहृ
द्वृतः ॥ ८६ ॥ भरद्वाजाश्रमंगत्वारामःसत्यपराक्रमः ॥ भरतस्यांतिकेरामोहनूमंतंव्यसर्जयत् ॥ ८७ ॥

षिगणाःविश्वामित्रादयः एतद्रूपंत्रैलोक्यंसचराचरम् अत्रचरप्रजाःगतिभक्षणमात्रप्रधानाः तिर्यक्स्रोतसःपशुपक्ष्यादयऐरावतादयः अचरप्रजाःचरप्रजाभिन्नाज्ञानयुक्तप्रजाअर्वाक्स्रोत
सोमनुष्याः एवंचस्वस्वशेषतिर्यगर्वाक्स्रोतोयुतंदेवर्षिगणरूपंत्रैलोक्यंतुष्टम् रावणस्यमर्त्योपेक्षित्वात्प्राधान्येनदेवर्षिग्रहणमित्याहुः ॥८४॥ अभिषिच्येति राक्षसेंद्रंभावितत्त्वव्यवहारविषयम्
कृतकृत्यःप्राक्प्रतिज्ञातविभीषणाभिषेकलक्षणकृत्यस्यापिकृतत्वात्कृतकृत्यः अतएवविज्वरः विगतावश्यकर्तव्यविषयचिंतातापः प्रमुमोदेतिच्छांदसंपरस्मैपदम् ॥ ८५ ॥ देवताभ्यइति सुप्तो
त्थितवदुत्तिष्ठंतुवानराइत्येवंरूपंवरंरावणवधजनितहर्षवशात्स्वदिदृक्षयासमागताभ्योदेवताभ्यःप्राप्यसुहृद्भिःसुग्रीवविभीषणादिभिःसंवृतःपुष्पकेणअयोध्यामुद्दिश्यप्रस्थितःजगाम ॥ ८६ ॥
भरद्वाजेति चतुर्दशेतुसंपूर्णेवर्षेहनिरघूत्तम नद्रक्ष्यामियदित्वांतुप्रवेक्ष्यामिहुताशनमितिभरतेनप्रतिज्ञातत्वात्भरद्वाजाश्रमेचतुर्दशसमासमाप्त्यनंतरंमुनिवचनेनएकदिनविलंबस्यप्राप्तत्वात्स्वागम
नप्रबोधनायहनुमद्विसर्जनं यद्वा महत्यावानरसेनयासहाकस्मादागमनेभरतादेःशंकामाभूदितिनद्विसर्जनम् ॥ ८७ ॥

पुनरिति पुष्पकादवतीर्णत्वात्पुनस्तत्पुष्पकंसमारुह्य आख्यायिकांपूर्वंदत्तविषयांकथां भरद्वाजाश्रमारोहात्पूर्वमिवजल्पन्कथयन् सुग्रीवेति विभीषणादेरुपलक्षणम् ॥ ८८ ॥ नंदिग्रामइति नंदिग्रामेभ्रातृभिःसहस्वस्यापिव्रतप्रयुक्तांजटांहित्वात्यक्त्वारामःसीतामनुप्राप्यमुनिवेषत्यागेनसीतानुरूपंरूपंप्राप्य यद्वा मुनिवेषत्यागेनत्वदृष्टांसीतांप्राप्यप्राप्तविसृष्टंराज्यंपुनरवाप्तवान् ॥८९॥ एतदंतंचरितंतत्त्वेनोपदिश्यदेवर्षिरतःपरमुत्तरकांडविषयंभविष्यत्त्वेनोपदिशति प्रहृष्टेति अनेनचरावणवधानंतरंरामेराज्यंप्रशासतिसतिवाल्मीकेर्नारदंप्रतिप्रश्नइतिज्ञायते प्रहृष्टःप्रातिस्विकपुत्रपश्वादिसंपत्त्या मुदितःक्षोभराहित्येनमुदितांतःकरणः लोकःसर्वप्रजाः तुष्टःबहुप्रदाद्भगवतःसांसारिकपारमार्थिकार्थलाभात्तुष्टः अतएवपुष्टःदारिद्र्यकार्श्यरहितः आमयोमनःपीडा रोगोदेहजोव्याधिः दुर्भिक्षणचोरादिभयेनचरहितः भविष्यतीतिशेषः यद्वा रामविरहेणदुःखितोराममिलनेनतुष्टः तथातद्विरहेणकृशःतन्मिलनादेवपुष्टः ॥ ९० ॥ नेति स्वपितृषुसत्सु

पुनराख्यायिकांजल्पन्सुग्रीवसहितस्तदा ॥ पुष्पकंतत्समारुह्यनंदिग्रामंययौतदा ॥ ८८ ॥ नंदिग्रामेजटांहित्वाभ्रातृभिःसहितोनघः ॥ रामःसीतामनुप्राप्यराज्यंपुनरवाप्तवान् ॥ ८९ ॥ प्रहृष्टमुदितोलोकस्तुष्टःपुष्टःसुधार्मिकः ॥ निरामयोह्यरोगश्चदुर्भिक्षभयवर्जितः ॥ ९० ॥ नपुत्रमरणंकेचिद्द्रक्ष्यंतिपुरुषाःक्वचित् ॥ नार्यश्चाविधवानित्यंभविष्यंतिपतिव्रताः ॥ ९१ ॥ नचाग्निजंभयंकिंचिन्नाप्सुमज्जंतिजंतवः ॥ नवातजंभयंकिंचिन्नापिज्वरकृतंतथा ॥ ९२ ॥ नचापिक्षुद्भयंतत्रनतस्करभयंतथा ॥ नगराणिचराष्ट्राणिधनधान्ययुतानिच ॥ ९३ ॥ नित्यंप्रमुदिताःसर्वेयथाकृतयुगेतथा ॥ अश्वमेधशतैरिष्ट्वातथाबहुसुवर्णकैः ॥ ९४ ॥ गवांकोट्ययुतंदत्वाविद्वद्भ्योविधिपूर्वकम् ॥ असंख्येयंधनंदत्वाब्राह्मणेभ्योमहायशाः ॥ ९५ ॥

यज्जीवत्स्वितिशेषः अविधवाभर्त्रनुगमनाद्ध्रुवांशपुत्रसद्भावाद्वेतिशेषः ॥ ९१ ॥ नचाग्निजमितिपादत्रयेणआधिदैविकदुःखनिवृत्तिरुच्यते चतुर्थेनाध्यात्मिकनिवृत्तिः ॥ ९२ ॥ भौतिकदुःखाभावमाह नचापीति क्षुद्भयंक्षुदुपशमोपायाभावजंनचनैवभविष्यतीत्यनुषंगः ॥ ९३ ॥ नित्यमिति कृतयुगेस्वाभाविकादधर्मासंबंधान्नित्यंप्रजामोदः त्रेतायांअधर्मस्यपादांशेनसंबंधेपिरामपालनवैभवात्तदनाक्रमेणनित्यप्रमोदत्वं अथरामस्यभाविवृत्तांतरमाह अश्वेति शतशब्दोनंतवाची इष्ट्वादत्वेत्यादिस्वरूपकथनंनतुतेषांरामस्यस्वलोकप्राप्तिप्रतिहेतुतेतिबोध्यं यत्तुकतककृताश्वमेधाद्यनुष्ठानस्यमानुषोपाधिप्रयुक्ताघवर्ज्याघशमनद्वाराब्रह्मलोकप्राप्तौहेतुत्वमित्युक्तंतन्न भगवदवताराणांपुण्यपापसंबंधस्यसर्वतंत्रविरुद्धत्वात् अश्वमेधाद्यनुष्ठानंतुलीलामात्रंलोकोपदेशायेत्यन्यत्रविस्तरः ॥ ९४ ॥ ९५ ॥

राजवंशानिति कामरूपकान्यकुब्जादिनत्तद्राज्यपदस्थान्राजवंशान् शतगुणान्अनेकगुणवृद्धिर्यथाभवतितथास्थापयिष्यति शाश्वततत्तद्राज्यप्रदानेनेतिशेषः चातुर्वर्ण्यंचत्वारोवर्णाः स्वार्थे ष्यञ् नियोक्ष्यति शंकितस्वधर्मभ्रंशमपीतिशेषः ॥ ९६ ॥ अवतारत्यागकालमाह दशेति उपासित्वानित्यवदनुष्ठायेत्यर्थः ब्रह्मलोकंमायिकंवैकुंठादिलोकं अनेननिजनित्यकर्मयोगोपे तस्यैवसाक्षात्परंपरयाब्रह्मलोकप्राप्तिरितिध्वनिः ॥ ९७ ॥ अथनारदःस्वोपदिष्टसंक्षेपरामायणपाठफलमुपदिशति इदमिति पवित्रंचित्तशोधनं पुण्यंसकलपुण्यसाधनं वेदैःसंमितंसकल रहस्यवेदार्थप्रतिपादकत्वाद्वेदतुल्यम् ॥ ९८ ॥ सर्वपापमोक्षद्वारामोक्षफलकत्वमुपपादितं पुण्यस्यापित्रिगुणात्मकत्वेनपापतुल्यतयाहेयत्वादितिमुमुक्षुफलमुद्दिश्यमुमुक्षूणामपिप्रवृत्तये आह एतदिति आयुष्यंआयुःकरणं आख्यानमाख्यायिका रामोऽयनंप्रतिपाद्योयस्यतद्रामायणं संज्ञात्वाण्णत्वं गणोदासीदासादयःतैःसहइहऐहिकान्भोगान्भुक्त्वाप्रेत्यमृत्वास्वर्गेमही

राजवंशाञ्शतगुणान्स्थापयिष्यतिराघवः॥ चातुर्वर्ण्यंचलोकेस्मिन्स्वेस्वेधर्मेनियोक्ष्यति॥ ९६॥ दशवर्षसहस्राणिदशवर्षशतानिच॥ रामोराज्य मुपासित्वाब्रह्मलोकंप्रयास्यति॥ ९७॥ इदंपवित्रंपापघ्नंपुण्यंवेदैश्चसंमितम्॥ यःपठेद्रामचरितंसर्वपापैःप्रमुच्यते॥ ९८॥ एतदाख्यानमायुष्यंपठ न्रामायणंनरः॥ सपुत्रपौत्रःसगणःप्रेत्यस्वर्गेमहीयते॥ ९९॥ पठन्द्विजोवागृषभत्वमीयात्स्यात्क्षत्रियोभूमिपतित्वमीयात्॥ वणिग्जनःपण्यफ लत्वमीयाज्जनश्चशूद्रोपिमहत्त्वमीयात्॥ १००॥ ॥हरिःओम्॥ ॥इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येबालकांडेप्रथमःसर्गः॥ १॥ नारदस्यतुतद्वाक्यंश्रुत्वावाक्यविशारदः॥ पूजयामासधर्मात्मासहशिष्योमहामुनिं॥ १॥

यतेस्वर्गिभिःसत्कृतोमोदतेइत्यर्थः पठन्नितिहेतौशता ॥ ९९ ॥ पठन्निति द्विजःमुख्यद्विजोब्राह्मणःपठन्वागृषभत्वंशब्दब्रह्मपारगत्वंप्राप्नुयात् स्यादितियद्यर्थे यदिक्षत्रियःतदारामायणंपठन् नृपतित्वमाप्नुयात् पण्यैःक्रयद्रव्यैःसाध्यंमूलाद्द्विगुणत्रिगुणवृद्ध्यादिरूपंफलंयस्यतत्त्वंप्राप्नुयात् धनसमृद्धिप्राप्नुयादितिफलितोर्थः शूद्रोपिजनःत्रैवर्णिकदासः अत्रशृण्वन्नित्यध्याहारः महत्त्वंद्विजेतरसर्वप्रजाभ्यःश्रेष्ठ्यंमहत्त्वंदेहांतेस्वोपरितनवर्णप्राप्तिलक्षणंचमहत्त्वंप्राप्नुयात् अस्यगायत्र्यर्थप्रतिपादकत्वध्वननायगायत्र्यादिमाक्षरेणोपक्रम्ययादितिगायत्र्यंतिमाक्षरेणसमा पितवान् ॥ १०० ॥ ॥ इतिश्रीरा०वा०आ०बालकांडेप्रथमःसर्गः ॥ १ ॥ ॥ ७ ॥ ॥ नारदस्येति विशारदःविशिष्टाव्याकरणसंस्कारादिविशेषवतीविचित्रार्थाचशारदावाणीयस्यसः सहशिष्यइत्यत्रवोपसर्जनस्येतिवैकल्पिकत्वात्सत्वाभावः प्रश्नानुरूपंवाक्यगुणसमूहवच्चउत्तरंसम्यकृदत्तमितिपूजयामासअतिविचित्रंभगवद्वचनमित्यादिशब्दैः ॥ १ ॥

यथावदिति आपृच्छ्यैवसाधुयामीत्युक्त्वैव अभ्यनुज्ञातः यथासुखंविहरतामितिवाल्मीकिनाअनुगमनपूर्वंअभ्यनुज्ञातः अनेनगुरुशिष्ययोःस्नेहभक्तिप्रकाशनं विहायसमितिपुंल्लिंगम् ॥ २ ॥ सइति सवाल्मीकिःतस्मिन्नारदेदेवलोकंगतेसतिमुहूर्तंस्वाश्रमेस्थित्वापश्चान्माध्याह्निकार्थंजाह्नव्याअविदूरतःसमीपेवर्तमानंतमसातीरंजगाम यत्तुमुहूर्तमात्रेणदेवलोकंगतइत्यन्वयइतितन्न लांदसत्वकल्पनेमानाभावात् अव्ययत्वकल्पनस्याप्यगतिकगतिकत्वाच्च मुहूर्तादितिपाठस्तुकल्पितः ॥ ३ ॥ ४ ॥ अकर्दममिति अवतरणप्रदेशस्यपंकराहित्यमनेनोच्यते तीर्थंऋषिजुष्टजलं निशामयपश्य अतएवशमोदर्शनइतिमित्वाभावादह्रस्वत्वं रमणीयत्वेहेतुः प्रसन्नांबुिति सन्मनुष्यचित्तस्यकामादिदोषराहित्येननित्यप्रसन्नत्वात्सादृश्यम् ॥ ५ ॥ न्यस्यतामिति वल्कला

यथावत्पूजितस्तेनदेवर्षिर्नारदस्तथा ॥ आपृच्छ्यैवाभ्यनुज्ञातःसजगामविहायसम् ॥ २ ॥ समुहूर्तंगतेतस्मिन्देवलोकंमुनिस्तदा ॥ जगामतमसातीरंजाह्नव्यास्त्वविदूरतः ॥ ३ ॥ सतुतीरंसमासाद्यतमसायामुनिस्तदा ॥ शिष्यमाहस्थितंपार्श्वेदृष्ट्वातीर्थमकर्दमम् ॥ ४ ॥ अकर्दममिदंतीर्थंभरद्वाजनिशामय ॥ रमणीयंप्रसन्नांबुसन्मनुष्यमनोयथा ॥ ५ ॥ न्यस्यतांकलशस्तातदीयतांवल्कलंमम ॥ इदमेवावगाहिष्येतमसातीर्थमुत्तमम् ॥ ६ ॥ एवमुक्तोभरद्वाजोवाल्मीकेनमहात्मना ॥ प्रायच्छतमुनेस्तस्यवल्कलंनियतोगुरोः ॥ ७ ॥ सशिष्यहस्तादादायवल्कलंनियतेंद्रियः ॥ विचचारहपश्यंस्तत्सर्वतोविपुलंवनम् ॥ ८ ॥ तस्याभ्याशेतुमिथुनंचरंतमनपायिनम् ॥ ददर्शभगवांस्तत्रक्रौंचयोश्चारुनिःस्वनम् ॥ ९ ॥ तस्मात्तुमिथुनादेकंपुमांसंपापनिश्चयः ॥ जघानवैरनिलयोनिषादस्तस्यपश्यतः ॥ १० ॥ तंशोणितपरीतांगंचेष्टमानंमहीतले ॥ भार्यातुनिहतंदृष्ट्वारुरावकरुणांगिरम् ॥ ११ ॥

इतिपाठेच्छांदसंस्त्रीत्वं वल्कलमस्त्रियामितिनिघंटुः इदमेवअत्यासन्नमपिगंगातीर्थंमध्याह्नकालातिक्रमादगत्वेतिशेषः ॥ ६ ॥ एवमिति वाल्मीकेनेतितस्येदमित्यण् प्रायच्छतेतिच्छांदसं नियतःसेवापरः ॥ ७ ॥ सइति नियतेंद्रियःजितेंद्रियः विचचारअनुष्ठानयोग्यैकांतदेशनिरीक्षणायेतिशेषः ॥ ८ ॥ तस्येति तस्यवनस्यअभ्याशेसमीपेचरन्भगवान्तद्वनाभ्याशएवचरंतं अनपायिनंआधिव्याधिरहितंअतएवचारुनिःस्वनंक्रौंचयोर्मिथुनंददर्श चरंतंअनपायिनमित्यार्षम् ॥ ९ ॥ तस्मादिति मिथुनाद्विभक्तंएकंपुमांसंपापनिश्चयःतद्धननरूपपापनिश्चयः अतएव वैरनिलयःनिजानपकारिष्वपिप्राणिषुअकारणवैराश्रयःसइवनिषादःतस्यपश्यतःतंपश्यंतंअनादृत्यजघान पश्यतइतिषष्ठीचानादरे ॥ १० ॥ तमिति चेष्टमानंलुठंतंनिहतंदृष्ट्वानिषादेनेतिशेषः करुणांगिरंदीनंशब्दं रुरावअकरोदित्यर्थः पाठांतरेखेपरिभ्रमा खेआकाशेपरिभ्रमणंकरोतिसेत्यर्थः ॥ ११ ॥

वियुक्तेति सहचारिणाअहोरात्रमितिशेषः ताम्रशीर्षेणकुक्कुटादिवत्ताम्रवर्णशीर्षगतचूडायुक्तेन मत्तेनकामसंभोगवशादितिशेषः अतएवपत्रिणासंभोगकालत्वाद्विततपक्षवता सहितेनस्वसंगते
नतेनापूर्णरतित्वादत्यंतंशोकः इत्थंभूतेनपतिनावियुक्तारुरावेतिपूर्वेणान्वयः ॥ १२ ॥ तथाविधंकामभोगवशम् धर्मात्मनःदयादाक्षिण्याहिंसादिधर्मप्रवणचित्तस्य कारुण्यंदया समपद्यतसम
जायत ॥ १३ ॥ ततइति करुणवेदित्वात्संजातकरुणत्वात् ह्रस्वश्छांदसः विदेःसत्तार्थाल्लाभार्थाद्वाणिनिः रुदतींक्रौंचींनिशाम्यदृष्ट्वा अयंकाममोहितपक्षिवधरूपःअधर्मएवेतिनिश्चित्य क्रौं
चीविषयकरुणावत्त्वेनअर्थात्पापकारिणिनिषादेआविर्भूतरोषतयाइदंवक्ष्यमाणंवचनमब्रवीत् ॥१४॥ मानिषादेति क्रौंचहंतृप्रत्यक्षदृश्यमाननिषादशापरूपोर्थस्तुस्पष्टएव किंच मालक्ष्मीर्नि
षीदत्यस्मिन्नितिसंबोधनंधनंमानिषाद यद्यस्माद्धेतोःक्रौंचमिथुनात्मंदोदरीरावणरूपात्एकंकाममोहितंरावणंअवधीःहतवानसितस्मात्त्वंशाश्वतीःसमाःअनेकान्संवत्सरान्अद्वितीयांप्रतिष्ठांअ
खंडैश्वर्यानंदावाप्तिअगमःप्राप्नुहि तेनार्थतःशब्दतोपिमनाक्काव्यार्थसूचनमित्युक्तेःश्रीरामकृतरावणवधरूपकाव्यार्थःकाव्यादौअवश्यकर्तव्याशीर्वादश्चसूचितइतितीर्थः कतककृत्तु प्रत्यक्ष

वियुक्तापतिनातेनद्विजेनसहचारिणा ॥ ताम्रशीर्षेणमत्तेनपत्रिणासहितेनवै ॥ १२ ॥ तथाविधंद्विजंदृष्ट्वानिषादेननिपातितम् ॥ ऋषेर्धर्मात्मनस्त
स्यकारुण्यंसमपद्यत ॥ १३ ॥ ततःकरुणवेदित्वादधर्मोयमितिद्विजः ॥ निशाम्यरुदतींक्रौंचीमिदंवचनमब्रवीत् ॥ १४ ॥ मानिषादप्रतिष्ठांत्वमग
मःशाश्वतीःसमाः ॥ यत्क्रौंचमिथुनादेकमवधीःकाममोहितम् ॥ १५ ॥

संहंतृनिषादशापरूपोर्थस्तुस्पष्टएव किंच नितरांसदेवर्षिगणंत्रैलोक्यंसादयतिपीडयतीतिनिषादःतस्यसंबुद्धिःहेनिषादरावण यद्यस्मात्क्रौंचमिथुनात् अल्पीभावार्थकुंचेःपचाद्यचूकुंचं त
तःस्वार्थिकोणक्रौंचम् राज्यक्षयवनवासादिदुःखेनअत्यल्पीभूतंपरमकार्श्यंगतंयत्मिथुनंसीतारामरूपंतस्मात् एकंसीतारूपंयस्मादवधीःवधाभ्यधिकपीडांप्रापितवानसि तस्मात्त्वंप्रतिष्ठांयालं
कापुरेपुत्रपौत्रभृत्यगणवैशिष्ट्येनब्रह्मणाप्रतिष्ठादत्तानांअतःपरंमागमइतिकाव्यार्थसूचनम् त्रैलोक्यस्यपरममंगलरूपंचेदंसत्यसरस्वत्यापुरस्तादाविर्भावितमित्याह अत्रेदमवधेयम् रावणवधे
जातेअयोध्याराज्यप्राप्त्यनंतरंनारदंप्रतिप्रश्नइतिस्वयमेवव्याख्यातत्वात्तदुत्तरकालिकैतत्श्लोकस्यएवंविधिघटितस्योक्तार्थस्यकतकमतेकथंसंगतिः कथंवासर्वज्ञासत्यसरस्वतीभूतमर्थमाशा
स्यत्वेननिर्दिशेदिति तीर्थव्याख्यानेपिइदंकाव्यार्थसूचनंकविनाकार्यमितितदुक्तसंमतिश्लोकार्थाद्गम्यते तत्रवाल्मीकेस्तथातात्पर्येकिमिदंव्याहृतंमयाइत्युक्तेरसंगतेः नचकिमिदमित्यस्यप

संगच्चेत्यर्थः तदप्येषश्लोकोत्तिगीतोमरुतःपरिवेष्टारोमरुत्तस्यावसन्गृहेइत्यादिबहुशःश्रुतिमूपलंभेनेदृशाक्षरसन्निवेशस्यश्लोकत्वेनमुनेरज्ञानमित्यस्यात्यंतमनुचितत्वात् प्राक्तननारदऋषिसं
वादस्यापिश्लोकरूपतयातत्रैवसंदेहकरणौचित्याच्च तत्प्रश्नोत्तरंसर्वंकेवलसंस्कृतैरेव एतत्श्लोकोत्तरमेवश्लोकैस्तस्यापिनिबंधनमितिकल्पनातुनयुक्ता मानाभावात् अन्यथोपपत्तेश्च अथ
मत्वबुद्धिपूर्वकथितवचनस्येदृशेर्थेतात्पर्यंसंभवस्याप्यभावाच्च माङोयोगाभावेऽगमइत्येतावन्मात्रेणलुङ्भूतत्वस्यैवप्रतीत्याआशिषोऽप्रतीतेश्च एतत्श्लोकनिर्गमकालेकवेःकाव्यंकरिष्या
मीतिबुद्धेरप्यसंभवाच्च ब्रह्मोपदेशानंतरमेवहितथाबुद्धिर्वाल्मीकेः ममनुप्रतिभाति नारदात्स्वगुणश्रवणानंतरंमुनेःस्ववर्णनेच्छांज्ञात्वास्वचरित्रस्यचकरुणारसमयत्वेनतत्प्रधानकाव्येऽतिकरुणचि
त्तस्यैवाधिकारात्कृपेःकरुणचित्तत्वजिज्ञासयेवपूर्वंभृगुदत्तशापस्यपुनरुक्तत्वकरणेनदार्ढ्यंसंपादनायचमुनेरीक्षणायचभगवान्रामएवनिषादरूपेणपश्यतोमुनेःपुरतस्तमनादृत्यक्रौंचंरक्षोवि
शेषरूपंजघान ततस्तदिच्छावशादंतर्यामितयातथाप्रेरणाच्चमहानधर्मोयमनेनकृतइतिरुषापापमनेनिषादयत्त्वंकाममोहितंक्रौंचमिथुनात्मिथुनीभूतात्क्रौंचयुगात् विभक्तमेकमवधीःतत्त्वम
पिशाश्वतीःसमाआयुःशेषभूतानिबहूनिवर्षाणिप्रतिष्ठांस्वस्त्रीसाहित्येनस्थितिंइहलोकेमागमःमाप्राप्नुहिकिंत्वत्यल्पकालमेवतथावासएकमिथुनीभावपर्यंतमितियावत् इतिशप्तवान्मुनिःएकम
वधीरित्युक्तेर्ययासत्वयास्त्रीविरहितःकृतःसाचनायकहीनाकृतातथात्वमपिप्रिययास्वभार्ययाहीनोभवसाचत्वयाहीनाभवत्वितिपर्यवसानम् अगमइत्यडागमस्तुमाङ्योगेप्यार्षत्वात् तस्यर
क्षोरूपत्वंतुएतदुत्तरंब्रह्मणःसकाशात्सकलरामवृत्तांतज्ञानवरलाभोत्तरकालंकृतेनतस्मात्तुमिथुनादेकमितिश्लोकेवैरनिलयइतिविशेषणेनसूचितम् रक्षःस्वेवतस्यलोकदृष्ट्यावैरनिलयत्वप्रसिद्धेः
निषादस्यापिप्राणिषुनवैरंकिंत्वाहाराद्यर्थमेवतद्धननमितिप्रसिद्धेश्च अतएवारण्यकांडेमृगयाव्यसनमुपक्रम्य विनावैरंचरौद्रेति तृतीयंयदिदंरौद्रंपरप्राणाभिहिंसनम् निर्वैरंक्रियतेमोहात्तच्चते
समुपस्थितमितिचवक्ष्यति त्रीण्येवव्यसनान्यत्रकामजानिभवंतुतेइतिचोपक्रमेउक्तम् नन्वीदृशोर्थस्त्वयाकेनमानेननिर्णीतइतिचेच्छृणु ऋष्यक्षरस्वारस्यात् तच्चाग्रेस्फुटम् तत्रसंदेहश्चेत्स्वांत
र्यामिणंपृच्छ तदुक्तंपाद्मेशिवशिवासंवादेरामवैभववर्णनेचतुर्विंशेअध्याये ततोजानपदःकश्चित्पामरःकाष्ठविक्रयी स्ववधूगर्हणद्वारारावणस्यगृहोषिताम् गर्हयामासवैदेहींदुर्वृत्तोलोकनिंदकः
तच्छ्रुत्वादेविचारेभ्योज्ञातोलोकापवादनः आहूयलक्ष्मणंप्राहरामोराजीवलोचनः शृणुमेवचनंगुह्यंसीतासंत्यागकारणम् वाल्मीकिनाथभृगुणाशप्तोस्मिकिललक्ष्मण तस्मादेनांत्यजाम्यद्यज
नेनिंद्यात्रकारणमिति तथास्कांदेपातालखंडेअयोध्यामाहात्म्येतत्रत्यतीर्थाश्रमवर्णनप्रस्तावे शापोत्त्यात्तदिसंतप्तंप्राचेतसमकल्मषम् प्रोवाचवचनंब्रह्मातत्रागत्यसुसत्कृतः ननिषादःसवैरामो
मृगयांचर्तुमागतः तस्यसंवर्णनेनैवसुश्लोक्यस्त्वंभविष्यसि इत्युक्त्वातंजगामाशुब्रह्मलोकंसनातनः ततःसंवर्णयामासराघवंग्रंथकोटिभिः कोटिभिःशतकोटिभिः चरितंरघुनाथस्यशतकोटिप्र
विस्तरमित्यन्यत्रोक्तेः तच्चसंपूर्णंब्रह्मलोकेइत्यैतिह्यम् इहतुकुशलवोपदिष्टाचतुर्विंशतिसहस्रीत्यलम् योगवासिष्ठेतुशापांतराण्यप्युक्तानितथाहि सनत्कुमारोनिष्कामअवसद्ब्रह्मसद्मनि वैकुंठा
दागतोविष्णुस्त्रैलोक्याधिपतिःप्रभुः ब्रह्मणापूजितस्तत्रसत्यलोकनिवासिभिः विनाकुमारंतंदृष्ट्वाह्युवाचप्रभुरीश्वरः सनत्कुमारस्तब्धोसिनिष्कामोगर्वचेष्टया अतस्त्वंभवकामार्तःशरजन्मेतिना
मतः तेनापिशापितोविष्णुःसर्वज्ञत्वंतवास्तियत् किंचित्कालंहितत्त्यक्त्वात्वमज्ञानीभविष्यसि शापितःशप्तः किंचित्कालमवतारांतरेऽत्यल्पकालंतत्त्यक्त्वातद्रूपंत्यक्त्वाअज्ञानीसइव तथा भृगुर्भा

यांहतांदृष्ट्वाप्रोवाचक्रोधमूर्छितः विष्णोतवापिभार्यायावियोगोहिभविष्यति तथा वृंदयाशापितोविष्णुश्छलनंयत्त्वयाकृतम् अतस्त्वंस्त्रीवियोगंहिवचनान्ममयास्यसि श।पितःशप्तः छलनंप तिवेषणसंभोगरूपम् तथा भार्याहिदेवदत्तस्यपयोष्णीतीरसंस्थिता नृसिंहवेषधृग्विष्णुंदृष्ट्वापंचत्वमागता तेनशप्तोहिनृहरिर्दुःखार्तःस्त्रीवियोगतः तवापिभार्ययासार्धंवियोगोहिभविष्यतीति दुःखार्तः तृतीयार्थेआर्षीप्रथमा दुःखार्तेनेत्यर्थः ताराशापोपिकिष्किंधाकांडेतत्रैववक्ष्यतइत्यलंविस्तरेण प्राचेतसेनमुनिनारामोराजीवलोचनः तमसोपवनेशप्तोवेषधृक्जानकीपतिः ॥ १ ॥ श्रीरामःप्राकृतांलीलांस्वीयांवर्णयितुंतदा मंदोदर्याःपतिःक्रूरःक्रौंचवद्विनिपातितः ॥२॥ अंडजंनिहतंदृष्ट्वामुनिःशापमथाददौ चिरंप्रतिष्ठामाभूत्तेनिषादभुविहिंसक ॥३॥ शापंश्रुत्वैवसर्वात्मात त्रैवांतरधीयत शोकाक्रांतस्तुवाल्मीकिर्ब्रह्मणाशुसुबोधितइति ॥४॥ त्यक्त्वाजीर्णदुकूलवद्वसुमतींबद्ध्वांऽबुधिंबिंदुवद्घ्राणाग्रेणजरत्कपोतकइवव्यापादितोरावणः लंकाकापिविभीषणायसहसा मुद्रेवहस्तेर्पिताश्रुत्वैवंरघुनायकस्यचरितंकोवानरोनांचति ॥५॥ १५ ॥ तस्येति मयामुनिनाशांतेनतपस्विनाशकुनिशोकपीडितेनेदमीदृशंक्रूरंतपोनाशकरंकिंव्याहृतमितिवीक्षतोंतर्यामिप्रेरण

तस्येत्थंब्रुवतश्चिंताबभूवहृदिवीक्षतः ॥ शोकार्तेनास्यशकुनेःकिमिदंव्याहृतंमया ॥ १६ ॥ चिंतयन्समहाप्राज्ञश्चकारमतिमान्मतिं ॥ शिष्यंचैवा ब्रवीद्वाक्यमिदंसमुनिपुंगवः ॥ १७ ॥ पादबद्धोक्षरसमस्तंत्रीलयसमन्वितः ॥ शोकार्तस्यप्रवृत्तोमेश्लोकोभवतुनान्यथा ॥ १८ ॥ शिष्यस्तुतस्यब्रुव तोमुनेर्वाक्यमनुत्तमम् ॥ प्रतिजग्राहसंतुष्टस्तस्यतुष्टोभवन्मुनिः ॥ १९ ॥

यानिषादेसर्वतोमहत्त्वसंभावनयादृश्यमानक्रौंचेनद्वैपरीत्यसंभावनयाऽतिनिंद्यमयशस्करंमहापातकेभ्योप्यधिकंपापंवृत्तमितिचिंताबभूव यद्यप्येतत्सर्वंवाल्मीकिकृतमेवतथापिकुशलवगेयत यास्यकाव्यस्यकरणात्तदुक्तितयैवमुक्तिः अन्यथास्वर्चितायाःस्वापरोक्षत्वाद्बभूवेतिलिडसंगतिःस्यात यद्वा सर्गचतुष्टयमाद्यमुपोद्घातरूपंकस्यचिच्छिष्यस्य वाल्मीकीयोपोद्घातत्वाच्चवाल्मी कीयोक्तिः पारोक्ष्यमारोप्यस्वयमपितथोक्तिरुपोद्घातत्वद्योतनायेत्यन्ये ॥ १६ ॥ चिंतयन्निति महदयशस्करमिदंकर्मवृत्तमितिचिंतयन्सत्यसंकल्पतयाइत्थंमतिसंकल्पंचकार तदभिलापकं वाक्यंशिष्यमब्रवीदितिसंबंधः ॥१७॥ पादेति अष्टाक्षरानुष्टुप्पादैर्बद्धः अक्षरसमःछंदःशास्त्रोक्तगुरुलघ्वक्षरवैषम्यरहितः तथा तंत्रीवीणालयस्तालमृदंगवेणुहस्ताभिनयानांसमकालंविरामस्ता भ्यांयुक्तः तंत्र्यामारोप्यवाद्यैःसहगातुंयोग्यइतियावत् अतःशोकार्तस्यशापरूपतयाऽनौचित्येनप्रवृत्तोपिमेममश्लोकोयशोरूपोभवतु अन्यथाऽयशोरूपोमाभूदित्यर्थः अत्रभवत्विति पाठएव बहुपुस्तकसंमतस्तीर्थसंमतश्च श्लोकोयशसिपद्येचेतिनिघंटुः ॥ १८ ॥ शिष्यइति एवंब्रुवतस्तस्यऋषेर्वाक्यंयशोभवत्वित्येवंरूपम् हृष्टःसन् तथैवेदंयशोरूपमेवेदमित्यनुमोदनेनप्रतिजग्राहअं गीचकार अयशोरूपेपियशस्त्वानुमोदनेनगुरुस्तस्यतुष्टोभवदित्यर्थः ॥ १९ ॥

सइति अभिषेकमितिमध्याह्नकर्तव्यानुष्ठानोपलक्षणम् तमेवार्थंअवशतःशापार्थश्लोकोत्पत्तिरूपम् उपावर्ततन्यवर्तत ॥ २० ॥ श्रुतवान्बहुश्रुतः पृष्ठतःपृष्ठभागेनप्रसारितकरः परिपूर्णंकलशमादायअनुपश्चाज्जगामेत्यन्वयः ॥ २१ ॥ सइति मुखतोन्याःकथाश्चकारमनसानुशापार्थकश्लोकविषयंध्यानमास्थितः यत्तुध्यानमंबायागायऽन्याश्चतुर्मुखरुद्रप्राधान्येनध्यानमास्थितइत्यर्थइतितन्न तदास्थितोन्याःकथाश्चकारेत्यस्यासंगतेरित्यलंध्यानपदार्थानभिज्ञदूषणाभिनिवेशेन ॥ २२ ॥ अथतांचिंतांनिवर्तयितुंब्रह्मागमनमाह आजगामेति स्वयंप्रभुःअनन्यमुखनिरीक्षकतयासर्वलोकतष्टुर्योगिज्ञानैश्वर्यादिशक्तिमान् अतएवभूरादिलोकनिर्माता तंशापवाक्योच्चारणवशादतिचिंताक्रांतम् ॥ २३ ॥ वाग्यतःअतिसंभ्रमवशाद्यतवाक् प्रयतोऽतिनम्रः

सोभिषेकंततःकृत्वातीर्थेतस्मिन्यथाविधि ॥ तमेवचिंतयन्नर्थमुपावर्ततवैमुनिः ॥ २० ॥ भरद्वाजस्ततःशिष्योविनीतःश्रुतवान्गुरोः ॥ कलशंपूर्णमादायपृष्ठतोऽनुजगामह ॥ २१ ॥ सप्रविश्याश्रमपदंशिष्येणसहधर्मवित् ॥ उपविष्टःकथाश्चान्याश्चकारध्यानमास्थितः ॥ २२ ॥ आजगामततोब्रह्मालोककर्तास्वयंप्रभुः ॥ चतुर्मुखोमहातेजाद्रष्टुंतंमुनिपुंगवम् ॥ २३ ॥ वाल्मीकिरथतंदृष्ट्वासहसोत्थायवाग्यतः ॥ प्रांजलिःप्रयतोभूत्वातस्थौपरमविस्मितः ॥ २४ ॥ पूजयामासतंदेवंपाद्यार्घ्यासनवंदनैः ॥ प्रणम्यविधिवच्चैनंपृष्ट्वाचैवनिरामयम् ॥ २५ ॥ अथोपविश्यभगवानासनेपरमार्चिते ॥ वाल्मीकयेचऋषयेसंदिदेशासनंततः ॥ २६ ॥ ब्रह्मणासमनुज्ञातःसोप्युपाविशदासने ॥ उपविष्टेतदातस्मिन्साक्षाल्लोकपितामहे ॥ २७ ॥ तद्गतेनैवमनसावाल्मीकिर्ध्यानमास्थितः ॥ पापात्मनाकृतंकष्टंवैरग्रहणबुद्धिना ॥ २८ ॥ यस्तादृशंचारुरवंक्रौंचंहन्यादकारणात् ॥ शोचन्नेवपुनःक्रौंचीमुपश्लोकमिमंजगौ ॥ २९ ॥

॥ २४ ॥ पूजयामासेति वंदनंस्तुतिः प्रणम्येतिपृथगुक्तेः एनमित्याद्युत्तरान्वयि ॥ २५ ॥ एनंमुनिं ब्रह्माअनामयंआमयःपीडातद्रहितम् व्ययहीनमितियावत् तपइतिशेषः तत्पृष्ट्वाअनंतरंस्वयमासनेउपविश्यऋषयेआसनंदिदेश आसनेउपवेष्टुमनुमेनइत्यर्थः वाल्मीकयेचऋषयइतिपाठः एतेनब्राह्मणंकुशलंपृच्छेत्क्षत्रबंधुमनामयमित्युक्तेर्ब्राह्मणंप्रत्ययंप्रश्नःस्मार्ताचारविरुद्धः तंदेवमित्यनेनैवसिद्धएनमित्यस्यवैयर्थ्यापत्तिश्चेत्यपास्तम् ॥ २६ ॥ लोकपितामहेउपविष्टेसतितदनुज्ञयास्वयमुपाविशदितिसंबंधः ॥ २७ ॥ तद्गतेनक्रौंचगतेन वैरंगृह्णातिसाचासौबुद्धिस्तद्वताकर्तरिल्युट्बाहुलकात् निषादेनेतिशेषः कष्टंकृतम् क्रौंचवधरूपंतपोनाशसंपादकशापनिःसारणेनकष्टंकृतम् मयेतिशेषः ॥ २८ ॥ कष्टमेवाह यइति हन्यात्हतवानित्यर्थेछांदसम् अकारणात्दृश्यमानकारणंविना उपसमीपे ब्रह्मणःसमीपे ॥ २९ ॥

शोकपरायणः क्रौंचवधकृतक्रौंचीदुःखदर्शनजेनस्वस्य मुखनस्तपोहानिकरशापार्थकश्लोकस्यावशतोनिःसरणजेनचशोकेनव्याप्तः अतएवांतर्गतमनाअंतर्गतेश्लोकार्थएवदत्तच्चित्तःश्लोकं
जगाविनिसंबंधः ततथाशोकयस्तम् प्रहसन्मदिच्छयावतीर्णासरस्वतींनजानातीतिहासंकुर्वन् ॥ ३० ॥ तद्वचनमेवाह श्लोकएवास्त्वयमिति अयंत्वयाबद्धःश्लोकोयशोरूपएवास्तु श्लो
कशब्दस्यपद्यपरतयायोजनेऽस्त्विति पाठस्यासंगत्यापत्तेः अस्तीत्युक्तेरेवब्रह्मणऔचित्यात् ममतुअयशोरूपस्ययशोरूपताशीर्दानमितिनासंगतिः श्लोकएवत्वयेतिपाठेपि यशोरूपएवायंत्व
याबद्धोऽत्रतवविचारःसंदेहोमास्तु मद्वचनात्त्वत्संकल्पाच्चास्यतथाभावप्राप्तेरित्याशयः ननुभवतुत्वदाशिषातथात्वमस्याःपरंतुशांतस्वभावस्यकषेर्ममेदृशीवागत्यंतमनुचितेत्यपिमाविषादंकुर्वि
त्याह मच्छंदादिति मत्संकल्पादित्यर्थः विष्णोरवतारभूतस्यरामस्यसंकल्पोपिस्वसंकल्पत्वेनोक्तःएकामूर्तिस्त्रयोदेवारुद्रविष्णुपितामहाइतिहरिवंशोक्तेः नन्वीदृशसंकल्पोब्रह्मणोपिकिमर्थइतिचे
न्छृणु येषांपरस्यदारवियोगादिजनकंकर्मस्वस्यदारवियोगादिकंजनयितुंनालंतेषामपिब्रह्मशापस्तज्जननेऽलमितिलोकेब्राह्मणमाहात्म्यंसूचयितुम् एवंराज्यादिसत्त्वेपिकामजयएवोत्तमोनतु

पुनरंतर्गतमनाभूत्वाशोकपरायणः॥ तमुवाचततोब्रह्माप्रहसन्मुनिपुंगवम्॥ ३०॥ श्लोकएवास्त्वयंबद्धोनात्रकार्याविचारणा॥ मच्छंदादेवतेब्र
ह्मन्प्रवृत्तेयंसरस्वती॥ ३१॥ रामस्यचरितंकृत्स्नंकुरुत्वमृषिसत्तम॥ धर्मात्मनोभगवतोलोकेरामस्यधीमतः॥ ३२॥ वृत्तंकथयधीरस्ययथातेनार
दाच्छ्रुतम्॥ रहस्यंचप्रकाशंचयद्वृत्तंतस्यधीमतः ३३॥ रामस्यसहसौमित्रेराक्षसानांचसर्वशः॥ वैदेह्याश्चैवयद्वृत्तंप्रकाशंयदिवारहः॥ ३४॥

तद्भोगचापलमितिचस्वव्यवहारेणशिक्षयितुंतत्प्रायश्चित्तविधयास्वकीर्तिवर्णनेनमुनेर्यशोवृद्ध्यर्थंभगवद्विषयमहापापप्रायश्चित्तत्वात्कैमुतिकन्यायेनेतरजनानांसर्वपापप्रायश्चित्तंरामायणश्र
वणादीत्यर्थंतत्त्वंबोधयितुंचेतिगृहाण एतदृप्यक्षरस्यारस्यबलेनमयायोजितमतोनिरीर्ष्यसत्हृदयाविचारयंतु ॥ ३१ ॥ एवंपरवशप्रवृत्तस्यापिशापस्यभगवद्विषयतयेतरसकलमन्वाद्युक्तप्राय
श्चित्तानिवर्त्यस्ययंप्रत्यसौशापस्तच्चरितवर्णनरूपंप्रायश्चित्तमुपदिशति रामस्यचरितमिति लोकेरामस्यरमतेइतिरामः बाहुलकात्कर्तरिघञ् तेनलोकाधिष्ठातुर्लोकांतर्यामिणश्चेत्यर्थः कुरुवर्ण
यस्व धर्मात्मनइत्यनेनरावणादिवधवत्क्रौंचवधोपिधर्मफलकएवलोकव्यवहारेणलोकहितत्वात्त्वद्रक्षकत्वाच्चेतिसूचितम ॥ ३२ ॥ वृत्तमिति अस्यनारदोक्तविशेषपरत्वादपौनरुक्त्यम् धिय
मीरयतीतिधीरः तेनबुद्धिप्रेरकस्येत्यर्थः तेनगायत्र्यर्थभूतस्येत्युक्तम् ॥ ३३ ॥ रामलक्ष्मणयोराक्षसानांसीतायाश्चयत्प्रकाशंतदीयानांप्रकाशंतवाविदितम् यदिवायदपितदीयानामपिरहःअवि
दितंनवतुसुनरामविदितंतदपिसर्वंतेविदितंभविष्यति अनेनतत्करणयोग्यतादानम् यच्चमानिषादेतिवदपर्यालोच्यापिवाकृत्वत्तोनिःसरिष्यतिसापिनान्यथाभविष्यतितेनास्याअपिसत्यत्वंभावी
तिध्वनितम् ॥ ३४ ॥

॥ ३५ ॥ एवंसामर्थ्यंदत्वोपसंहरति कुर्विति यावदित्याद्युत्तरान्वयि ॥३६॥३७॥ तावदिति यावत्त्वत्कृतकथाप्रचारस्तावदधश्चत्वंदयापूर्वमपिअतिमहतिक्रोधकरणात्अधोगमनयोग्योपित्वं
ऊर्ध्वंसर्वोर्ध्वंवर्तमानेषुमल्लोकेषुनिवासंप्राप्स्यसि ततोमयासहमोक्ष्यसइत्यर्थः लोकेष्वितितदवयवाभिप्रायंबहुवचनं ऊर्ध्वमधश्च विद्यमानेषुमल्लोकेषुमन्निर्मितलोकेषुनिवत्स्यसिसर्वत्राप्रतिह
तगतिःसंचरिष्यसि ततःपरंमुक्तिंप्राप्स्यसीतितीर्थः तत्रमल्लोकेष्वित्यस्यचारितार्थ्यंचिन्त्यम् इतीति तत्रैवांतर्धानेनास्याप्यंतर्यामिरूपतोक्ता ॥ ३८ ॥ ततइति विस्मयंआश्चर्यंतस्येति प्रीयमा
णाःआश्चर्यमिदमस्मद्गुरोःपद्यंयद्ब्रह्मणाप्यनुमोदितम् प्राहुश्चवक्ष्यमाणमित्यर्थः ॥ ३९ ॥ तदेवाह समेति साम्यंगुरुलघ्वक्षरराहित्यम् यःऋषिणागीतःसःअनुअतिशयितशोकोत्पत्त्यनंतरंव्या

तत्राप्यविदितंसर्वंविदितंतेभविष्यति ॥ नतेवागनृताकाव्येकाचिदत्रभविष्यति ॥ ३५ ॥ कुरुरामकथांपुण्यांश्लोकबद्धांमनोरमां ॥ यावत्स्थास्यं
तिगिरयःसरितश्चमहीतले ॥ ३६ ॥ तावद्रामायणकथालोकेषुप्रचरिष्यति ॥ यावद्रामस्यचकथात्वत्कृताप्रचरिष्यति ॥ ३७॥ तावदूर्ध्वमधश्चत्वंम
ल्लोकेषुनिवत्स्यसि ॥ इत्युक्त्वाभगवान्ब्रह्मातत्रैवांतरधीयत॥ ३८ ॥ततःसशिष्योभगवान्मुनिर्विस्मयमाययौ ॥तस्यशिष्यास्ततःसर्वेजगुःश्लोकमि
मंपुनः॥ मुहुर्मुहुःप्रीयमाणाःप्राहुश्चभृशविस्मिताः॥ ३९ ॥समाक्षरैश्चतुर्भिर्यःपादैर्गीतोमहर्षिणा ॥ सोनुव्याहरणाद्भूयःशोकःश्लोकत्वमागतः
॥ ४० ॥तस्यबुद्धिरियंजातामहर्षेर्भावितात्मनः॥कृत्स्नंरामायणंकाव्यमीदृशैःकरवाण्यहम् ॥४१ ॥उदारवृत्तार्थपदैर्मनोरमैस्तदास्यरामस्यचकार
कीर्तिमान् ॥ समाक्षरैःश्लोकशतैर्यशस्विनोयशस्करंकाव्यमुदारदर्शनः ॥ ४२ ॥

हरणाद्भूयःशोकःविपुलःशोकएवश्लोकत्वंप्राप्तइतिवयंमन्यामहेइतिप्राहुरितिसंबंधः उत्प्रेक्षाचेयम् तेनास्यश्लोकस्यकरुणरसमयत्वंध्वनितम् अत्रनष्टक्रौंचालंबनकःक्रौंचीविरावानुदीपितो
निषादविषयक्रोधव्यभिचारिकोमानिषादेत्यादिवाक्यानुभावकःकरुणोरसइतिबोध्यम यत्तुपूर्वश्लोकेप्राहुरित्यस्यपठंतीत्यर्थकरणम् पुनःपुनःपाठेनानंदवंतोऽभूवन्निितिफलितार्थकथनम् अ
त्रचश्लोकेभूयोनुव्याहरणान्मुहुर्मुहुःशिष्यैःपुनःपाठाल्लोकेशोकःश्लोकत्वेनप्रतिबद्धोभवत्श्लोकत्वंप्राप्तइतितीर्थादिव्याख्यानंतदतिनिःसारमितिस्पष्टमेव ॥ ४० ॥ तस्येति ईदृशैर्मानिषादे
तिवत्करुणारसप्रधानैरित्यर्थः अनेनान्येरसाअत्रगुणीभूताइतिध्वनितम् ॥ ४१ ॥ उदारेति उदारस्ययद्वृत्तंचरितंउदारंवायच्चरितंतद्रूपार्थबोधकैःपदैः मनोरमैःश्रुतिकटुत्वादिदोषरहितैः अ
स्ययशस्विनोरामस्यदाशरथेरामस्यनारदोपदिष्टस्य श्लोकशतैरितिशतशब्दोनंतवाची ॥ ४२ ॥

एवंकाव्यनिर्माणमुक्कातत्रश्रोतॄनभिमुखीकरोति तदिति समासस्तत्पुरुषादिः संधिरेकादेशादिजः योगःप्रकृतिप्रत्ययोः एतेउपगतायथाव्याकरणालंकारशास्त्रमर्यादंयस्मिन्काव्येतादृशंकाव्यं रघुवरचरितंतद्वर्णनरूपं समःपतत्प्रकर्षादिदोषरहितोमधुरःकरुणारसयुक्तत्वेनमाधुर्यगुणप्रधानःउपनतःप्रसन्नतयोपलभ्यमानोयोऽर्थस्तद्बोधकवाक्यैर्निबद्धं उपनतत्वेनप्रसादगुणवत्तादर्शिता समुदायेनवैदर्भीरीतिमत्त्वंध्वनितं रघेर्गत्यर्थान्निष्पन्नरघुवरशब्देनतस्यसर्वांतर्यामित्वंध्वनितं ईदृशस्यापिमिथ्यार्थकत्वेऽनुपादेयत्वंस्यादतआह मुनिप्रणीतंब्रह्मानुग्रहप्राप्तसत्यवागृषिप्रणीतं पुरुषार्थस्वर्गमोक्षादिसाधनत्वंतुरघुवरचरितमित्यनेनोक्तप्रायमेव दशशिरसश्चवधमित्यनेनवनांतमिदंश्रोतव्यमितिसूचितं तेनैवसूचितफललाभात् उत्तरकांडंत्वस्यखिलं भारतस्यहरिवंशवत् अतएवाग्रिमसर्गेवनसंचरणपर्यंतवृत्तान्वेषणमेवसमाधिनाकरिष्यतीतिप्राञ्चः परेतुदशशिरसोवधंचेत्यन्वयः चेनसीतात्यागादिरूपोत्तरकांडीयवृत्तांतसंग्रहइत्याहुः ॥ ४३ ॥ ॥

तदुपगतसमाससंधियोगंसममधुरोपनतार्थवाक्यबद्धम् ॥ रघुवरचरितंमुनिप्रणीतंदशशिरसश्चवधंनिशामयध्वम् ॥४३॥ ॥इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येबालकांडेद्वितीयःसर्गः॥२॥ ॥ ४॥ ॥श्रुत्वावस्तुसमग्रंतद्धर्मार्थसहितंहितम् ॥ व्यक्तमन्वेषतेभूयोयद्वृत्तंतस्यधीमतः ॥ १ ॥ उपस्पृश्योदकंसम्यङ्मुनिःस्थित्वाकृतांजलिः ॥ प्राचीनाग्रेषुदर्भेषुधर्मेणान्वेषतेगतिम् ॥ २ ॥ रामलक्ष्मणसीताभीराज्ञादशरथेनच ॥ सभार्येणसराष्ट्रेणयत्प्राप्तंतत्रतत्त्वतः ॥ ३ ॥ हसितंभाषितंचैवगतिर्यावच्चचेष्टितम् ॥ तत्सर्वंधर्मवीर्येणयथावत्संप्रपश्यति ॥ ४ ॥ स्त्रीतृतीयेनचतथाप्राप्तंचरतावने ॥ सत्यसंधेनरामेणतत्सर्वंचान्ववेक्षत ॥ ५ ॥

इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येबालकांडेद्वितीयःसर्गः ॥ २ ॥ ॥ ४ ॥ ॥ श्रुत्वेति नारदात्काव्यविषयंरामचरितरूपंवस्तुश्रुत्वा समग्रंप्रकाशरहस्यसहितंकुर्विति चब्रह्ममुखाच्छ्रुत्वातस्यधीमतोरामस्ययद्वृत्तंचरितंसरहःप्रकाशंतत्भूयःपुनःव्यक्तंसाक्षात्कारविषयोयथाभवतितथाकर्तुंअन्वेषतेउद्युंक्तेस्मेतिशेषः धर्मार्थेतित्रिवर्गोपलक्षणं फलत्वेनतत्सहितं हितंमोक्षफलकं ॥ १ ॥ उद्योगमेवाह उपेति आचम्येत्यर्थः सम्यकूस्मृत्युक्ताचमनरीत्या इदमन्येषामपिप्रायत्यसंपादकानामुपलक्षणं प्रागग्रेषुदर्भेषुस्थित्वा धर्मेणयोगजेनब्रह्मप्रसादरूपेणचगतिंरामादीनांचरितरूपांअन्वेषतेअनियतेनपश्यतिस्म ॥ २ ॥ रामेत्यादिश्लोकद्वयमेकंवाक्यं भार्याःकौसल्याद्याःतत्सहितेनदशरथेनरामादिभिश्चयत्प्राप्तंसंवृद्धंचरितंराज्यपालनादिरूपंहसितादिरूपंचतत्सर्वंतत्रसमाधौतत्त्वतःधर्मवीर्येणयोगजबलेनपश्यतिस्म ॥ ३ ॥ ४ ॥ अयोध्यावासकालिकंवृत्तंनिरीक्ष्यतदनंतरंवनकालिकंचनिरीक्षितमित्याह स्त्रीतृतीयेनेति द्वितीयोलक्ष्मणः तत्सर्वंचेतिचस्यतदुत्तरकालिकमुत्तरकांडस्थंचेत्यर्थइत्यपरे ॥ ५ ॥

॥ ६ ॥ महात्मनोमहादेहस्य परिघाग्रेणवातग्रंथिःआवहादिसप्तमहावायूनांसंधिःपुस्फोट एतेनपरिघस्यदैर्घ्यमुक्तम् प्रजज्वालनिकुंभइतिशेषः परिघाग्रभागइतिवा ॥ ७ ॥ विटपावतीगंधर्वनगरी अलकेतितीर्थः ॥ ८ ॥ परिघाभरणाभ्यांप्रभाकांतिर्यस्यसः ॥ ९ ॥ स्पंदितुमपिनशेकुः उरोविवृत्यउरःप्रकाश्य ॥ १० ॥ तस्यहनूमतः ॥ ११ ॥ परिघःशतधाकृतः महाशिलाहतजी

निकुंभोभूषणैर्भातितेनस्मपरिघेणच॥ यथेंद्रधनुषामेघःसविद्युत्स्तनयित्नुमान्॥६॥परिघाग्रेणपुस्फोटवातग्रंथिर्महात्मनः॥प्रजज्वालसघोषश्च
विधूमइवपावकः॥७॥नगर्याविटपावत्यागंधर्वभवनोत्तमैः॥ सतारागणनक्षत्रंसचंद्रसमहाग्रहम्॥ निकुंभपरिघाघूर्णंभ्रमतीवनभस्थलम्
॥८॥दुरासदश्चसंजज्ञेपरिघाभरणप्रभः॥ क्रोधेंधनोनिकुंभाग्निर्युगांताग्निरिवोत्थितः॥९॥राक्षसावानराश्चापिनशेकुःस्पंदितुंभयात्॥ हनुमां
स्तुविवृत्योरस्तस्थौप्रमुखतोबली॥१०॥ परिघोपमबाहुस्तुपरिघंभास्करप्रभम्॥ बलीबलवतस्तस्यपातयामासवक्षसि॥११॥ स्थिरेतस्योरसि
व्यूढेपरिघःशतधाकृतः॥ विकीर्यमाणःसहसाउल्काशतमिवांबरे॥१२॥सतुतेनप्रहारेणनचचालमहाकपिः॥ परिघेणसमाधूतोयथाभूमिचले
ऽचलः॥१३॥सतथाभिहतस्तेनहनूमान्प्लवगोत्तमः॥ मुष्टिंसंवर्तयामासबलेनातिमहाबलः॥१४॥तमुद्यम्यमहातेजानिकुंभोरसिवीर्यवान्॥
अभिचिक्षेपवेगेनवेगवान्वायुविक्रमः॥१५॥ तत्रपुस्फोटवर्मास्यप्रसुस्रावचशोणितम्॥ मुष्टिनातेनसंजज्ञेमेघेविद्युदिवोत्थिता॥१६॥सतु
तेनप्रहारेणनिकुंभोविचचालच॥ स्वस्थश्चापिनिजग्राहहनूमंतंमहाबलम्॥१७॥ चुक्रुशुश्चतदासंख्येभीमंलंकानिवासिनः॥ निकुंभेनोद्यतं
दृष्ट्वाहनूमंतंमहाबलम्॥१८॥सतथाह्रियमाणोपिहनूमांस्तेनरक्षसा॥ आजघानानिलसुतोवज्रकल्पेनमुष्टिना॥१९॥ आत्मानंमोक्षयित्वाथ
क्षितावभ्यवपद्यत॥ हनूमानुन्ममाथाशुनिकुंभंमारुतात्मजः॥२०॥ निक्षिप्यपरमायत्तोनिकुंभंनिष्पिपेषच॥ उत्पत्यचास्यवेगेनपपातोरसि
वेगवान्॥२१॥

र्गकाष्ठवद्विकीर्यमाणश्चसआकाशेउल्काशतमिवासीदितिशेषः ॥ १२ ॥ भूमिचलेभूकंपे ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ भीमंविचुक्रुशुः कपीनांभयंकरंयथाभवतितथेत्यर्थः उद्यतंगृहीतम् ॥१८॥ तथाह्रियमाणोपिकुंभकर्णेनसुग्रीववत्ह्रियमाणोपि ॥१९॥ क्षितावभ्यवपद्यतभूमावाप्लुतोबभूव ॥२०॥ निक्षिप्यभूमावितिशेषः अस्योरसिभूमिपतितस्योरसि ॥ २१ ॥

शिरोधरांपरिवृत्यपशोरिवाघूर्ण्य ॥ २२ ॥ निनदतिनिकुंभेसादितेसतिराक्षसेंद्रसूनुःखरसुतोमकराक्षः अनेनवक्ष्यमाणोपक्षेपः ॥ २३ ॥ उक्तार्थस्यैवविवरणम् व्यपेतेव्यपगते एतदंतंनवमीदि
नयुद्धम ॥ २४ ॥ कतकरी० ॥ ७० ॥ ॥ इतिश्रीरामाभि०श्रीरामी०वा०आ०युद्ध०सप्तसप्ततितमःसर्गः ॥ ७७ ॥ ॥ ७८ ॥ ॥ निकुंभमिति ॥ १ ॥ नैर्ऋतोरावणः परिमू

परिगृह्यचबाहुभ्यांपरिवृत्यशिरोधराम् ॥ उत्पाटयामासशिरोभैरवंनदतोमहत् ॥ २२ ॥ अथनिनदतिसादितेनिकुंभेपवनसुतेनरणेबभूवयुद्धम् ॥
दशरथसुतराक्षसेंद्रसून्वोर्भृशतरमागतरोषयोःसुभीमम् ॥ २३ ॥ व्यपेतेतुजीवेनिकुंभस्यहृष्टाविनेदुःप्लवंगादिशःसस्वनुश्च ॥ चचालेवचोर्वीप
पातेवसाद्यौर्बलंराक्षसानांभयंचाविवेश ॥ २४ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येयुद्धकांडेसप्तसप्ततितमःसर्गः ॥ ७७ ॥ ॥ ७८ ॥
निकुंभंनिहतंश्रुत्वाकुंभंचविनिपातितम् ॥ रावणःपरमामर्षीप्रजज्वालानलोयथा ॥ १ ॥ नैर्ऋतःक्रोधशोकाभ्यांद्वाभ्यांतुपरिमूर्च्छितः ॥ खरपुत्रं
विशालाक्षंमकराक्षमचोदयत् ॥ २ ॥ गच्छपुत्रमयाज्ञप्तोबलेनाभिसमन्वितः ॥ राघवंलक्ष्मणंचैवजहितौसवनौकसौ ॥ ३ ॥ रावणस्यवचःश्रुत्वा
शूरमानीखरात्मजः ॥ बाढमित्यब्रवीद्धृष्टोमकराक्षोनिशाचरम् ॥ ४ ॥ सोभिवाद्यदशग्रीवंकृत्वाचापिप्रदक्षिणम् ॥ निर्जगामगृहाच्छुभ्राद्रावण
स्याज्ञयाबली ॥ ५ ॥ समीपस्थंबलाध्यक्षंखरपुत्रोब्रवीद्वचः ॥ रथमानीयतांतूर्णंसैन्यंत्वानीयतांत्वरात् ॥ ६ ॥ तस्यतद्वचनंश्रुत्वाबलाध्यक्षोनिशा
चरः ॥ स्यंदनंचबलंचैवसमीपंप्रत्यपादयत् ॥ ७ ॥ प्रदक्षिणंरथंकृत्वासमारूह्यनिशाचरः ॥ सूतंसंचोदयामासशीघ्रंवैरथमावह ॥ ८ ॥ अथतान्रा
क्षसान्सर्वान्मकराक्षोब्रवीदिदम् ॥ यूयंसर्वेप्रयुध्यध्वंपुरस्तान्ममराक्षसाः ॥ ९ ॥ अहंराक्षसराजेनरावणेनमहात्मना ॥ आज्ञप्तःसमरेहंतुंतावुभौ
रामलक्ष्मणौ ॥ १० ॥ अद्यरामंवधिष्यामिलक्ष्मणंचनिशाचराः ॥ शाखामृगंचसुग्रीवंवानरांश्चशरोत्तमैः ॥ ११ ॥ अद्यशूलनिपातैश्चवानराणां
महाचमूम् ॥ प्रदहिष्यामिसंप्राप्तांशुष्कंधनमिवानलः ॥ १२ ॥ मकराक्षस्यतच्छ्रुत्वावचनंतेनिशाचराः ॥ सर्वेनानायुधोपेताबलवंतःसमाहिताः
॥ १३ ॥ तेकामरूपिणःक्रूरादंष्ट्रिणःपिंगलेक्षणाः ॥ मातंगाइवनर्दंतोध्वस्तकेशाभयावहाः ॥ १४ ॥

र्च्छितोव्याप्तः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ बलाध्यक्षंरावणबलाध्यक्षम् त्वरात्त्वरया ॥ ६ ॥ ७ ॥ रथमावह युद्धभूमिंप्रापयेत्यर्थः ॥ ८ ॥ ममपुरस्तान्ममाग्रतोयूयंसर्वेप्रयुध्यध्वंवानरैःसहेति
शेषः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ ध्वस्तकेशाःविप्रकीर्णकेशाअतएवभयावहाः ॥ १४ ॥

॥ ३० ॥ कनकरी० ॥ ८० ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येयुद्धकांडेसप्ताशीतितमःसर्गः ॥ ८७ ॥ ॥ ७ ॥ ॥ अब्रवीत्परुषमिति वि-
भीषणमितिशेषः तच्चवक्ष्यमाणम् ॥ १ ॥ उद्यतायुधनिस्त्रिंशः उद्यतायुधोनिस्त्रिंशोनिर्घृणश्चेत्यर्थइतिकतकः उद्यतान्यायुधानिनिस्त्रिंशश्चयेनसः गोबलीवर्दवत्प्रयोगइत्यन्ये ॥ २ ॥ ३ ॥

निदर्शयिष्याम्यात्मबलंसमुद्यतंकुरुष्वसर्वायुधसायकव्ययम् ॥ नलक्ष्मणस्यैत्यहिबाणगोचरंत्वमद्यजीवन्सबलोगमिष्यसि ॥ ३० ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदि० युद्धकांडेसप्ताशीतितमःसर्गः ॥ ८७ ॥ ॥ ७ ॥ ॥ विभीषणवचःश्रुत्वारावणिःक्रोधमूर्छितः ॥ अब्रवीत्परुषंवाक्यंक्रोधेनाभ्युत्पपातच ॥ १ ॥ उद्यतायुधनिस्त्रिंशोरथेसुसमलंकृते ॥ कालाश्वयुक्तेमहतिस्थितःकालांतकोपमः ॥ २ ॥ महाप्रमाणमुद्यम्यविपुलंवेगवद्दृढम् ॥ धनुर्भीमबलोभीमंशरांश्चामित्रनाशनान् ॥ ३ ॥ तंददर्शमहेष्वासोरथस्थःसमलंकृतः ॥ अलंकृतममित्रघ्नोरावणस्यात्मजोबली ॥ ४ ॥ हनूमत्पृष्ठमारूढमुदयस्थरविप्रभम् ॥ उवाचैनंसुसंरब्धःसौमित्रिंसविभीषणम् ॥ ५ ॥ तांश्चवानरशार्दूलान्पश्यध्वंमेपराक्रमम् ॥ अद्यमत्कार्मुकोत्सृष्टंशरवर्षंदुरासदम् ॥ ६ ॥ मुक्तवर्षमिवाकाशेधारयिष्यथसंयुगे ॥ अद्यवोमामकाबाणामहाकार्मुकनिःसृताः ॥ विधमिष्यंतिगात्राणितूलराशिमिवानलः ॥ ७ ॥ तीक्ष्णसायकनिर्भिन्नान्शूलशक्त्यृष्टिसायकैः ॥ अद्यवोगमयिष्यामिसर्वानिवयमक्षयम् ॥ ८ ॥ सृजतःशरवर्षाणिक्षिप्रहस्तस्यसंयुगे ॥ जीमूतस्येवनदतःकःस्थास्यतिममाग्रतः ॥ ९ ॥ रात्रियुद्धेतदापूर्वंवज्राशनिसमैःशरैः ॥ शायितौतौमयाभूयोविसंज्ञौसपुरःसरौ ॥ १० ॥ स्मृतिर्नतेस्तिवामन्येव्यक्तंयातोयमक्षयम् ॥ आशीविषसमंक्रुद्धंयन्मांयोद्धुमुपस्थितः ॥ ११ ॥ तच्छ्रुत्वाराक्षसेंद्रस्यगर्जितंराघवस्तदा ॥ अभीतवदनःक्रुद्धोरावणिंवाक्यमब्रवीत् ॥ १२ ॥

तंसविभीषणंलक्ष्मणम् अलंकृतंस्वतेजोभूषितम् ॥ ४ ॥ उवाचेत्यादिनाऽब्रवीत्परुषंवाक्यमितिप्रागुक्तस्यैवविवरणम् ॥ ५ ॥ तांश्चवानरशार्दूलान्उवाचेत्यनुकर्षः ॥ ६ ॥ मुक्तवर्षंमेघोत्सृष्टवर्षम् ॥ ७ ॥ ८ ॥ ९ ॥ सपुरःसरौसुग्रीवादिप्रधानसहितौ युवांभ्रातराविविशेषः ॥ १० ॥ एवमपियन्मांयोद्धुमुपस्थितोसितत्वायःपूर्वस्यतेस्मृतिर्नास्ति वाऽथवाव्यक्तंयातोयमक्षयम् आदिकर्मणिक्तः यमक्षयंयमगृहंप्रयातुमुपक्रांतोसि ॥ ११ ॥ अभीतवदनःनिर्भयप्रवृत्ताभिवदनव्यवहारः ॥ १२ ॥

इक्ष्वाकिति इक्ष्वाकुवंशात्प्रभवःआविर्भावोयस्यसतथा रामोनामरामइतिनाम्नाप्रसिद्धोजनैश्वश्रुतोऽस्तितस्मिन्नेवएकत्रसर्वेत्वत्पृष्टागुणाअन्येचगुणाइतिशेषः तच्चेदंयौगिकंनामरमंते योगिनोस्मिन् यद्वा रमयतिस्वकानितियोगस्यप्रदर्शनात् तत्रांत्येनारकपुरुषादिवद्न्येषामपिदृश्यतइतिदीर्घः तानेवगुणानाह नियतात्मानिगृहीतांतःकरणः वीर्यंव्याख्यातं द्युतिःकांतिः आपत्संपदोरविकृतिर्धृतिस्तस्यधृतिस्तद्वान् वशीजिताशेषवहिरिंद्रियः ॥ ८ ॥ बुद्धिमानिति प्रशस्तबुद्धिः बुद्धेःप्राशस्त्यंचसकृद्गृहीताविस्मरणावापोद्वापादिशक्तिमत्त्वं सर्वत्रप्रशंसादौमतुप् नीतिःकामंदकादिप्रसिद्धराजनीतिस्तद्वान्तत्ज्ञाता वाग्मीप्रशस्तवाक् श्रीमान्सर्वातिशायिशोभैश्वर्यादियुक्तः यद्वा ऋचःसामानियजूंषि साहिश्रीरमृतासतामित्युक्तश्रौतश्रीमान् शत्रूणांवाह्यांतराणांनिवर्हणःनाशकर्ता वाहुलकात्कर्तरिल्युट् विपुलांसइत्यादिनासामुद्रिकलक्षणंकथ्यते विपुलौमांसलोन्नतौअंसौभुजशिरसीयस्यसः स्कंधोभुजशिरोंसइतिकोशः अस्यसुलक्षणत्वंचवररुचिनोक्तं कक्षःकुक्षिश्ववक्षश्वघ्राणस्कंधौललाटिका सर्वभूतेषुनिर्दिष्टाउन्नतास्तेसुखप्रदाइति महावाहुः आन्महतइत्यात्वं शिरोललाटश्रवणग्रीवावक्षश्वत्दत्त

इक्ष्वाकुवंशप्रभवोरामोनामजनैःश्रुतः॥ नियतात्मामहावीर्योद्युतिमान्धृतिमान्वशी॥८॥ बुद्धिमान्नीतिमान्वाग्मीश्रीमाञ्छत्रुनिबर्हणः॥ विपुलांसोमहाबाहुःकंबुग्रीवोमहाहनुः॥ ९॥ महोरस्कोमहेष्वासोगूढजत्रुररिंदमः॥ आजानुबाहुःसुशिराःसुललाटःसुविक्रमः॥ १०॥

था उदरंपाणिपादंचपृष्ठंदशमहत्सुखमितिब्राह्मेअस्यसुलक्षणत्वमुक्तं कंबुग्रीवःकंबुवत्रेखात्रयविशिष्टग्रीवः महाहनुःमांसलकपोलापरभागः पूर्णमांसलहनुस्तुभूपतिरितिसंहिता ॥ ९ ॥ महोरस्कइति महद्विशालमुरोयस्यसः उरःशिरोललाटंचेत्युपक्रम्यविशालास्तेसुखप्रदाइत्युक्तेः महेष्वासःमहानिष्वासोधनुरस्य गूढजत्रुःगूढेमांसलत्वान्निमग्नेजत्रुणीवक्षोंससंधिगतेअस्थिनीयस्य अरिंदमःनिजभक्तानामरीन्कामादीन्निजभक्त्यंतरायकर्तृपापानिवादमयतीत्यरिंदमः यद्वा अरिंदमइतिराज्ञोऽन्वर्थसंज्ञा शत्रुंजयइतिवत् आजानुबाहुःजानुपर्यंतदीर्घबाहुः दीर्घभूबाहुमुष्कश्वचिरंजीवीधनीनरइतिब्राह्मे सुशिराः समवृत्तशिराश्वैवच्छत्राकारशिरास्तथा एकच्छत्रांमहींभुंक्तेदीर्घमायुश्वविदतीतिनारदः सुललाटःरेखाधिकललाटः ललाटेयस्यदृश्यंतेचतुस्त्रिद्व्येकरेखिकाः शतद्वयंशतंषष्टिस्तस्यायुर्विंशतिस्तथेतिकात्यायनः सुविक्रमःगजसिंहादिगतिसदृशगतिः विक्रमःपादविक्षेपः स्वरोगतिश्वनाभिश्वगंभीरःसप्रशास्यत इतिब्राह्मे ॥ १० ॥

चारित्रेणेति चरित्रमेवचारित्रं स्वार्थिकोण् वृत्तसंपदनेनोच्यते सर्वभूतेषुसर्वप्राणिषुमध्येकःपुमान्हितःऐहिकामुष्मिकहितवहःअशत्रुभ्यः यत्तुसर्वप्राणिषुसापराधिष्वपिहितकरणशी लइतिव्याचक्षते तन्नु हितयोगेचतुर्थ्यापत्तेरयुक्तं विद्वान्आत्मानात्मसकलपदार्थतत्त्वज्ञः समर्थःलौकिकव्यवहारेप्रजारंजनादौचातुर्यसामर्थ्यंतद्वान् कामाधिकसौंदर्यवत्त्वेननित्यसुख रूपत्वेनचएकप्रियंकेवलप्रियंदुःखासंभिन्नप्रियत्ववद्दर्शनंयस्यसः यत्तुएकंप्रतिप्रियंदर्शनंयस्येतितदयुक्तं सर्वप्रियत्वस्याप्रतिपादनात् एकःअद्वितीयःसचासौप्रियदर्शनश्चेत्यर्थइतितीर्थः ॥ ३ ॥ आत्मवानिति वशीकृतांतःकरणइत्यर्थः जितक्रोधःनिर्दाहिंसादिजनकचित्तवृत्तिविशेषरहितः क्रोधोत्रकामादीनामप्युपलक्षणं द्युतिःसर्वलोकस्यदिदृक्षाजनकोदेह कांतिविशेषस्तद्वान् अनसूयकः विद्यैश्वर्यादितपःसुपरौन्नत्यासहनमसूयातद्रहितः असूयतेःकंड्वादियगंताडुपतापार्थात्ण्वुल् संयुगेयुद्धकालेजातरोषस्यकस्यरोषात्देवाश्चदेवाअपिइंद्रा दयोपिअपिनाअसुराश्चबिभ्यति अतिबलवतोत्मानप्यस्यक्रोधःसंहरिष्यतीतिभयंप्राप्नुवंतीत्यर्थः कस्येतिसंबंधसामान्येषष्ठीत्यन्ये कस्यसंयुगेकस्माद्बिभ्यतीतितीर्थः ॥ ४ ॥ एत

चारित्रेणचकोयुक्तःसर्वभूतेषुकोहितः ॥ विद्वान्कःकःसमर्थश्चकश्चैकप्रियदर्शनः ॥ ३ ॥ आत्मवान्कोजितक्रोधोद्युतिमान्कोनसूय कः ॥ कस्यबिभ्यतिदेवाश्चजातरोषस्यसंयुगे ॥ ४ ॥ एतदिच्छाम्यहंश्रोतुंपरंकौतूहलंहिमे ॥ महर्षेत्वंसमर्थोसिज्ञातुमेवंविधंनरम् ॥ ५ ॥ श्रुत्वाचैतत्त्रिलोकज्ञोवाल्मीकेर्नारदोवचः ॥ श्रूयतामितिचामंत्र्यप्रहृष्टोवाक्यमब्रवीत् ॥ ६ ॥ बहवोदुर्लभाश्चैवयेत्वयाकीर्तितागुणाः ॥ मुनेवक्ष्याम्यहंबुद्ध्वातैर्युक्तःश्रूयतांनरः ॥ ७ ॥

दिति उक्तगुणसामान्यापेक्षयानपुंसकं एतद्दिव्यपुरुषगुणजातंकस्यास्तीतिश्रोतुमहमिच्छामि उक्तगुणसामग्र्यस्यएकत्रदुर्लभत्वात्तादृशपुरुषविशेषज्ञानेमेपरंसर्वस्मादपिकौतुकांतरा दुत्कटंकौतुकंवर्तते नन्वेवंविधनरोमयापिदुर्ज्ञेयोनेत्याह हियतःमहर्षेअपरोक्षीकृताशेषार्थत्वंएवंविधंउक्तगुणवंतंनरंदिव्यपुरुषंज्ञातुंसमर्थोसिसर्वलोकप्रसिद्धसामर्थ्योसितस्मात्त्वत्तएव श्रोतुमिच्छामीतिपूर्वेणसंबंधः ॥ ५ ॥ श्रुत्वेति एतदुक्तप्रश्नजातं त्रिलोकज्ञः भूर्भुवःस्वर्लोकलक्षणात्र्यवयवलोकानूतत्रत्यवृत्तांतंजानातीत्यर्थः एवंचद्विगुत्वाभावान्नङीप् नारदो वाल्मीकेरेतद्वचःश्रुत्वाश्रूयतामितिचआमंत्र्यऐकाग्र्यसिद्धयेअभिमुखीकृत्यस्वगतस्यार्थस्यचिरंप्रतिपिपादयिषितस्यजिज्ञासुलाभेनप्रहृष्टोभूत्वावक्ष्यमाणंवाक्यमब्रवीत् ॥ ६ ॥ बह वइति येबहवोगुणास्त्वयाकीर्तितास्तेएकत्रप्राकृतपुरुषमात्रेदुर्लभाएव चःपादपूरणे अथापिहेमुनेयस्तैर्युक्तस्तंबुद्ध्वास्मृत्वाअहंवक्ष्यामितादृशोनरःश्रूयतां प्राप्तकालेलोट् तस्यश्रवणंतेप्राप्त कालमित्यर्थः ॥ ७ ॥

गनमेवंभूतमितिकिंवक्तव्यं यत्कीर्तनमपिविशिष्टफलमित्याहैवंधर्मप्रवचनंचेतिमर्यादाभूतराजसूय
पापापापकर्मारब्धशरीरा पापानुबंधिनीपापकर्मनिरता तीक्ष्णाक्रूरदर्शना संभिन्नमर्यादात्यक्तमर्यादा । णोऽक्षयकीर्तिहेतुर्धर्मइत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ हितमिहलोकसुखंआयतियुक्तं उत्तरकाले
द्वा प्रजाविषयेऽनघंपापरहितम् ॥ ७ ॥ कोसलाननतिअतिक्रम्यययौ ॥ ८ ॥ शिववारिवहांशिवानिवार त्वपरमाप्तत्वेननिरीक्षंतइत्यर्थः ॥ ११ ॥ पुत्राःपितृवत् पितरमिवेत्यर्थः ॥ १२ ॥ सत्वंसर्वप्रियः
नावत्तस्याअपिपृथक्सागरप्रवेशंसूचयति ॥ १० ॥ स्यंदिकांतदाख्याम् ॥ ११ ॥ सःअतीतस्यंदिकः महीं र ॥ ४ ॥ युवाभ्यामात्मभूताभ्यांराजसूयमनुत्तमम् ॥ सहितोयष्टुमि
कवेमनुनादत्तकोसलदेशस्यदक्षिणसीमांकथयामासेत्यर्थः यद्यपीक्ष्वाकादयःसार्वभौमास्तथापितेषांस्वराज नसुयज्ञेनवरुणत्वमुपागमत् ॥ ६ ॥ सोमश्चराजसूयेनइष्ट्वाधर्मं

हानृशंसाद्यकैकेयीपापापापानुबंधिनी ॥ तीक्ष्णासंभिन्नमर्यादातीक्ष्णकर्मणिवर्तते ॥ श्चिंत्यतांतन्मयासह ॥ हितंचायतियुक्तंचप्रयतौवक्तुमर्हथः ॥ ८ ॥
हाप्राज्ञंसानुक्रोशंजितेंद्रियम् ॥ ६ ॥ अहोदशरथोराजानिःस्नेहःस्वसुतंप्रति ॥ प्रजानामन ९ ॥ त्वयिधर्मःपरःसाधोत्वयिसर्वावसुंधरा ॥ प्रतिष्ठितामहा
मसंवासवासिनाम् ॥ शृण्वन्नतिययौवीर कोसलान्कोसलेश्वरः ॥ ८ ॥ ततोवेदश्रुतिंनामः तेमहात्मानंलोकनाथंयथावयम् ॥ ११ ॥ पुत्राश्चपितृवद्रा
षितांदिशम् ॥ ९ ॥ गत्वातुसुचिरंकालंततःशीतवहांनदीम् ॥ गोमतींगोयुतानूपामतरत्सागरं धंयज्ञमाहर्तासिकथंनृप ॥ पृथिव्यांराजवंशानांविनाशो
गैः ॥ मयूरहंसाभिरुतांततारस्यंदिकांनदीम् ॥ ११ ॥ समहींमनुनाराज्ञादत्तामिक्ष्वाकवेपुरा ॥ कोपजः ॥ १४ ॥ सर्वपुरुषशार्दूलगुणैरतुलविक्रम ॥ पृथि
इत्येवचाभाष्यसारथिंतमभीक्ष्णशः ॥ हंसमत्तस्वरःश्रीमानुवाचपुरुषोत्तमः ॥ १३ ॥ कदाहं लेभेरामःसत्यपराक्रमः ॥ १६ ॥ उवाचचशुभंवाक्यंकैके
मात्रापित्राचसंगतः ॥ १४ ॥ नात्यर्थमभिकांक्षामिमृगयांसरयूवने ॥ रतिर्ह्येषाऽतुलालोकरा धर्मसमागतम् ॥ व्याहृतंपुरुषव्याघ्रपृथिव्याःपरिपाल

लनीयाज्ञत्वमेवेत्यलम् ॥ १२ ॥ सूत३प्लुतः शृणुइत्यादिः आभाष्यसंबोध्य हंसमत्तस्वरःमत्तहंसस्वरः ॥ १३ ॥ अथ ध्यांयेक्षत्रियाःपौरुषमागताःशौर्यंप्राप्तास्तेषांसर्वेषांतत्रराजसूयार्थविजये
तिक्रांतस्वदेशमितिशेषः ॥ १४ ॥ ननुमृगयायाःस्त्रीद्यूतमृगयामद्यवाक्पारुष्योग्रदंडताः अर्थस्यदूषणंचेतिराज्ञांव्यसनसनुचिंतंतवेत्यर्थः ॥ १४ ॥ सर्वंतववशेवर्ततइत्यन्वयः ॥ १५ ॥ १६ ॥
प्रजान्यायार्चितादिवैसुख्यापादकतया अत्यंतरतेरेवतस्यांनिषेधात् ननुसर्वथैवनिषेधोऽस्यतआह एषारतिःक्रीडालोकेराजा
गयायांमहेपुत्रिरित्यादिनास्याअप्यनुमतत्वमितिभावः ॥ १५ ॥

यत्कीर्तनमपिविशिष्टफलमित्याहैवंधर्मप्रवचनंचेतिमर्यादाभूतराजसूय
अक्षयः बहुकालानुभवयोग्यफलत्वात् अव्ययः सजातीयधर्मांतरहेतुत्वात् राजसूयानुष्ठानमेवंभूतमितिकिंवक्तव्यं धर्मसंकीर्तनंचेत्यर्थः यउचैनमेवंवेदेतिश्रुतेः ॥ ४ ॥ तत्रराजसूयेशाश्वतोधर्मः क्षत्रियस्यासाधारणोऽक्षयकीर्तिहेतुर्धर्मइत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ हितमिहलोकसुखंआयतियुक्तं उत्तरकाले चहितमित्यर्थः ॥ ८ ॥ ९॥ सर्वावसुंधराप्रतिष्ठिता सार्वभौमत्वादित्याशयः ॥१०॥ प्रजापतिममराइवपरमाप्तत्वेननिरीक्षंतइत्यर्थः ॥११॥ पुत्राःपितृवत् पितरमिवेत्यर्थः ॥१२॥ सत्वंसर्वप्रियः

सहितोयष्टुमि
अक्षयश्चाव्ययश्चैवधर्मसेतुर्मतोमम ॥ धर्मप्रवचनंचैवसर्वपापप्रणाशनम् ॥ ४ ॥ युवाभ्यामात्मभूताभ्यांराजसूयमनुत्तमम् ॥ सहितोयष्टुमिच्छामितत्रधर्मस्तुशाश्वतः ॥ ५ ॥ इष्ट्वातुराजसूयेनमित्रःशत्रुनिबर्हणः ॥ सुहुतेनसुयज्ञेनवरुणत्वमुपागमत् ॥ ६ ॥ सोमश्चराजसूयेनइष्ट्वाधर्मेणधर्मवित् ॥ प्राप्तश्चसर्वलोकेषुकीर्तिस्थानंचशाश्वतम् ॥ ७ ॥ अस्मिन्नहंनियच्छ्रेयश्चिंत्यतांतन्मयासह ॥ हितंचायतियुक्तंचप्रयतौवक्तुमर्हथः ॥ ८ ॥ श्रुत्वातुराघवस्यैतद्वाक्यंवाक्यविशारदः ॥ भरतःप्रांजलिर्भूत्वावाक्यमेतदुवाचह ॥ ९ ॥ त्वयिधर्मःपरःसाधोत्वयिसर्वावसुंधरा ॥ प्रतिष्ठितामहाबाहोयशश्चामितविक्रम ॥ १० ॥ महीपालाश्चसर्वेत्वांप्रजापतिमिवामराः ॥ निरीक्षंतेमहात्मानंलोकनाथंयथावयम् ॥ ११ ॥ पुत्राश्चपितृवद्राजन्पश्यंतित्वांमहाबल ॥ पृथिव्यागतिभूतोसिप्राणिनामपिराघव ॥ १२ ॥ सत्वमेवंविधंयज्ञमाहर्तासिकथंनृप ॥ पृथिव्यांराजवंशानांविनाशोयत्रदृश्यते ॥ १३ ॥ पृथिव्यांयेचपुरुषाराजन्पौरुषमागताः ॥ सर्वेषांभवितातत्रसंक्षयःसर्वकोपजः ॥ १४ ॥ सत्वंपुरुषशार्दूलगुणैरतुलविक्रम ॥ पृथिवींनार्हसेहंतुंवशेहितववर्तते ॥ १५ ॥ भरतस्यतुतद्वाक्यंश्रुत्वाऽमृतमयंयथा ॥ प्रहर्षमतुलंलेभेरामःसत्यपराक्रमः ॥ १६ ॥ उवाचचशुभंवाक्यंकैकेयीनंदवर्धनम् ॥ प्रीतोस्मिपरितुष्टोस्मितवाद्यवचनेऽनघ ॥ १७ ॥ इदंवचनमक्लीबंत्वयाधर्मसमागतम् ॥ व्याहृतंपुरुषव्याघ्रपृथिव्याःपरिपालनम् ॥ १८ ॥

एवंविधत्वंदर्शयतिपृथिव्यामिति ॥ १३ ॥ राजसूयस्यसर्वराजविजयपूर्वसाधनीयत्वात्तत्रचास्मासुप्रवृत्तेषुपृथिव्यांयेक्षत्रियाःपौरुषमागताःशौर्यंप्राप्तास्तेषांसर्वेषांतत्रराजसूयार्थविजये सर्वप्रकोपजःसंक्षयोऽवश्यंभविता एवंविधंक्षत्रियनाशकंयज्ञंसर्वराजभिःपितृवदुपास्यमानःकथमाहर्तुमर्हसि सर्वथैवानुचितंतवेत्यर्थः ॥ १४ ॥ सर्वंतववशेवर्ततइत्यन्वयः ॥ १५ ॥ १६ ॥ वचनंवचनरूपेनिमित्ते अनघेतिसंबुद्धिः ॥ १७ ॥ १८ ॥

एष्यदस्मदभिप्रायात् अस्मदभिप्रायमेष्यतः अस्मच्चिकीर्षाप्राप्स्यत इत्यर्थः निवर्तयामि अभिप्रायमिति शेषः तत्र हेतुस्त्वया सुव्याहृतम् ॥ १९ ॥ तुरप्यर्थे बालानामपि यद्वाक्यं युक्तमुचितं सा धुशुभावहं च तद्ग्राह्यमेव हि यस्मात्तस्मात्ते वाक्यमीदृशं शृणोमि ॥ २० ॥ ॥ इति श्रीरामाभिरामे श्रीरामीये रामायणतिलके वाल्मीकीये आदिकाव्ये उत्तरकांडे त्र्यशीतितमः सर्गः ॥ ८३ ॥ ॥८४॥ अथ लक्ष्मणेनाश्वमेध एव सर्वार्थसाधको नुष्ठेय इत्युक्तात दुपोद्बलकं वृत्रवधाख्यानं प्रस्तूयते तथेति ॥ १ ॥ सर्वपाप्मनां पावनोस्ति यतश्च स पावनो ऽतो रोचतामनुष्ठातुमिति शेषः ॥ २ ॥ अश्वमे



एष्यदस्मदभिप्रायाद्राजसूयात्क्रतूत्तमात् ॥ निवर्तयामि धर्मज्ञ तव सुव्याहृतेन च ॥ १९ ॥ लोकपीडाकरं कर्म न कर्तव्यं विचक्षणैः ॥ बालानां तु शुभं वाक्यं ग्राह्यं लक्ष्मणपूर्वज ॥ तस्माच्छृणोमि ते वाक्यं साधुयुक्तं महाबल ॥ २० ॥ ॥ इत्यार्षे श्रीमद्रामायणे वाल्मीकीये आदिकाव्ये उत्तरकांडे त्र्यशीतितमः सर्गः ॥ ८३ ॥ ॥ ८४ ॥ ॥ तथोक्तवति रामे तु भरते च महात्मनि ॥ लक्ष्मणोथ शुभं वाक्यमुवाच रघुनंदनम् ॥ १ ॥ अश्वमेधो महायज्ञः पावनः सर्वपाप्मनाम् ॥ पावनस्तव दुर्धर्षो रोचतां रघुनंदन ॥ २ ॥ श्रूयते हि पुरावृत्तं वासवे सुमहात्मनि ॥ ब्रह्महत्यावृतः शक्रो हयमेधेन पावितः ॥ ३ ॥ पुरा किल महाबाहो देवासुरसमागमे ॥ वृत्रो नाम महानासीद्दैतेयो लोकसंमतः ॥ ४ ॥ विस्तीर्णा योजनशतमुच्छ्रितस्त्रिगुणं ततः ॥ अनुरागेण लोकांस्त्रीन्स्नेहात्पश्यति सर्वतः ॥ ५ ॥ धर्मज्ञश्च कृतज्ञश्च बुद्ध्या च परिनिष्ठितः ॥ शशास पृथिवीं स्फीतां धर्मेण सुसमाहितः ॥ ६ ॥ तस्मिन्प्रशासति तदा सर्वकामदुघा मही ॥ रसवंति प्रसूनानि मूलानि च फलानि च ॥ ७ ॥ अकृष्टपच्या पृथिवी सुसंपन्ना महात्मनः ॥ स राज्यं तादृशं भुंक्ते स्फीतमद्भुतदर्शनम् ॥ ८ ॥ तस्य बुद्धिः समुत्पन्ना तपः कुर्यामनुत्तमम् ॥ तपो हि परमं श्रेयः संमोहमितरत्सुखम् ॥ ९ ॥ स निक्षिप्य सुतं ज्येष्ठं पौरेषु मधुरेश्वरम् ॥ तप उग्रं समातिष्ठत्तापयन्सर्वदेवताः ॥ १० ॥ तपस्तप्यति वृत्रे तु वासवः परमार्तवत् ॥ विष्णुं समुपसंक्रम्य वाक्यमेतदुवाच ह ॥ ११ ॥ तपस्यता महाबाहो लोकाः सर्वे विनिर्जिताः ॥ बलवान्स हि धर्मात्मा नैनं शक्ष्यामि शासितुम् ॥ १२ ॥

धस्य सर्वपापशोधकत्वं सर्वपाप्मानं तरति तरति ब्रह्महत्यामिति श्रुतिसिद्धं बोधयितुं पुराणवृत्तांतमाह श्रूयते हीति वासवे वासवविषये ॥ ३ ॥ देवासुरसमागमे देवासुरस्नेहकाले ॥ ४ ॥ ततस्त्रिगुणं योजनशतत्रयमित्यर्थः त्रींल्लोकांस्तद्वर्तिप्राणिनो नुरागेण स्वीयत्वाभिमानेन हेतुना स्नेहात्संतोषयुक्तचक्षुषा पश्यति स्म ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ इतरत्सुखं विषयसुखं संमोहं संमोहकरम् ॥ ९ ॥ मधुरेश्वरं मधुरश्चासौ तन्नामकत्वादीश्वरस्तम् ॥ १० ॥ परमार्तवत्परमार्तः सन् ॥ ११ ॥ १२ ॥

भूयः अतःपरमपि धरिष्यंति भूतजातमितिशेषः तावदस्यवशानुगाःसर्वैवयंदेवगणाभविष्यामइतिशेषः ॥ १३ ॥ क्षणंनभवेन्नजीवेदित्यर्थः ॥ १४ ॥ त्वत्संतोषेणैवतस्यसौख्यमित्याह यदा हीति तदारभ्यैवेदंतस्यमाहात्म्यमितिशेषः ॥ १५ ॥ त्वत्कृतेन रक्षणेनेतिशेषः ॥ १६ ॥ वृत्रघातेनहेतुनातेषांसाह्यमुपकारंकुरु हशब्दःपादपूरकः ॥१७॥ यद्यपीदंसुरसाहाय्यकरणमन्येषाम

यद्यसौतप आतिष्ठेद्भूयएवसुरेश्वर॥ यावल्लोकाधरिष्यंतितावदस्यवशानुगाः॥ १३॥ तंचैनंपरमोदारमुपेक्षसिमहाबल॥ क्षणंहिनभवेद्वृत्रःक्रुद्धे त्वयिसुरेश्वर॥ १४॥ यदाहिप्रीतिसंयोगंत्वयाविष्णोसमागतः॥ तदाप्रभृतिलोकानांनाथत्वमुपलब्धवान्॥ १५॥ सत्वंप्रसादंलोकानांकुरुष्वसु समाहितः॥ त्वत्कृतेनहिसर्वस्यात्प्रशांतमरुजंजगत्॥१६॥ इमेहिसर्वेविष्णोत्वांनिरीक्षंतेदिवौकसः॥ वृत्रघातेनमहतातेषांसाह्यंकुरुष्वह॥१७॥ त्वयाहिनित्यशःसाह्यंकृतमेषांमहात्मनाम्॥ असह्यमिदमन्येषामगतीनांगतिर्भवान्॥ १८॥ ॥इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्ये उत्तरकांडेचतुरशीतितमःसर्गः॥८४॥ ॥७॥ ॥लक्ष्मणस्यतुतद्वाक्यंश्रुत्वाशत्रुनिबर्हणः॥ वृत्रघातमशेषेणकथयेत्याहसुव्रत॥ १॥ राघ वेणैवमुक्तस्तुसुमित्रानंदवर्धनः॥ भूयएवकथांदिव्यांकथयामाससुव्रतः॥ २॥ सहस्राक्षवचःश्रुत्वासर्वेषांचदिवौकसाम्॥ विष्णुर्देवानुवाचेदंस र्वानिंद्रपुरोगमान्॥ ३॥ पूर्वंसौहृदबद्धोस्मिवृत्रस्येहमहात्मनः॥ तेनयुष्मत्प्रियार्थंहिनाहंहन्मिमहासुरम्॥ ४॥ अवश्यंकरणीयंचभवतांसुखमु त्तमम्॥ तस्मादुपायमाख्यास्येसहस्राक्षोवधिष्यति॥५॥ त्रेधाभूतंकरिष्यामिआत्मानंसुरसत्तमाः॥ तेनवृत्रंसहस्राक्षोवधिष्यतिनसंशयः॥६॥ एकांशोवासवंयातुद्वितीयोवज्रमेवतु॥ तृतीयोभूतलंयातुतदावृत्रंहनिष्यति॥७॥ तथाब्रुवतिदेवेशेदेवावाक्यमथाब्रुवन्॥ एवमेतन्नसंदेहोयथा वदसिदैत्यहन्॥ ८॥ भद्रंतेस्तुगमिष्यामोवृत्रासुरवधैषिणः॥ भजस्वपरमोदारवासवंस्वेनतेजसा॥९॥

सुराणामसह्यंतथापिकुरु यस्मादगतीनामस्माकंसुराणांभवानेवगतिःशरणम् ॥ १८ ॥ ॥ इतिश्रीरामा०श्रीरा०वा०आ०उ०चतुरशीतितमःसर्गः ॥ ८४ ॥ ॥७॥ ॥ अथप्रकृतो पयुक्तशेषकथापूरणं लक्ष्मणस्येति ॥ १ ॥ दिव्यांकथांप्रकृताम् ॥ २ ॥ ३ ॥ पूर्वंयुष्माभिस्तद्वधप्रार्थनात्पूर्वंसौहृदबद्धःप्रीतिबद्धः ॥ ४ ॥ ५ ॥ त्रेधाभूतंत्रेधाविभक्तंआत्मानंस्वतेजोमूर्तिम् ॥ ६ ॥ तृतीयोभूतलंयातु पतद्वृत्रदेहधारणार्थमित्यर्थः इंद्रस्यवृत्रहननजब्रह्महत्यानिर्वृत्तियावद्भूलोकरक्षणार्थंचेत्यपिबोध्यम् ॥ ७ ॥ ८ ॥९॥

॥ १० ॥ तेजसाप्रागुक्तलक्षणेनस्वेनतेजसा भूतं व्याप्तं पिबंतमित्यादिनपआधिक्यपरम् ॥ ११ ॥ १२ ॥ १३ ॥ दीप्तेनदीप्यमानेनमहार्चिषामहार्चिष्मदयःपिंडादिसदृशेनवज्रेणवज्रकृतच्छेदे नहेतुनापतताहत्रशिरसाजगत्त्रासमुपागमत् ॥ १४ ॥ असंभाव्यंअनपराधिनस्तप्यतस्तूष्णींस्थितस्यवधमनुचिंतिं चितयानोविबुधाधिपोलोकस्यांतंलोकालोकात्परंतमःप्रदेशंजगाम ब्रह्महत्यात्तियापलायितोनून ॥ १५ ॥ तमिंद्रमनुगमनंतदभिमानिदेवतारूपेण इंद्रहतपुत्रेणत्वष्ट्रा मुनिनापुत्रेच्छयास्वाहेंद्रशत्रुर्वर्धस्वेतिहोमेकृतेआहवनीयाज्जातोवृत्रोब्राह्मणइति तमिंद्रंब्रह्मह



ततःसर्वेमहात्मानःसहस्राक्षपुरोगमाः ॥ तदरण्यमुपाक्रामन्यत्रवृत्रोमहासुरः ॥ १० ॥ तेपश्यंस्तेजसाभूतंतपंतमसुरोत्तमम् ॥ पिबंतमिवलोकांस्त्रीन्निर्दहंतमिवांबरम् ॥ ११ ॥ दृष्ट्वैवचासुरश्रेष्ठंदेवास्त्रासमुपागमन् ॥ कथमेनंवधिष्यामःकथंनस्यात्पराजयः ॥ १२ ॥ तेषांचिंतयतांतत्रसहस्राक्षःपुरंदरः ॥ वज्रंप्रगृह्यपाणिभ्यांप्राहिणोद्वृत्रमूर्धनि ॥ १३ ॥ कालाग्निनेवघोरेणदीप्तेनेवमहार्चिषा ॥ पततावृत्रशिरसाजगत्त्रासमुपागमत् ॥ १४ ॥ असंभाव्यंवधंतस्यवृत्रस्यविबुधाधिपः ॥ चिंतयानोजगामाशुलोकस्यांतंमहायशाः ॥ १५ ॥ तमिंद्रंब्रह्महत्याशुगच्छंतमनुगच्छति ॥ अपतच्चास्यगात्रेषुतमिंद्रंदुःखमाविशत् ॥ १६ ॥ हतारयःप्रनष्टेंद्रादेवाःसाग्निपुरोगमाः ॥ विष्णुंत्रिभुवनेशानंमुहुर्मुहुरपूजयन् ॥ १७ ॥ त्वंगतिःपरमेशानपूर्वजोजगतःपिता ॥ रक्षार्थंसर्वभूतानांविष्णुत्वमुपजग्मिवान् ॥ १८ ॥ हतश्चायंत्वयावृत्रोब्रह्महत्याचवासवम् ॥ बाधतेसुरशार्दूलमोक्षंतस्यविनिर्दिश ॥ १९ ॥ तेषांतद्वचनंश्रुत्वादेवानांविष्णुरब्रवीत् ॥ मामेवयजतांशक्रःपावयिष्यामिवज्रिणम् ॥ २० ॥ पुण्येनहयमेधेनमामिष्ट्वापाकशासनः ॥ पुनरेष्यतिदेवानामिंद्रत्वमकुतोभयः ॥ २१ ॥ एवंसंदिश्यतांवाणींदेवानांचामृतोपमाम् ॥ जगामविष्णुर्देवेशःस्तूयमानस्त्रिविष्टपम् ॥ २२ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआ० उत्तरकांडेपंचाशीतितमःसर्गः ॥ ८५ ॥ ॥ ५ ॥

त्यायस्तमिंद्रम् ॥ १६ ॥ १७ ॥ पूर्वजोजगतःपिता अहमस्मिप्रथमजाऋतस्येतिश्रुतेः एवंकारणमूर्तिर्हिरण्यगर्भएवसर्वभूतरक्षोद्देशेनविष्ण्वाकारत्वंपालनशक्तिप्राधान्येनप्राप्तः ॥ १८ ॥ यद्यपिविष्णुमर्त्यवलंबनंतत्कार्यतेकृतंदुष्टवधेनैवशिष्टपालनादित्याह हतश्चेति ॥ १९ ॥ मांऔपासनाग्निहोत्राद्यश्वमेधांताशेषयज्ञयजनीयंविशिष्याश्वमेधस्यसाक्षाद्दैवतंमामेवशक्रोयजतां इंद्रायस्वाहेत्यादिमंत्रेश्वतत्तद्देवतांतर्याम्यहमेवतत्तत्पदैर्बोध्यइतिभावः ॥ २० ॥ २१ ॥ २२ ॥ ॥ इतिश्रीरा० श्रीरामीयेरा० वाल्मीकीयेआदिकाव्येउत्तरकांडेपंचाशीतितमःसर्गः ॥ ८५ ॥

तत्रदेशेंगदस्यपुरीरामेणनिवेशिता लक्ष्मणद्वारेतिशेषः ॥ ८ ॥ मल्लस्यदृढांगस्यचंद्रकेतोर्मल्लभूम्यांतदाख्येऔत्तरे अस्यैवचंद्रकांतिनामांतरम् तत्रचंद्रकांताख्यापुरीनिवेशिता ॥ ९ ॥ युद्धेदुरा
धर्षौरामादयोभिषेकंचक्रिरे अंगदचंद्रकेत्वोरितिशेषः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ तथैवोष्यचंद्रकेतुसमीपेइतिशेषः ॥ १४ ॥ नजज्ञातेनावगतवंतौ संधिरार्षः ॥ १५ ॥ दशसहस्राणि
आयुस्त्वेकादशसहस्राणिइतिस्पष्टमेव ॥ १६ ॥ धर्मपुरेधर्मसाधनेपुरेअयोध्यायांअयोध्यामथुरामायाकाशीकांचीअवंतिका पुरीद्वारवतीचैवसप्तैतामोक्षदायकाइतिस्मृतेः ॥ १७ ॥ ॥ इ

अंगदीयापुरीरम्याप्यंगदस्यनिवेशिता ॥ रमणीयासुगुप्ताचरामेणाक्लिष्टकर्मणा ॥ ८ ॥ चंद्रकेतोश्चमल्लस्यमल्लभूम्यांनिवेशिता ॥ चंद्रकांतेतिवि
स्यातादिव्यास्वर्गपुरीयथा ॥ ९ ॥ ततोरामःपरांप्रीतिंलक्ष्मणोभरतस्तथा ॥ ययुर्युद्धेदुराधर्षाअभिषेकंचचक्रिरे ॥ १० ॥ अभिषिच्यकुमारौद्वौप्र
स्थाप्यसुसमाहितौ ॥ अंगदंपश्चिमांभूमिंचंद्रकेतुमुदङ्मुखम् ॥ ११ ॥ अंगदंचापिसौमित्रिर्लक्ष्मणोनुजगामह ॥ चंद्रकेतोस्तुभरतःपार्ष्णिग्राहो
बभूवह ॥ १२ ॥ लक्ष्मणस्त्वंगदीयायांसंवत्सरमथोषितः ॥ पुत्रेस्थितेदुराधर्षेअयोध्यांपुनरागमत् ॥ १३ ॥ भरतोपितथैवोष्यसंवत्सरमतोधिकम् ॥
अयोध्यांपुनरागम्यरामपादावुपास्तसः ॥ १४ ॥ उभौसौमित्रिभरतौरामपदावनुव्रतौ ॥ कालंगतमपिस्नेहान्नजज्ञातेऽतिधार्मिकौ ॥ १५ ॥ एवं
वर्षसहस्राणिदशतेषांययुस्तदा ॥ धर्मेप्रयतमानानांपौरकार्येषुनित्यदा ॥ १६ ॥ विहृत्यकालंपरिपूर्णमानसाःश्रियावृताधर्मपुरेचसंस्थिताः ॥ त्रयः
समिद्धाहुतिदीप्ततेजसोहुताग्नयःसाधुमहाध्वरेत्रयः ॥ १७ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआ० उत्तरकांडेद्व्युत्तरशततमःसर्गः ॥ १०२ ॥
कस्यचित्त्वथकालस्यरामेधर्मपरेस्थिते ॥ कालस्तापसरूपेणराजद्वारमुपागमत् ॥ १ ॥ दूतोह्यतिबलस्याहंमहर्षेरमितौजसः ॥ रामंदिदृक्षुरायातः
कार्येणहिमहाबलः ॥ २ ॥ तस्यतद्वचनंश्रुत्वासौमित्रिस्त्वरयान्वितः ॥ न्यवेदयतरामायतापसंतंसमागतम् ॥ ३ ॥ जयस्वराजधर्मेणउभौलोकौ
महाद्युते ॥ दूतस्त्वांद्रष्टुमायातस्तपसाभास्करप्रभः ॥ ४ ॥

तिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेद्व्युत्तरशततमःसर्गः ॥ १०२ ॥ अथरामायस्वीयवैष्णवधामागमनकालनिवेदनायब्रह्मणोदूतप्रेषणम् कस्यचिदिति
कस्यचित्कालस्यापगमानंतरमितिशेषः रामेधर्मपरेस्थितेकालस्तापसरूपेणराजद्वारमुपागमत् ॥ १ ॥ अतिबलस्यमहर्षेः जगत्प्राणरूपत्वाच्चतुर्वेदमुखत्वाच्चसत्यवचस्त्वाच्चब्रह्मातिबलोमहर्षिः
॥ २ ॥ ३ ॥ उभौलोकौजयस्वेत्युक्त्यापरलोकप्रवेशकालसूचनम् ॥ ४ ॥

तस्यवाक्यंकृत्यस्यदूतत्वस्याज्ञाधारीत्यर्थः ॥ ५ ॥ तेजोभिरंशुभिरित्येतेपदेशरीरकांतिकिरणप्रतिपादकेइतिनपुनरुक्तिः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ अस्ययस्यत्वंदूतस्तस्यवाक्यं।निसंदेशवाक्या निप्राप्यचनिवेदय तत्रहेतुर्यन्नोदूतइति ॥ १० ॥ द्वंद्वेरहस्ये हितंवैयद्यवेक्षसे देवानामितिशेषः देवगोप्यगोपनेहिदेवानांहितंभवतीतिभावः ॥ ११ ॥ नैतावदेवकिंत्वन्यापिप्रतिज्ञाकार्येत्याह यइति यःश्रृणोतीत्यस्यतद्वचनंनिरीक्षेद्वाभंत्रयितारावितिशेषः सतववध्यइतिकथमेवमतिक्रूराप्रतिज्ञेत्यत्राह भवेदिति तस्यमुनिमुख्यस्यवचनमेवंवैभवेत् उक्तसंकेतपूर्वमेवब्रूहीत्येवाभदादित्यर्थः

तद्वाक्यंलक्ष्मणोक्तंवैश्रुत्वारामउवाचह ॥ प्रवेश्यतांमुनिस्तातमहौजास्तस्यवाक्यधृक् ॥ ५॥ सौमित्रिस्तुतथेत्युक्त्वाप्रावेशयततंमुनिम् ॥ ज्वलंतमिवतेजोभिःप्रदहंतमिवांशुभिः ॥ ६ ॥ सोभिगम्यरघुश्रेष्ठंदीप्यमानंस्वतेजसा ॥ ऋषिर्मधुरयावाचावर्धस्वेत्याहराघवम् ॥ ७॥ तस्मैरामोमहातेजाःपूजामर्घ्यपुरोगमाम् ॥ ददौकुशलमव्यग्रंप्रष्टुंचैवोपचक्रमे ॥ ८ ॥ पृष्टश्चकुशलंतेनरामेणवदतांवरः ॥ आसनेकांचनेदिव्येनिषसादमहायशाः ॥ ९ ॥ तमुवाचततोरामःस्वागतंतेमहामते ॥ प्रापयास्यचवाक्यानियतोदूतस्त्वमागतः ॥ १० ॥ चोदितोराजसिंहेनमुनिर्वाक्यमभाषत ॥ द्वंद्वेत्वेतत्प्रवक्तव्यंहितंवैयद्यवेक्षसे ॥ ११ ॥ यःश्रृणोतिनिरीक्षेद्वासवध्योभवितातव ॥ भवेद्वैमुनिमुख्यस्यवचनंयद्यवेक्षसे ॥ १२ ॥ तथेतिचप्रतिज्ञायरामोलक्ष्मणमब्रवीत् ॥ द्वारितिष्ठमहाबाहोप्रतिहारंविसर्जय ॥ १३ ॥ समेवध्यःखलुभवेद्वाचंद्वंद्वंसमीरितम् ॥ ऋषेर्ममचसौमित्रेपश्येद्वाश्रृणुयाच्चयः ॥ १४ ॥ ततोनिक्षिप्यकाकुत्स्थोलक्ष्मणंद्वारिसंग्रहम् ॥ तमुवाचमुनेवाक्यंकथयस्वेतिराघवः ॥ १५ ॥ तत्तेमनीषितंवाक्यंयेनवासिसमाहितः ॥ कथयस्वाविशंकस्त्वंममापिहृदिवर्तते ॥ १६ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेकालागमनंनामत्र्युत्तरशततमःसर्गः ॥ १०३ ॥ ॥ ९४ ॥ ॥ श्रृणुराजन्महासत्वयदर्थमहमागतः ॥ पितामहेनदेवेनप्रेषितोस्मिमहाबल ॥ १ ॥

यद्यवेक्षसेतथासंकेतनपरिपालनमितिशेषः ॥ १२ ॥ प्रतिहारंद्वारपालंविसर्जयान्यतोपसारय ॥ १३ ॥ किमर्थंतत्राह समेइति सौमित्रेममऋषेश्चद्वंद्वंरहस्यांवाचंयःश्रृणुयात्यश्चनौपश्येद्वासमेमयावध्यइतिखलुसमीरितंप्रतिज्ञातम् ॥ १४ ॥ संग्रहंसम्यगुक्तार्थग्रहणवंतम् ॥ १५ ॥ तेमनीषितंयेनवासमाहितःप्रेषितस्तस्यमनीषितंकथयस्व ममापिहृदिवर्तते किमेवंविधंरहस्यंतदवश्यंमयाश्रोतव्यमितिशेषः यद्वा त्वयावक्ष्यमाणंवैकुंठगमनंममापिहृदिवर्ततइत्यर्थः ॥ १६ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवा०आ०उ०त्र्युत्तरशततमःसर्गः ॥ १०३ ॥ अथब्रह्मसंदेशकथनम् श्रृण्विति यत्संदेशकथनार्थमहमागतस्तंसंदेशंश्रृणु किंचयेनसंदेशःप्रेषितःसभगवान्पितामहएवनकेवलंमुनिरेवेत्याह पितामहेनेति ॥ १ ॥

तत्प्रेषितदूतोप्यहंत्वत्संबंध्येवेत्याह तवाहंपूर्वकेभावेइति पूर्वावस्थायांहिरण्यगर्भोत्पत्तिसमयेहिरण्यगर्भावस्थायांवा कथमहंपुत्रस्तत्राह मायासंभावितःमाययासंकल्पेनसंभावितउत्पादितः सर्वसमाहरःसर्ववस्तुसंहारकर्तेतितीर्थः कतकस्तुतवाहंपूर्वसद्भावेइतिपाठः पूर्वसृष्टेःप्राक्सद्भावे सदेवसोम्येदमग्रआसीदितिश्रुतेः सत्तारूपब्रह्मभावेकरिष्यमाणाखिलसंसारस्यसृष्टिस्थितिसंहार निग्रहानुग्रहलक्षणपंचकृत्यनिर्वाहकःकालाख्यःक्षणधारारूपोनाडीदिनपक्षादिविभागनिर्वाहकःपुत्रोमायासंभावितस्त्वदीयमायापरिणामइत्यर्थः शेषंप्राग्वत् यद्यपिरामोहिरण्यगर्भांशवि ष्णोरेवावतारस्तथापितस्यस्वस्वरूपांशेनाव्रतज्ञानत्वाद्वामदेववदेवंव्यपदेशेनदोषइत्याह यत्तुकतकेनसद्भावशब्देनहिरण्यगर्भउक्तस्तत्तुतुच्छमितिस्पष्टमेवाद्वैतविद्याविदाम् ॥२॥ एवंस्वस्वरूपमु क्त्वातत्संदेशमाह पितामहश्चेति चतुर्मुखाज्जातानांप्रजापतीनांलोकपितृत्वाच्चतुर्मुखःपितामहः सलोकानांभूरादीनांपतिःपालयिता सयदाहतद्वदामीतिशेषः तदेवाह समयस्तेइति भवंतुविगत ज्वराइत्यंतोब्रह्मसंदेशः लोकान्देवमनुष्यादीन्रावणादिनोरक्षितुंयःसमयःकृतः दशवर्षसहस्राणिदशवर्षशतानिच वत्स्यामिमानुषेलोकेपालयन्पृथिवीमिमामित्येवंरूपकालविषयःकृतःसप

**तवाहंपूर्वकेभावेपुत्रःपरपुरंजय॥ मायासंभावितोवीरकालःसर्वसमाहरः॥ २ ॥ पितामहश्चभगवानाहलोकपतिःप्रभुः॥ समयस्तेकृतःसौम्यलो कान्संपरिरक्षितुम् ॥ ३ ॥ संक्षिप्यहिपुरालोकान्माययास्वयमेवहि॥ महार्णवेशयानोप्सुमांत्वंपूर्वमजीजनः॥ ४ ॥ भोगवंतंततोनागमनंतमु दकेशयम्॥ माययाजनयित्वात्वंद्वौचसत्त्वौमहाबलौ॥ ५॥ मधुंचकैटभंचैवययोरस्थिचयैर्वृता॥ इयंपर्वतसंबाधामेदिनीचाभवत्तदा ॥ ६ ॥**

रिपूर्णइतिशेषः ॥ ३ ॥ अथतत्त्वतोज्ञातसत्स्वरूपस्यममकथंमानुषदेहपरिग्रहइत्यत्रसप्रयोजनंतत्प्रक्रियामाह संक्षिप्येति पुराजगत्सृष्टेःपूर्वकालेमाययासर्वसंहारसमर्थस्वशक्त्यासंक्षिप्यउप संहृत्य एतेनाप्रयासेनसकलसंहारकर्तृत्वंब्रह्मलक्षणमुक्तम् स्वयमेवेत्यनेनास्यसंहारस्यनरुद्रादिद्वारकत्वम् तेषामपिसंहार्यकोटिनिविष्टत्वादितिदर्शितम् एवंसंहारंकृत्वामहदहंकारपंचतन्मात्रा दिसृष्टिद्वारेणैतत्तांसृष्टिंकृत्वातद्रूपेमहार्णवेशयानइत्यनेनैवोदकशायित्वेलब्धेपुनरप्स्विततदापृथिवीतत्त्वाद्यभावप्रदर्शनार्थम् मांपूर्वमजीजनः योब्रह्माणंविदधातिपूर्वमितिश्रुतेः हिरण्यगर्भसृ ष्टिद्वाराब्रह्मांडसृष्टौक्रियमाणायांतदंडान्ममोद्भवइत्यर्थः ॥ ४ ॥ तदुत्पत्तिप्रकारमाह भोगवंतमिति ततःपरंसृष्टयेस्रष्टव्यभूधरणक्षमंभोगवंतंप्रशस्तभोगंअनंताख्यंनागमुदकेशयंमाययाजन यित्वातत्रचनिर्मायस्थापयित्वातदुरगेशयनवांस्त्वमभूःअथकर्दमप्रायभूविग्रहस्थैर्यायमहाबलौद्वौसत्त्वौप्राणिनौअजीजनः ॥ ५ ॥ कौतौतत्राह मधुंचेति तत्रमधुर्मेदःप्रधानः कैटभोस्थिप्रधा नः तत्सृष्टिप्रयोजनमाह ययोरित्यादि ययोर्वधानंतरंइयंनिर्मितान्नूरस्थिचयैर्वृतासतीपर्वतसंबाधामेदोयुक्ततयादृक्षाद्युत्पत्त्युचितस्निग्धभूप्रदेशयुक्ततयामेदिनीतिनाम्नाभूत् एवंचतस्याःप्रजा सर्गयोग्यतासिद्धा ॥ ६ ॥

अथचतुर्मुखसृष्टिः पद्मेइति ततःस्वनिर्मितोरगेशयस्यविषहस्यनाभिप्रदेशेअर्कसंकाशमर्कप्रभंदिव्यंपद्ममुत्पाद्यतस्मिन्दिव्येपद्मेमांचतुर्मुखमुत्पाद्यप्राजापत्यंसृष्टिरूपंकर्ममयित्वयानिवेशितमि त्यन्वयःमेप्रजापतिरितिनाम ॥ ७ ॥ ततःसोहंत्वयासंन्यस्तभारःसंन्यस्तसृष्टिभारःस्वकार्यंसृष्टिलक्षणंसंपाद्यतद्रक्षणमपश्यन्जगत्पतिंत्वामुपास्य यतोभवान्ममतेजस्करःसृष्टिसमर्थज्ञानक्रिया शक्तिमयतेजःप्रदोऽतस्त्वमेवभूतेषुरक्षांविधत्स्वेतिप्रार्थितवानितिशेषः ॥ ८ ॥ ततोहेतोःरक्षणस्यसर्वशक्तौत्वय्येवनिवेशितत्वहेतोः दुर्धर्षात्तस्माद्भावात्ब्रह्मैवभूतानांज्येष्ठंतेनकोर्हतिस्पर्धितु मितिदुर्धर्षत्वस्यभावात् सनातनात्सकलसंसारमूलकारणत्वेनकालापरिच्छेद्यात् त्रिगुणमहत्तत्त्वाख्यहैरण्यगर्भभावात्सत्त्वप्राधान्येनविष्णुत्वंप्राप्तवान् ॥ ९ ॥ ततःअदित्यांवीर्यवान्दिव्यज्ञान क्रियालक्षणवीर्यवान्पुत्रोभूत्त्वंभ्रातॄणामदितिपुत्रेंद्रादीनांवीर्यवर्धनउपेंद्राख्योभूः सचतत्तत्कृत्यकालेतेषांसाह्यायकल्पसे ॥ १० ॥ अतःसत्वंसकलप्रजारक्षणासाधारणकृत्यउपेंद्रःसांप्रतंरा

**पद्मेदिव्येर्कसंकाशेनाभ्यामुत्पाद्यमामपि ॥ प्राजापत्यंत्वयाकर्ममयिसर्वंनिवेशितम् ॥ ७ ॥ सोहंसंन्यस्तभारोहित्वामुपास्यजगत्पतिम् ॥ रक्षां विधत्स्वभूतेषुममतेजस्करोभवान् ॥ ८ ॥ ततस्त्वमसिदुर्धर्षात्तस्माद्भावात्सनातनात् ॥ रक्षांविधास्यन्भूतानांविष्णुत्वमुपजग्मिवान् ॥ ९ ॥ अ दित्यांवीर्यवान्पुत्रोभ्रातॄणांवीर्यवर्धनः ॥ समुत्पन्नेषुकृत्येषुतेषांसाह्यायकल्पसे ॥ १० ॥ सत्वमुज्जास्यमानासुप्रजासुजगतोवर ॥ रावणस्यवधा कांक्षीमानुषेषुमनोदधाः ॥ ११ ॥ दशवर्षसहस्राणिदशवर्षशतानिच ॥ कृत्वावासस्यनियमंस्वयमेवात्मनापुरा ॥ १२ ॥ सत्वंमनोमयःपुत्रःपूर्णायु र्मानुषेष्विह ॥ कालोनरवरश्रेष्ठसमीपमुपवर्तितुम् ॥ १३ ॥ यदिभूयोमहाराजप्रजाइच्छस्युपासितुम् ॥ वसवावीरभद्रंतेएवमाहपितामहः ॥ १४ ॥ अथवाविजिगीषातेसुरलोकायराघव ॥ सनाथाविष्णुनादेवाभवंतुविगतज्वराः ॥ १५ ॥**

वणेनप्रजासुउज्जास्यमानासुहिंस्यमानासुहेजगतोवरजगच्छ्रेष्ठस्वयमेवसर्वलोकानुग्रहायरावणस्यवधाकांक्षीभूत्वादशवर्षसहस्राणिदशवर्षशतानिचवासस्यनियमंपरिच्छेदंपुरात्मनास्वयमेव कृत्वामानुषेषुमानुषजातिषुमनोऽदधाः ॥ ११ ॥ १२ ॥ सत्वंमानुषेषुमनोमयःस्वसंकल्पमयःस्वसंकल्पादेवकस्यचित्पुत्रोजातःसचतत्रपूर्णायुः त्वत्संकल्पितायुषःपूर्णत्वमित्यर्थः यद्वा श्रीमदादि गुरोस्तुरीयब्रह्मणोयस्यभासासर्वमिदंविभातीत्यादिश्रुतिसिद्धस्यसंकल्पमयोज्येष्ठपुत्रोहिरण्यगर्भःकार्यब्रह्मरूपस्तदभिन्नस्वभूतब्रह्मण्यनावृतज्ञानःस्वसंकल्पादेवमानुषेष्वपिकस्यचित्पुत्रस्तत्रा पिपूर्णायुर्जातोयदेवमतोहेनरवरश्रेष्ठायंकालस्तेसमीपमुपगत्योपवर्तितुंविज्ञापयितुंप्रेषितइतिशेषः ॥ १३ ॥ अस्मत्कृत्यमेतावत् अतःपरंत्वंस्वतंत्रत्वाद्यदिभूयोपिप्रजाउपासितुमिहस्थित्वारक्षि तुमिच्छसितदाहेवीररामवस ॥ १४ ॥ अथवाअथचेत्स्वकृतनियममंगीकृत्यसुरलोकायविजिगीषासुरलोकंपालयितुंयदीच्छातदोपेंद्ररूपेणविष्णुनादेवाःसनाथाविगतज्वराभवंत्वित्येवंपिताम हआहेत्यन्वयः ॥ १५ ॥

॥ १० ॥ स्थितास्थितानि अनुरंजंतिअनुरंजयंति ॥ ११ ॥ सुभिक्षमभवदितिशेषः ॥ १२ ॥ १३ ॥ पौत्राःकुशलवाद्याः ॥ १४ ॥ अन्वियायतस्याअनुपश्चात्इयायकालधर्ममितिशेषः ब
हुविधंनानाप्रकारम् ॥ १५ ॥ सर्वधर्मंसर्वधर्मसाध्यसुखभोगम् ॥ १६ ॥ १७ ॥ पित्र्याणिपितृकर्मापेक्षितानिब्रह्मरत्नानिब्राह्मणदेयोत्तमवस्तूनिप्रयच्छतिस्मेत्यनुकर्षः बहुरत्नानीतिपाठांतरं
पितॄन्देवान्विवर्धयन्पूजयन् यज्ञांश्चकारेति पिंडपितृयज्ञानित्यर्थः ॥ १८ ॥ वर्धयानस्यवर्धयमानस्य यज्ञैर्बहुविधैर्देवान्वर्धयानस्येतिपाठांतरं यत्तुएवंप्रशासतस्तस्यराघवस्यमहेश्वरि अत्य

एवंसकालःसुमहान्राज्यस्थस्यमहात्मनः ॥ धर्मेप्रयतमानस्यव्यतीयाद्राघवस्यच ॥ १० ॥ ऋक्षवानररक्षांसिस्थितारामस्यशासने ॥ अनुरंजं
तिराजानोह्यहन्यहनिराघवम् ॥ ११ ॥ कालेवर्षतिपर्जन्यःसुभिक्षंविमलादिशः ॥ हृष्टपुष्टजनाकीर्णंपुरंजनपदास्तथा ॥ १२ ॥ नाकालेम्रियतेक
श्चिन्नव्याधिःप्राणिनांतथा ॥ नानर्थोविद्यतेकश्चिद्रामेराज्यंप्रशासति ॥ १३ ॥ अथदीर्घस्यकालस्यराममातायशस्विनी ॥ पुत्रपौत्रैःपरिवृताका
लधर्ममुपागमत् ॥ १४ ॥ अन्वियायसुमित्राचकैकेयीचयशस्विनी ॥ धर्मंकृत्वाबहुविधंत्रिदिवेपर्यवस्थिता ॥ १५ ॥ सर्वाःप्रमुदिताःस्वर्गेराज्ञादश
रथेनच ॥ समागतामहाभागाःसर्वधर्मंचलेभिरे ॥ १६ ॥ तासांरामोमहादानंकालेकालेप्रयच्छति ॥ मातॄणामविशेषेणब्राह्मणेषुतपस्विषु ॥ १७ ॥
पित्र्याणिब्रह्मरत्नानियज्ञान्परमदुस्तरान् ॥ चकाररामोधर्मात्मापितॄन्देवान्विवर्धयन् ॥ १८ ॥ एवंवर्षसहस्राणिबहून्यथययुःसुखम् ॥ यज्ञैर्बहुवि
धंधर्मंवर्धयानस्यसर्वदा ॥ १९ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेयज्ञावसानंनामैकोनशततमःसर्गः ॥ ९९ ॥ ॥
कस्यचित्त्वथकालस्ययुधाजित्केकयोनृपः ॥ स्वगुरुंप्रेषयामासराघवायमहात्मने ॥ १ ॥ गार्ग्यमंगिरसःपुत्रंब्रह्मर्षिममितप्रभम् ॥ दशचाश्वसहस्रा
णिप्रीतिदानमनुत्तमम् ॥ २ ॥ कंबलानिचरत्नानिचित्रवस्त्रमथोत्तमम् ॥ रामायप्रददौराजाशुभान्याभरणानिच ॥ ३ ॥ श्रुत्वातुराघवोधीमान्मह
र्षिंगार्ग्यमागतम् ॥ मातुलस्याश्वपतिनःप्रहितंतन्महाधनम् ॥ ४ ॥

याहशसाहस्रंरममाणस्यसीतयेतिपाठेउक्तं तत्रसीतयाभूमौस्थितयास्थितस्यरममाणस्यराज्यंकुर्वतइत्यर्थः साहस्रमितिस्वार्थेण् अत्यथाद्वर्षसाहस्रमितिपाठेसहस्राणांसमूहःसाहस्रंसहस्रस
मूहइत्यर्थकतयादशसहस्रेत्यर्थकमेव आयुस्तस्यैकादशसहस्रवर्षाणि ॥ १९ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेएकोनशततमःसर्गः
॥ ९९ ॥ ॥ ५ ॥ ॥ अथरामेणगंधर्वदेशंप्रतिसपुत्रस्यभरतस्यप्रेषणं कस्यचिदिति ॥ १ ॥ २ ॥ ३ अश्वपतिनः नुमार्षः अश्वपतेरित्यर्थः ॥ ४ ॥

॥ ५ ॥ प्रतिपदंप्रत्येकंसर्वंसर्वप्रकारंकुशलंपृष्ट्वामातुलस्यकुशलंपृष्ट्वा ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ गंधर्वविषयोगंधर्वदेशः ॥ १० ॥ सिंधोःसिंधुनदस्योभयतःपार्श्वेवर्तमानःपरमशोभनोयंदेशोऽ
स्मद्देशसमीपेवर्तते ॥ ११ ॥ शैलूषोगंधर्वराजः गंधर्वनगरंचविनिर्जित्येत्यनुकर्षः ॥ १२ ॥ स्वेपुरेनिवेशय तद्देशेइतिशेषः अन्यस्यत्वद्व्यतिरिक्तस्यतत्रदेशेगतिःप्राप्तिप्रसक्तिर्जयप्रसक्तिश्चना







प्रत्युद्गम्यचकाकुत्स्थःक्रोशमात्रंसहानुजः ॥ गार्ग्यंसंपूजयामासयथाशक्रोबृहस्पतिम् ॥ ५ ॥ तथासंपूज्यतम्रुषिंतद्धनंप्रतिगृह्यच ॥ पृष्ट्वाप्रतिपदं
सर्वंकुशलंमातुलस्यच ॥ ६ ॥ उपविष्टंमहाभागंरामःप्रष्टुंप्रचक्रमे ॥ किमाहमातुलोवाक्यंयदर्थंभगवानिह ॥ ७॥ प्राप्तोवाक्यविदांश्रेष्ठःसाक्षादि
वबृहस्पतिः ॥ रामस्यभाषितंश्रुत्वामहर्षिःकार्यविस्तरम् ॥ ८॥ वक्तुमद्भुतसंकाशंराघवायोपचक्रमे ॥ मातुलस्तेमहाबाहोवाक्यमाहनरर्षभः ॥ ९॥
युधाजित्प्रीतिसंयुक्तंश्रूयतांयदिरोचते ॥ अयंगंधर्वविषयःफलमूलोपशोभितः ॥ १० ॥ सिंधोरुभयतःपार्श्वेदेशःपरमशोभनः ॥ तंचरक्षंतिगंध
र्वाःसायुधायुद्धकोविदाः ॥ ११ ॥ शैलूषस्यसुतावीरतिस्रःकोट्योमहाबलाः ॥ तान्विनिर्जित्यकाकुत्स्थगंधर्वनगरंशुभम् ॥ १२ ॥ निवेशयमहाबा
होस्वेपुरेसुसमाहिते ॥ अन्यस्यनगतिस्तत्रदेशःपरमशोभनः ॥ रोचतांतेमहाबाहोनाहंत्वामहितंवदे ॥ १३ ॥ तच्छ्रुत्वाराघवःप्रीतोमहर्षेर्मातुलस्य
च ॥ उवाचबाढमित्येवभरतंचान्ववैक्षत ॥ १४ ॥ सोब्रवीद्राघवःप्रीतःसांजलिप्रग्रहोद्विजम् ॥ इमौकुमारौतंदेशंब्रह्मर्षेविचरिष्यतः ॥ १५ ॥ भरत
स्यात्मजौवीरौतक्षःपुष्कलएवच ॥ मातुलेनसुगुप्तौतुधर्मेणसुसमाहितौ ॥ १६॥ भरतंचाग्रतःकृत्वाकुमारौसबलानुगौ ॥ निहत्यगंधर्वसुतान्द्वेपुरे
विभजिष्यतः ॥ १७॥ निवेश्यतेपुरवरेआत्मजौसन्निवेश्यच ॥ आगमिष्यतिमेभूयःसकाशमतिधार्मिकः ॥ १८ ॥ ब्रह्मर्षिमेवमुक्त्वातुभरतंसबलानु
गम् ॥ आज्ञापयामासतदाकुमारौचाभ्यषेचयत् ॥ १९॥ नक्षत्रेणचसौम्येनपुरस्कृत्यांगिरःसुतम् ॥ भरतःसहसैन्येनकुमाराभ्यांविनिर्ययौ ॥ २० ॥

स्ति एवंतत्साधनेकोलाभस्तत्राह देशःपरमशोभनइति ॥ १३ ॥ भरतंचान्ववैक्षत तवायमंशइत्यबोधयदित्यर्थः ॥ १४ ॥ अथराघवोरामोद्विजमब्रवीत् ॥ १५ ॥ तक्षइत्यकारांतः मातुलेन
भरतमातुलेनयुधाजिता ॥ १६ ॥ १७ ॥ पुरवरेनिवेश्यनिर्मायात्मजौसन्निवेश्यतयोःपुरयोरितिशेषः अतिधार्मिकोभरतः ॥ १८ ॥ १९ ॥ अंगिरःसुतंगार्ग्यम् ॥ २० ॥

शक्रयुक्तेवदंद्रनियुक्तादेवसेनेवराघवानुगताद्रामानुगता दूरंएकद्विवासपर्यंतमित्यर्थः ॥ २१ ॥ २२ ॥ २३ ॥ सेनायाअग्रतोययुः पिशिताशिनामग्रतोयानंसुशकुनं अभिमुखागमनमेवाप शकुनमितिभावः ॥ २४ ॥ केकयंकेकयदेशंयुधाजितंवा ॥ २५ ॥ ॥ इतिश्रीरा०श्रीरा०रा०वा०आ०उत्तरकांडेशततमःसर्गः ॥ १०० ॥ ॥ ७ ॥ ॥ अथभरतेनगंधर्वविजयः श्रु

सासेनाशक्रयुक्तेवनगरान्निर्ययावथ ॥ राघवानुगतादूरंदुराधर्षासुरैरपि ॥ २१ ॥ मांसाशिनश्चयेसत्वारक्षांसिसुमहांतिच ॥ अनुजग्मुर्हिभरतंरु धिरस्यपिपासया ॥ २२ ॥ भूतग्रामाश्चबहवोमांसभक्षाःसुदारुणाः ॥ गंधर्वपुत्रमांसानिभोक्तुकामाःसहस्रशः ॥ २३ ॥ सिंहव्याघ्रवराहाणांखेच राणांचपक्षिणाम् ॥ बहूनिवैसहस्राणिसेनायाययुरग्रतः ॥ २४ ॥ अध्यर्धमासमुषितापथिसेनानिरामया ॥ हृष्टपुष्टजनाकीर्णाकेकयंसमुपागम त् ॥ २५ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेशततमःसर्गः ॥ १०० ॥ ॥ ७ ॥ ॥ श्रुत्वासेनापतिंप्राप्तंभरतंकेकया धिपः ॥ युधाजिद्गार्ग्यसहितंपरांप्रीतिमुपागमत् ॥ १ ॥ सनिर्ययौजनौघेनमहताकेकयाधिपः ॥ त्वरमाणोभिचक्रामगंधर्वान्केकयाधिपः ॥ २ ॥ भ रतश्चयुधाजिच्चसमेतौलघुविक्रमैः ॥ गंधर्वनगरंप्राप्तौसबलौसपदानुगौ ॥ ३ ॥ श्रुत्वातुभरतंप्राप्तंगंधर्वास्तेसमागताः ॥ योद्धुकामामहावीर्याव्य नदंस्तेसमंततः ॥ ४ ॥ ततःसमभवद्युद्धंतुमुलंलोमहर्षणम् ॥ सप्तरात्रंमहाभीमंनचान्यतरयोर्जयः ॥ ५ ॥ खड्गशक्तिधनुर्ग्राहानद्यःशोणितसंस्रवाः ॥ नृकलेवरवाहिन्यःप्रवृत्ताःसर्वतोदिशम् ॥ ६ ॥ ततोरामानुजःक्रुद्धःकालस्यास्त्रंसुदारुणम् ॥ संवर्तनामभरतोगंधर्वेष्वभ्यचोदयत् ॥ ७ ॥ तेबद्धाः कालपाशेनसंवर्तेनविदारिताः ॥ क्षणेनाभिहतास्तेनतिस्रःकोट्योमहात्मना ॥ ८ ॥ तद्युद्धंतादृशंघोरंनस्मरंतिदिवौकसः ॥ निमेषांतरमात्रेणतादृ शानांमहात्मनाम् ॥ ९ ॥ हतेषुतेषुसर्वेषुभरतःकेकयीसुतः ॥ निवेशयामासतदासमृद्धेद्वेपुरोत्तमे ॥ १० ॥

त्वेति सेनापतिंप्राप्तंयुद्धेसन्नाहवंतमागतंश्रुत्वा ॥ १ ॥ २ ॥ लघुविक्रमैर्योधैरित्यर्थः सबलौचतुरंगबलसहितौ सपदानुगौशूद्रवैश्याद्यनुचरसहितौ ॥ ३ ॥ व्यनदन्गर्जंतिस्म ॥ ४ ॥ ५ ॥ ख ड्गादिग्राहायाहायासुताः नृकलेवराणिवहंतिताः ॥ ६ ॥ संवर्तनामप्रलयकालानलाख्यम् ॥ ७ ॥ ८ ॥ दिवौकसोनस्मरंति निमेषमात्रेणत्रिकोटिगंधर्ववधोऽसंभाव्यइतिस्थितवंतः ॥ ९ ॥ द्वेपुरोत्तमेतक्षशिलापुष्कलावताख्ये ॥ १० ॥

गंधर्वदेशेतक्षशिलायांतक्षंतक्षाख्यंपुत्रम् गांधारदेशेपुष्कलावतेनगरेपुष्कलम् ॥ ११ ॥ गुणविस्तरैर्हेतुभिरन्योन्यस्पर्धयाअन्योन्यसंघर्षकृतेकृतान्योन्यसंघर्षे अहमेवगुणोत्तरमितिकृतान्यो न्यविवादेइवदृश्यमानेइत्यर्थः ॥ १२ ॥ अकिल्बिषैर्धर्मन्यायोपेतैर्व्यवहारैःक्रयविक्रयादिव्यापारैः ॥ १३ ॥ विस्तरैरनुक्तपदार्थविस्तरैरुपशोभिते सुरुचिरैर्गृहमुख्यैरुपशोभितेविमानैः सप्तभूमिप्रासादैः ॥ १४ ॥ देवतायतनविस्तरैर्विस्तारैरित्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ स्वस्मायथावृत्तंगंधर्ववधंदेशस्यनिवेशनंचशशंस अस्यभरतस्यवाक्यंश्रुत्वाराघवोरामःप्रीतोबभूव

तक्षंतक्षशिलायांतुपुष्कलंपुष्कलावते॥ गंधर्वदेशेरुचिरेगांधारविषयेचसः ॥ ११ ॥ धनरत्नौघसंकीर्णेकाननैरुपशोभिते ॥ अन्योन्यसंघर्षकृते स्पर्धयागुणविस्तरैः॥ १२ ॥ उभेसुरुचिरप्रख्येव्यवहारैरकिल्बिषैः॥ उद्यानयानसंपूर्णेसुविभक्तांतरापणे॥ १३ ॥ उभेपुरवरेरम्येविस्तरैरुपशोभि ते॥ गृहमुख्यैःसुरुचिरैर्विमानैर्बहुभिर्वृते ॥ १४ ॥ शोभितेशोभनीयैश्चदेवायतनविस्तरैः॥ तालैस्तमालैस्तिलकैर्बकुलैरुपशोभिते॥ १५॥ निवेश्यपं चभिर्वर्षैर्भरतोराघवानुजः॥ पुनरायान्महाबाहुरयोध्यांकैकयीसुतः॥ १६ ॥ सोभिवाद्यमहात्मानंसाक्षाद्धर्ममिवापरम्॥ राघवंभरतःश्रीमान्ब्रह्माणमिववासवः॥ १७॥ शशंसचयथावृत्तंगंधर्ववधमुत्तमम्॥ निवेशनंचदेशस्यश्रुत्वाप्रीतोस्यराघवः॥ १८॥ ॥ इत्यार्षेश्रीम०वा०आ० उ०एकोत्तरशततमःसर्गः॥ १०१॥ ॥ ५॥ ॥ तच्छ्रुत्वाहर्षमापेदेराघवोभ्रातृभिःसह॥ वाक्यंचाद्भुतसंकाशंभ्रातॄन्प्रोवाचराघवः॥ १ ॥ इमौकु मारौसौमित्रेतवधर्मविशारदौ॥ अंगदश्चंद्रकेतुश्चराज्यार्थेदृढविक्रमौ॥ २ ॥ इमौराज्येभिषेक्ष्यामिदेशःसाधुविधीयताम्॥ रमणीयोह्यसंबाधो रमेतांयत्रधन्विनौ॥ ३ ॥ नराज्ञांयत्रपीडास्यान्नाश्रमाणांविनाशनम्॥ सदेशोदृश्यतांसौम्यनापराध्यामहेयथा॥ ४॥ तथोक्तवतिरामेतुभरतःप्र त्युवाचह॥ अयंकारुपथोदेशोरमणीयोनिरामयः॥ ५॥ निवेश्यतांतत्रपुरमंगदस्यमहात्मनः॥ चंद्रकेतोःसुरुचिरंचंद्रकांतंनिरामयम्॥ ६॥ तद्वा क्यंभरतेनोक्तंप्रतिजग्राहराघवः॥ तंचकृत्वावशेदेशमंगदस्यन्यवेशयत्॥ ७ ॥

॥ १८ ॥ ॥ इतिश्रीरा०श्रीरामीयेरा०वा०आ०उ०ए कोत्तरशततमःसर्गः ॥ १०१ ॥ ॥ ५ ॥ ॥ अथलक्ष्मणकुमारयोराज्येनिवेशनम् तदिति भ्रातृभिरितिबहुवचनंद्वित्वेआर्षम् ॥ १ ॥ हेसौमित्रेतवेमौकुमारौराज्यार्थेराज्यरक्षणविषयेदृढवि क्रमौ ॥ २ ॥ अतइमौराज्येऽभिषेक्ष्यामि यत्रेमौरमेतांताटृशोदेशःसाधुविधीयतांनिरीक्ष्यताम् ॥ ३ ॥ नापराध्यामहेयथाकस्यापिभूतस्येतिशेषः ॥ ४ ॥ कारुपथस्तदाख्यःपाश्चात्यौदी च्यदेशविशेषः ॥ ५ ॥ तत्रदेशेऽंगदस्यपुरमंगदीयेत्याख्यंनिवेश्यताम् चंद्रकेतोश्चंद्रकांताख्यंपुरंनिवेश्यताम् ॥ ६ ॥ वशेकृत्वालक्ष्मणभरताभ्यांवशेकारयित्वांगदस्यपुरींन्यवेशयत् ॥ ७ ॥

॥ ८ ॥ ९ ॥ यदिवान्यत्कामभोगानुकूल्यंतर्हि धर्मदृष्टेनसत्पथासन्मार्गेणमांवरयस्व ॥ १० ॥ अन्यथाअवरणे घोराभिसंहितंमहानर्थफलम् ॥ ११ ॥ याचितःपितामामांतवदास्यतेइत्यन्वयः ॥ १२ ॥ १३ ॥ क्षेप्तुंविलंबंकर्तुम् ॥ १४ ॥ त्वांप्राप्ययद्विवधादिर्भवेत्तदाभवतुनामेतिशेषः ॥ १५ ॥ विस्फुरंतींविलुठंतीम् ॥ १६ ॥ १७ ॥ अरजापीतिआकारांतंनाम पितरंप्रतीक्षतेस्म ॥ १८ ॥

भार्गवस्यसुतांविद्धिदेवस्याक्लिष्टकर्मणः ॥ अरजांनामराजेंद्रज्येष्ठामाश्रमवासिनीम् ॥ ८ ॥ मामांस्पृशबलाद्राजन्कन्यापितृवशाह्यहम् ॥ गुरुः पितामेराजेंद्रत्वंचशिष्योमहात्मनः ॥ ९ ॥ व्यसनंसुमहत्क्रुद्धःसतेदद्यान्महातपाः ॥ यदिवान्यन्मयाकार्यंधर्मदृष्टेनसत्पथा ॥ १० ॥ वरयस्वनरश्रेष्ठपितरंमेमहाद्युतिम् ॥ अन्यथातुफलंतुभ्यंभवेद्धोराभिसंहितम् ॥ ११ ॥ क्रोधेनहिपितामेसौत्रैलोक्यमपिनिर्दहेत् ॥ दास्यतेचानवद्यांगतवमायाचितःपिता ॥ १२ ॥ एवंब्रुवाणामरजांदंडःकामवशंगतः ॥ प्रत्युवाचमदोन्मत्तःशिरस्याधायचांजलिम् ॥ १३ ॥ प्रसादंकुरुसुश्रोणिनकालंक्षेप्तुमर्हसि ॥ त्वत्कृतेहिममप्राणाविदीर्यंतेवरानने ॥ १४ ॥ त्वांप्राप्यतुवधोवापिपापंवापिसुदारुणम् ॥ भक्तंभजस्वमांभीरुभजमानंसुविह्वलम् ॥ १५ ॥ एवमुक्त्वातुतांकन्यांदोर्भ्यांप्राप्यबलाद्बली ॥ विस्फुरंतींयथाकामंमैथुनायोपचक्रमे ॥ १६ ॥ तमनर्थंमहाघोरंदंडःकृत्वासुदारुणम् ॥ नगरंप्रययावाशुमधुमंतमनुत्तमम् ॥ १७ ॥ अरजापिरुदंतीसाआश्रमस्याविदूरतः ॥ प्रतीक्षतेसुसंत्रस्तापितरंदेवसन्निभम् ॥ १८ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेअशीतितमःसर्गः ॥ ८० ॥

॥ ७ ॥

॥ समुहूर्तादुपश्रुत्यदेवर्षिरमितप्रभः ॥ स्वमाश्रमंशिष्यवृतःक्षुधार्तःसंन्यवर्तत ॥ १ ॥ सोपश्यदरजांदीनांरजसासमभिप्लुताम् ॥ ज्योत्स्नामिवग्रहग्रस्तांप्रत्यूषेनविराजतीम् ॥ २ ॥ तस्यरोषःसमभवत्क्षुधार्तस्यविशेषतः ॥ निर्दहन्निवलोकांस्त्रीन्शिष्यांश्चेतदुवाचह ॥ ३ ॥ पश्यध्वंविपरीतस्यदंडस्याविदितात्मनः ॥ विपत्तिंघोरसंकाशांक्रुद्धादग्निशिखामिव ॥ ४ ॥ क्षयोस्यदुर्मतःप्राप्तःसानुगस्यमहात्मनः ॥ यःप्रदीप्तांहुताशस्यशिखांवैस्प्रष्टुमर्हति ॥ ५ ॥

इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेअशीतितमःसर्गः ॥ ८० ॥ ॥ ७ ॥ ॥ कथाशेषपूरणम् सइति उपश्रुत्यशिष्यमुखाद्दरजावृत्तांतमित्यर्थः ॥ १ ॥ प्रत्यूषेप्रातःकाले नविराजतीमशोभमानाम् ॥ २ ॥ ३ ॥ विपरीतस्यविपरीतानुष्ठानवतः क्रुद्धान्मत्तोजायमानामग्निशिखासदृशींविपत्तिविनाशं पश्यध्वम् ॥ ४ ॥ अस्यक्षयःप्राप्तस्तत्रहेतुर्यदिति ॥ ५ ॥

सामान्येनोक्तं विशेषेणाह यस्मादिति ईदृशंमत्पुत्रीधर्षणरूपम् ॥ ६ ॥ ७ ॥ धक्ष्यतेनाशयिष्यति ॥ ८ ॥ विलयंगमन् विलयंगमिष्यंति ॥ ९ ॥ सर्वमुच्छ्रयंचराचरप्राणिमात्रंउच्छ्रयतउद्भवतीत्युच्छ्रयः पांसुवर्षमिवालक्ष्यम् प्रसिद्धप्रलयकालिकमहापांसुवर्षमिवप्राप्यसप्तरात्रंसप्तरात्रिपर्यंतमलक्ष्यंभविष्यति विनष्टपुरपौरजानपदंभविष्यतीत्यर्थः ॥ १० ॥ तमाश्रमनिवासिनंस्थाश्रमनिवासिनम् जनपदांतेषुदंडजनपदसीमांतदेशेषु ॥ ११ ॥ सोश्रमावसथइत्यार्षःसंधिः सआश्रमनिवासीत्यर्थः एतावताकथंतदमृगद्विजमित्यस्योत्तरमुक्तम् ॥ १२ ॥ अथनिर्जनंवनंकथंत

यस्मात्सकृतवान्पापमीदृशंघोरसंहितम् ॥ तस्मात्प्राप्स्यतिदुर्मेधाःफलंपापस्यकर्मणः ॥ ६ ॥ सप्तरात्रेणराजासौसपुत्रबलवाहनः ॥ पापकर्मसमाचारोवधंप्राप्स्यतिदुर्मतिः ॥ ७ ॥ समंताद्योजनशतंविषयंचास्यदुर्मतेः ॥ धक्ष्यतेपांसुवर्षेणमहतापाकशासनः ॥ ८ ॥ सर्वसत्वानियानीहस्थावराणिचराणिच ॥ महतापांसुवर्षेणविलयंसर्वतोगमन् ॥ ९ ॥ दंडस्यविषयोयावत्तावत्सर्वंसमुच्छ्रयम् ॥ पांसुवर्षमिवालक्ष्यंसप्तरात्रंभविष्यति ॥ १० ॥ इत्युक्त्वाक्रोधताम्राक्षस्तमाश्रमनिवासिनम् ॥ जनंजनपदांतेषुस्थीयतामितिचाब्रवीत् ॥ ११ ॥ श्रुत्वातूशनसोवाक्यंसोश्रमावसथोजनः ॥ निष्क्रांतोविषयात्तस्मात्स्थानंचक्रेथबाह्यतः ॥ १२ ॥ सतथोक्त्वामुनिजनमरजामिदमब्रवीत् ॥ इहैववसदुर्मेधेआश्रमेसुसमाहिता ॥ १३ ॥ इदंयोजनपर्यंतंसरःसुरुचिरप्रभम् ॥ अरजेविज्वराभुंक्ष्वकालश्चात्रप्रतीक्ष्यताम् ॥ १४ ॥ त्वत्समीपेचयेसत्वावासमेष्यंतितांनिशाम् ॥ अवध्याःपांसुवर्षेणतेभविष्यंतिनित्यदा ॥ १५ ॥ श्रुत्वानियोगंब्रह्मर्षेःसारजाभार्गवीतदा ॥ तथेतिपितरंप्राहभार्गवंभृशदुःखिता ॥ १६ ॥ इत्युक्त्वाभार्गवोवासमन्यत्रसमकारयत् ॥ तच्चराज्यंनरेंद्रस्यसभृत्यबलवाहनम् ॥ १७ ॥ सप्ताहाद्भस्मसाद्भूतंयथोक्तंब्रह्मवादिना ॥ तस्यासौदंडविषयोविंध्यशैवलयोर्नृप ॥ १८ ॥ शप्तोब्रह्मर्षिणातेनवैधर्म्येसहितेकृते ॥ ततःप्रभृतिकाकुत्स्थदंडकारण्यमुच्यते ॥ १९ ॥

पत्तेप्रविष्टइत्यस्योत्तरमाह सतथेति वासप्रयोजनमाह सुसमाहिताशोभनसमाधिमतीभूत्वेत्यर्थः समाध्यनुष्ठानेनिमित्तमाह दुर्मेधेइति यस्माद्दंडधर्षणसहिष्णुर्दुर्मतिरस्यतस्तत्पापनिवृत्तयेसमाधिरावश्यकइतिभावः ॥ १३ ॥ पांसुवर्षेकथंवासस्तत्राहेदमिति ॥ १४ ॥ येसत्वाःपशुपक्ष्यादयोवासमेष्यंति सप्तरात्रमध्येपीतिशेषः एवंचोशनोनुग्रहेणसरःप्रदेशस्यसुखावासत्वादत्रतपसिप्रविष्टइतिभावः ॥ १५ ॥ १६ ॥ १७ ॥ तस्यासौ व्यत्ययात्षष्ठी सोसावित्यर्थः विंध्यशैवलयोर्मध्येइतिशेषः ॥ १८ ॥ सहितेपूर्णधर्मपूर्णसौख्यसहितेकृतेकृतयुगेतेनराज्ञावैधर्म्येधर्मवैपरीत्येकृतेसतियोब्रह्मर्षिणाशप्तःसोसावित्यन्वयः ॥ १९ ॥

॥ २० ॥ २१॥ कृतोदकाः कृतस्नानादिकर्माणः सरविर्ब्रह्मवित्तमैः सहितैस्तीर्थसमीपेसंगतैरभ्यस्तंब्राह्मणंब्राह्मणपठितोपनिषद्बोधितज्ञानाभ्यासंतल्लक्षणांपूजांप्राप्येतिशेषः रविरस्तंगतः ॥ २२॥
इतिश्रीरा०श्रीरा०रा०वा०आ०उ०एकाशीतितमःसर्गः ॥ ८१ ॥ ॥ ७ ॥ ॥ ऋषेरिति ॥ १ ॥ २ ॥ कंदमूलंकंदरूपंमूलम् औषधंजरापलितघ्नंदिव्यौषधम् ॥ ३ ॥ ४ ॥ प्रभातेउत्था
यकाल्यंप्रातःकालिकमाह्निकंकृत्वागमनायअनुज्ञांग्रहीतुमृषितत्समीपंसमुपचक्रामजगाम ॥ ५ ॥ ६ ॥ आगमिष्यामिअतःपरमपियदाकांक्षाभविष्यतीतिशेषः महात्मनःसकाशादात्मनःपा

तपस्विनःस्थितात्ह्यत्रजनस्थानमतोभवत् ॥ एतत्तेसर्वमाख्यातंयन्मांपृच्छसिराघव ॥ २० ॥ संध्यामुपासितुंवीरसमयोत्यतिवर्तते ॥ एतेमहर्षयःस
र्वेपूर्णकुंभाःसमंततः ॥ २१ ॥ कृतोदकानरव्याघ्रआदित्यंपर्युपासते ॥ सतैर्ब्राह्मणमभ्यस्तंसहितैर्ब्रह्मवित्तमैः ॥ रविरस्तंगतोरामगच्छोदकमुपस्पृश
॥ २२ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेएकाशीतितमःसर्गः ॥ ८१ ॥ ॥ ७ ॥ ॥ ऋषेर्वचनमाज्ञायरामःसंध्या
मुपासितुम् ॥ अपाक्रामत्सरःपुण्यमप्सरोगणसेवितम् ॥ १ ॥ तत्रोदकमुपस्पृश्यसंध्यामन्वास्यपश्चिमाम् ॥ आश्रमंप्राविशद्रामःकुंभयोनेर्म
हात्मनः ॥ २ ॥ तस्यागस्त्योबहुगुणंकंदमूलंतथौषधम् ॥ शाल्यादीनिपवित्राणिभोजनार्थमकल्पयत् ॥ ३ ॥ सभुक्तवान्नरश्रेष्ठस्तदन्नममृतोपम
म् ॥ प्रीतश्चपरितुष्टश्चतांरात्रिंसमुपाविशत् ॥ ४ ॥ प्रभातेकाल्यमुत्थायकृत्वाह्निकमरिंदमः ॥ ऋषिंसमुपचक्रामगमनायरघूत्तमः ॥ ५ ॥ अभिवा
द्याब्रवीद्रामोमहर्षिंकुंभसंभवम् ॥ आपृच्छेस्वाश्रमंगंतुंमामनुज्ञातुमर्हसि ॥ ६ ॥ धन्योस्म्यनुगृहीतोस्मिदर्शनेनमहात्मनः ॥ द्रष्टुंचैवागमिष्यामि
पावनार्थंमहात्मनः ॥ ७ ॥ तथावदतिकाकुत्स्थेवाक्यमद्भुतदर्शनम् ॥ उवाचपरमप्रीतोधर्मनेत्रस्तपोधनः ॥ ८ ॥ अत्यद्भुतमिदंवाक्यंतवरामशुभा
क्षरम् ॥ पावनःसर्वभूतानांत्वमेवरघुनंदन ॥ ९ ॥ मुहूर्तमपिरामत्वांयेनुपश्यंतिकेचन ॥ पाविताःस्वर्गभूताश्चपूज्यास्तेत्रिदिवेश्वरैः ॥ १० ॥

वनार्थमित्यर्थः ॥ ७ ॥ तथावदतिआत्मनःपावनार्थंगमिष्यामीतिवदति परमप्रीतः एवंविनयवचनादितिशेषः धर्मोयोगधर्मोनेत्रंसर्वज्ञानसाधनचक्षुर्यस्यसः ॥ ८ ॥ अथागस्त्योरामस्यब्रह्मत्वं
तद्विकृत्याह पावनःसर्वभूतानामिति सर्वजीवानाम् क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमात्मनेतिशास्त्रादित्याशयः त्वमेवेत्यनेनसर्वपावनस्यभगवद्रूपत्वमेवोक्तम् ॥ ९ ॥ येत्वांपश्यंति चित्तेस्वतत्त्व
ब्रह्मतयापश्यंतीत्यर्थः तवलीलावतारमूर्तिंविष्णुत्वेनचक्षुषाचयेपश्यंतीत्यर्थः तेपाविताःलब्धज्ञानदर्शनाभ्यामितिशेषः अतएवदेहांतेस्वर्गभूताःपरमपरंवास्वर्गंप्राप्ताअतएवतेसर्वदैवतैःपूज्याः ए
वमनुकूलदृष्टेःफलमुक्तम् ॥ १० ॥

अथप्रतिकूलदृष्टेस्तद्वाह येचेति प्राणिनइतिसामान्योक्त्यातपःप्रभावेसत्यपित्वद्वेषमात्रेणनिरयगामितोक्ता परंतुतेसद्यस्तत्क्षणमेवनिरयगामिनइत्युक्त्याकालांतरेतादृशरीत्यापित्वद्दर्शनमाहात्म्यात्तेस्वर्गमोक्षभाजइतिसूचितम् ॥ ११ ॥ ईदृशःसकलकल्याणगुणःपरमानंदरूपःसर्वदेहिनांपावनोसि अतःकालांतरेत्वांकथयंतस्त्वच्चरितंकीर्तयंतोपिसिद्धिंब्रह्मतारूपांचित्तशुद्धिद्वाराएष्यंतिप्राप्स्यंति किंचईदृशस्त्वंपावनइतरविलक्षणपावनत्वस्वभावः येत्वांरागद्वेषकामभयान्यतमैरपिकथयंतस्तेसिद्धिंमोक्षंगमिष्यंति ॥ १२ ॥ रिष्टंदुःखम् अरिष्टंसुखम् गतिःस्वर्गादिगतिसाधनम् ॥ १३ ॥ प्रग्रहउद्यतबाहुः ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ मध्यकक्षांप्राप्येतिशेषः ॥ १८ ॥ विसृज्यस्वरहितंकृत्वा विसर्जयित्वाकुबेरंवहेत्यनुज्ञाय ॥ १९ ॥ शब्दापयत दौवारिकैराह्वयतेत्यर्थः बहुवचनमार्षम् आह्वानंकारयेत्यर्थः ॥ २० ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेद्व्यशीतितमःसर्गः ॥ ८२ ॥ ॥छ॥ ॥अथरामस्यराजसूयकरणेच्छाभरतेनक्षत्रियकुलनाशप्रसंगतोनिवार्यते तच्छ्रुत्वेति ॥ १ ॥ २ ॥ द्विजकार्यंयथाप्रतिज्ञातंतथातथ्यंकृतम् बालउज्जीवितइत्यर्थः धर्मसेतुंराजाराजसूयेनयजेतेतिविधिनाराज्ञामसाधारणभूतंधर्ममर्यादारूपमित्यर्थः ॥ ३ ॥

येचत्वांघोरचक्षुर्भिःपश्यंतिप्राणिनोभुवि ॥ हतास्तेयमदंडेनसद्योनिरयगामिनः ॥ ११ ॥ ईदृशस्त्वंरघुश्रेष्ठपावनःसर्वदेहिनाम् ॥ भुवित्वांकथयंतोहिसिद्धिमेष्यंतिराघव ॥ १२ ॥ त्वंगच्छारिष्टमव्यग्रःपंथानमकुतोभयम् ॥ प्रशाधिराज्यंधर्मेणगतिर्हिजगतोभवान् ॥ १३ ॥ एवमुक्तस्तुमुनिना प्रांजलिःप्रग्रहोनृपः ॥ अभ्यवादयतप्राज्ञस्तमृषिंसत्यशीलिनम् ॥ १४ ॥ अभिवाद्यऋषिश्रेष्ठंतांश्चसर्वांस्तपोधनान् ॥ अध्यारोहत्तदव्यग्रःपुष्पकंहेमभूषितम् ॥ १५ ॥ तंप्रयांतंमुनिगणाआशीर्वादैःसमंततः ॥ अपूजयन्महेंद्राभंसहस्राक्षमिवामराः ॥ १६ ॥ खस्थःसददृशेरामःपुष्पकेहेमभूषिते ॥ शशीमेघसमीपस्थोयथाजलधरागमे ॥ १७ ॥ ततोर्धदिवसेप्राप्तेपूज्यमानस्ततस्ततः ॥ अयोध्यांप्राप्यकाकुत्स्थोमध्यकक्षामवातरत् ॥ १८ ॥ ततोविसृज्यरुचिरंपुष्पकंकामगामिनम् ॥ विसर्जयित्वागच्छेतिस्वस्तितेस्त्वितिचप्रभुः ॥ १९ ॥ कक्षांतरस्थितंक्षिप्रंद्वास्थंरामोब्रवीद्वचः ॥ लक्ष्मणंभरतंचैवगत्वातौलघुविक्रमौ ॥ ममागमनमाख्यायशब्दापयतमाचिरम् ॥ २० ॥ ॥इत्यार्षेश्रीम० वा० आ० उत्तरकांडेद्व्यशीतितमःसर्गः ॥ ८२ ॥

तच्छ्रुत्वाभाषितंतस्यरामस्याक्लिष्टकर्मणः ॥ द्वास्थःकुमारावाहूयराघवायन्यवेदयत् ॥ १ ॥ दृष्ट्वातुराघवःप्राप्तावुभौभरतलक्ष्मणौ ॥ परिष्वज्यततोरामोवाक्यमेतदुवाचह ॥ २ ॥ कृतंमयायथातथ्यंद्विजकार्यमनुत्तमम् ॥ धर्मसेतुमथोभूयःकर्तुमिच्छामिराघवौ ॥ ३ ॥

॥ ४९ ॥ ५० ॥ तेनिहत्येति ऋषभादयइत्यर्थः ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ कनकरी० ॥८२॥ ॥ इतिश्रीरामाभिरामेश्रीरामीये०वाल्मी०आ०यु०नवतितमःसर्गः ॥ ९० ॥ ॥ ७ ॥
॥ १ ॥ विजयेनविजयप्राप्तिरूपेणहेतुनाअभिमुखतयायुद्धार्थंप्रवृत्तावभूतांस्थितिशेषः गजवृषौगजश्रेष्ठौ ॥२॥ निबर्हयंतोमारयंतः भर्तारंस्वस्वभर्तारम् संपतंतःसंगच्छमानाः ॥ ३ ॥ स्तुन्वा

तेचास्यहयमुख्येषुतूर्णमुत्पत्यवानराः ॥ चतुर्षुसुमहावीर्यानिपेतुर्भीमविक्रमाः ॥ ४९ ॥ तेपामधिष्ठितानांतैर्वानरैःपर्वतोपमैः ॥ मुखेभ्योरुधिरं व्यक्तंहयानांसमवर्तत ॥ ५० ॥ तेहयामथिताभग्नाव्यसवोधरणींगताः ॥ तेनिहत्यहयांस्तस्यप्रमथ्यचमहारथम् ॥ ५१ ॥ पुनरुत्पत्यवेगेनतस्थु र्लक्ष्मणपार्श्वतः ॥ ५२ ॥ सहताश्वादवप्लुत्यरथान्मथितसारथिः ॥ शरवर्षेणसौमित्रिमभ्यधावतरावणिः ॥ ५३ ॥ ततोमहेंद्रप्रतिमःसलक्ष्मणःपदा तिनंतंनिहतैर्हयोत्तमैः ॥ सृजंतमाजौनिशिताञ्छरोत्तमान्भृशंतदाबाणगतैर्व्यदारयत् ॥ ५४ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिका व्येयुद्धकांडेनवतितमःसर्गः ॥ ९० ॥ ॥ ७ ॥ ॥ सहताश्वोमहातेजाभूमौतिष्ठन्निशाचरः ॥ इंद्रजित्परमक्रुद्धःसंप्रजज्वालतेजसा ॥ १ ॥ तौधन्विनौजिघांसंतावन्योन्यमिषुभिर्भृशम् ॥ विजयेनाभिनिष्क्रांतौवनेगजवृषाविव ॥ २ ॥ निबर्हयंतश्चान्योन्यंतेराक्षसवनौकसः ॥ भर्तारंन जहुर्युद्धेसंपतंतस्ततस्ततः ॥ ३ ॥ ततस्तान्राक्षसान्सर्वान्हर्षयन्रावणात्मजः ॥ स्तुन्वानोहर्षमाणश्चइदंवचनमब्रवीत् ॥ ४ ॥ तमसाबहुलेनेमाःसंस क्ताःसर्वतोदिशः ॥ नेहविज्ञायतेस्वोवापरोवाराक्षसोत्तमाः ॥ ५ ॥ धृष्टंभवंतोयुध्यंतुहरीणांमोहनायवै ॥ अहंतुरथमास्थायआगमिष्यामिसंयुगे ॥ ६ ॥ तथाभवंतःकुर्वंतुयथेमेहिवनौकसः ॥ नयुध्येयुर्महात्मानःप्रविष्टेनगरंमयि ॥ ७ ॥ इत्युक्त्वारावणसुतोवंचयित्वावनौकसः ॥ प्रविवेशपुरीं लंकांरथहेतोररिमित्रहा ॥ ८ ॥ सरथंभूषयित्वाथरुचिरंहेमभूषितम् ॥ प्रासासिशरसंयुक्तंयुक्तंपरमवाजिभिः ॥ ९ ॥

नइत्यार्षम् स्तुवन्नित्यर्थः ॥ ४ ॥ बहुलेनतमसाइमादिशःसंसक्ताःसंवृताः एवंचास्माकंबलकरीरात्रिरागता ॥ ५ ॥ अतोभवंतोधृष्टंनिर्भयंयुध्यंतु मोहनायमदागमनापरिज्ञानायत्वयाकिमर्थं गम्यतेतत्राहाहंत्विति ॥ ६ ॥ प्रविष्टेप्रवेष्टुमुपक्रांतेनयुध्येयुः ममनगरप्रवेशविघ्नार्थंयथावानरामयासहनयुध्येरंस्तथाभवंतःकुर्वंत्वित्यर्थः ॥ ७ ॥ ८ ॥ ९ ॥

उयाऽव्यवस्थातत्तद्वाणैरयुध्यद्वानरराक्षसवधरूपाभवतिअभवदित्यर्थः यत्तुअयमेनंनिगृह्णातिसएनंवेत्यनिः वयरूपाव्यवस्थेतिव्याख्यानंतच्चिंत्यम् तस्याअव्यवस्थायाउग्रत्वस्यनिरूपयितु
मशक्यत्वात् उग्रेतिविशेषणवैयर्थ्याच्च ॥ ३३ ॥ ३४ ॥ प्रतिभयंभयंकरम् ॥ ३५ ॥ ३६ ॥ वाग्भिर्वागिंद्रिंयैः क्रव्यदागृध्रादयः ॥ ३७॥ ३८ ॥ ३९ ॥ पीतेनस्वर्णरूषितेन संपूर्णायतमुक्ते

अव्यवस्थाभवत्युग्राताभ्यामन्योन्यविग्रहे ॥ ताभ्यामुभाभ्यांतरसाप्रसृष्टैर्विशिखैःशितैः ॥ ३३ ॥ निरंतरमिवाकाशंबभूवतमसावृतम् ॥ तैःपत
द्भिश्चबहुभिस्तयोःशरशतैःशितैः॥३४॥दिशश्चप्रदिशश्चैवबभूवुःशरसंकुलाः॥ तमसापिहितंसर्वमासीत्प्रतिभयंमहत्॥३५॥ अस्तंगतेसहस्रांशौ
संवृतेतमसाचवै ॥ रुधिरौघामहानद्यःप्रावर्तंतसहस्रशः॥ ३६ ॥ क्रव्यादादारुणावाग्भिश्चिक्षिपुर्भीमनिःस्वनान्॥ नतदानींववौवायुर्नचजज्वा
लपावकः॥ ३७॥ स्वस्त्यस्तुलोकेभ्यइतिजजल्पुस्तेमहर्षयः॥ संपेतुश्चात्रसंप्राप्तागंधर्वाःसहचारणैः॥ ३८॥ अथराक्षससिंहस्यकृष्णान्कनकभूष
णान्॥ शरैश्चतुर्भिःसौमित्रिर्विव्याधचतुरोहयान्॥३९॥ततोपरेणभल्लेनपीतेननिशितेनच ॥ संपूर्णायतमुक्तेनसुपत्रेणसुवर्चसा॥४०॥महेंद्राश
निकल्पेनसूतस्यविचरिष्यतः ॥ सतेनबाणाशनिनातलशब्दानुनादिना ॥ ४१ ॥ लाघवाद्राघवःश्रीमान्शिरःकायादपाहरत्॥ सयंतरिमहातेजा
हतेमंदोदरीसुतः ॥ ४२ ॥ स्वयंसारथ्यमकरोत्पुनश्चधनुरस्पृशत् ॥ तदद्भुतमभूत्तत्रसामर्थ्यंपश्यतांयुधि ॥ ४३ ॥ हयेषुव्यग्रहस्तंतंविव्याधनिशितैः
शरैः॥ धनुष्यथपुनर्व्यग्रेहयेषुमुमुचेशरान्॥ ४४ ॥ छिद्रेषुतेषुबाणौघैर्विचरंतमभीतवत्॥ अर्दयामाससमरेसौमित्रिःशीघ्रकृत्तमः॥ ४५ ॥ निह
तंसारथिंदृष्ट्वासमरेरावणात्मजः ॥ प्रजहौसमरोद्धर्षंविषण्णःसबभूवह॥ ४६ ॥ विषण्णवदनंदृष्ट्वाराक्षसंहरियूथपाः॥ ततःपरमसंहृष्टालक्ष्मणं
चाभ्यपूजयन्॥ ४७॥ ततःप्रमाथीरभसःशरभोगंधमादनः ॥ अमृष्यमाणाश्चत्वारश्चक्रुर्वेगंहरीश्वराः॥ ४८ ॥

नसंपूर्णमाकर्णपर्यंतमायतेनाकृष्टेनततोमुक्तेन ॥ ४० ॥ विचरिष्यतःरथसंचारंकरिष्यतः तलशब्दानुनादिनात ज्याघातवारणंतस्यज्याघट्टनजोयःशब्दस्तस्यानुनादोयस्यास्तितेन ॥ ४१॥
॥ ४२ ॥ ४३ ॥ हयेषुहयप्रेरणविषयेव्यग्रहस्तंदृष्ट्वातत्समयेइतिशेषः ॥ ४४॥ ४५ ॥ समरोद्धर्षंसमरोत्साहंप्रजहौत्यक्तवान् ॥ ४६ ॥ ४७ ॥ ४८ ॥

अतोहेतोस्त्वयीदंद्वयंदृष्ट्वाआश्चर्यमेवर्ततेतस्मात्सर्वंतत्त्वतःश्रोतुमिच्छामि ॥ २० ॥ २१ ॥ ॥ इति
॥ १८ ॥ १९ ॥ हेदेवसंमतदेवतुल्य ईदृशआहारईदृशोभावश्चकस्यस्यात्नकस्यापि
श्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवा० आदिकाव्येउ० सप्तसप्ततितमःसर्गः ॥ ७७ ॥ ॥ ९ ॥ ॥ श्रुत्वेति सुखदुःखयोर्दिव्यदेहशवभक्षणनिमित्तकयोःकारणमितिशेषः अन

तमर्हंदेवसंकाशमारोहंतमुदीक्ष्यवै ॥ अथाहमब्रुवंवाक्यंतमेवपुरुषर्षभ ॥ १८ ॥ कोभवान्देवसंकाशआहारश्चविगर्हितः ॥ त्वयेदंभुज्यतेसौम्य
किमर्थंवक्तुमर्हसि ॥ १९ ॥ कस्यस्यादीदृशोभावआहारोदेवसंमत ॥ आश्चर्यंवर्ततेसौम्यश्रोतुमिच्छामितत्त्वतः ॥ नाहमौपयिकंमन्येतवभक्ष्यमि
मंशवम् ॥ २० ॥ इत्येवमुक्तःसनरेंद्रनाकीकौतूहलात्सूनृतयागिराच ॥ श्रुत्वाचवाक्यंममसर्वमेतत्सर्वंतथाचाकथयन्ममेति ॥ २१ ॥ ॥ इत्यार्षेश्री
म० वा० आ० उ० सप्तसप्ततितमःसर्गः ॥ ७७ ॥ ॥ ९ ॥ ॥ श्रुत्वातुभाषितंवाक्यंममरामशुभाक्षरम् ॥ प्रांजलिःप्रत्युवाचेदंसस्वर्गीरघुनंदन
॥ १ ॥ शृणुब्रह्मन्पुरावृत्तंममैतत्सुखदुःखयोः ॥ अनतिक्रमणीयंचयथापृच्छसिमांद्विज ॥ २ ॥ पुरावैदर्भकोराजापितामममहायशाः ॥ सुदेवइति
विख्यातस्त्रिषुलोकेषुवीर्यवान् ॥ ३ ॥ तस्यपुत्रद्वयंब्रह्मन्द्वाभ्यांस्त्रीभ्यामजायत ॥ अहंश्वेतइतिख्यातोयवीयान्सुरथोभवत् ॥ ४ ॥ ततःपितरिस्वर्या
तेपौरामामभ्यषेचयन् ॥ तत्राहंकृतवान्राज्यंधर्म्यंचसुसमाहितः ॥ ५ ॥ एवंवर्षसहस्राणिसमतीतानिसुव्रत ॥ राज्यंकारयतोब्रह्मन्प्रजाधर्मेणरक्ष
तः ॥ ६ ॥ सोहंनिमित्तेकस्मिंश्चिद्विज्ञातायुर्द्विजोत्तम ॥ कालधर्मंहृदिन्यस्यततोवनमुपागमम् ॥ ७ ॥ सोहंवनमिदंदुर्गंमृगपक्षिविवर्जितम् ॥ तपश्च
र्तुंप्रविष्टोस्मिसमीपेसरसःशुभे ॥ ८ ॥ भ्रातरंसुरथंराज्येअभिषिच्यमहीपतिम् ॥ इदंसरःसमासाद्यतपस्तप्तंमयाचिरम् ॥ ९ ॥ सोहंवर्षसहस्राणितप
श्चीर्णिमहावने ॥ तप्त्वासुदुष्करंप्राप्तोब्रह्मलोकमनुत्तमम् ॥ १० ॥ तस्यमेस्वर्गभूतस्यक्षुत्पिपासेद्विजोत्तम ॥ बाधेतेपरमेवीरततोहंव्यथितेंद्रियः
॥ ११ ॥ गत्वात्रिभुवनश्रेष्ठंपितामहमुवाचह ॥ भगवन्ब्रह्मलोकोयंक्षुत्पिपासाविवर्जितः ॥ १२ ॥

तिक्रमणीयमेवतत्कारणंयथापृच्छसितथावक्ष्यामिशृण्वितिसंबंधः ॥ २ ॥ ३ ॥ ४ ॥ धर्म्यंधर्मादनपेतंयथातथाकृतवान् ॥ ५ ॥ ६ ॥ कस्मिंश्चिन्निमित्तेकेनचिल्लक्षणेनकालधर्मंमृत्युंहृ
दिन्यस्यज्ञात्वा ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ स्वर्गभूतस्यस्वर्गंब्रह्मलोकंभूतस्यप्राप्तस्य ॥ ११ ॥ त्रिभुवनश्रेष्ठंतृतीयेभुवनेभूर्भुवःस्वःपदापेक्षयातृतीयब्रह्मलोकेश्रेष्ठंहिरण्यगर्भमित्यर्थः यद्वा त्रि
ष्वपिभुवनेषुश्रेष्ठमित्यर्थः ॥ १२ ॥

क्षुत्पिपासेऽनुगेयस्यसः ॥ १३ ॥ १४ ॥ स्वशरीरंत्वयापुष्टंकेवलम् ॥ १५ ॥ तेसूक्ष्मः लिंगव्यत्ययः अल्पमपिदत्तंदानंतेनास्तिदेवपित्रतिथिषु किंतुतपएवनिषेवसे असेविष्टेतियावत् तपोमन
सइंद्रियाणांचैकाग्र्यंमन्मात्रविषयकत्वरूपंतादृशतपःफलंब्रह्मलोकप्राप्तिर्जातातव स्वर्गगतःपरस्वर्गगतः ॥ १६ ॥ तेनमांसभक्षणेनतेतृप्तिःक्षुदादिनिवृत्तिर्भविष्यति ॥ १७ ॥ विमोक्ष्यसेविमो
चयिष्यसइत्यर्थः ॥ १८ ॥ १९ ॥ स्वशरीरमेवभगवदाज्ञयानित्योपस्थितमाहारंकुर्मिकरोमि ॥ २० ॥ तदेवाह क्षयंनाभ्येतीति ॥ २१ ॥ कृच्छ्रभूतस्यकृच्छ्रंप्राप्तस्य दृग्गोचरोमांकृच्छ्राद्वि

कस्यायंकर्मणःपाकःक्षुत्पिपासानुगोह्यहम् ॥ आहारःकश्चमेदेवतन्मेब्रूहिपितामह ॥ १३ ॥ पितामहस्तुमामाहतवाहारःसुदेवज ॥ स्वादूनिस्वानि
मांसानितानिभक्षयनित्यशः ॥ १४ ॥ स्वशरीरंत्वयापुष्टंकुर्वतातपउत्तमम् ॥ अनुप्तंरोहतेश्वेतनकदाचिन्महामते ॥ १५ ॥ दत्तंनतेस्तिसूक्ष्मोपितप
एवनिषेवसे ॥ तेनस्वर्गगतोवत्सबाध्यसेक्षुत्पिपासया ॥ १६ ॥ सत्वंसुपुष्टमाहारैस्स्वशरीरमनुत्तमम् ॥ भक्षयित्वामृतरसंतेनतृप्तिर्भविष्यति ॥ १७ ॥
यदातुतद्वनंश्वेत अगस्त्यःसमहानृषिः ॥ आगमिष्यतिदुर्धर्षस्तदाकृच्छ्राद्विमोक्ष्यते ॥ १८ ॥ सहितारयितुंसौम्यशक्तःसुरगणानपि ॥ किंपुनस्त्वांमहा
बाहोक्षुत्पिपासावशंगतम् ॥ १९ ॥ सोहंभगवतःश्रुत्वादेवदेवस्यनिश्चयम् ॥ आहारंगर्हितंकुर्मिस्वशरीरंद्विजोत्तम ॥ २० ॥ बहून्वर्षगणान्ब्रह्मन्भुज्य
मानमिदंमया ॥ क्षयंनाभ्येतिब्रह्मर्षेतृप्तिश्चापिममोत्तमा ॥ २१ ॥ तस्यमेकृच्छ्रभूतस्यकृच्छ्रादस्माद्विमोक्षय ॥ अन्येषांनगतिर्ह्यत्रकुंभयोनिमृतेद्वि
जम् ॥ २२ ॥ इदमाभरणंसौम्यधारणार्थंद्विजोत्तम ॥ प्रतिगृह्णीष्वभद्रंतेप्रसादंकर्तुमर्हसि ॥ २३ ॥ इदंतावत्सुवर्णंचधनंवस्त्राणिचद्विज ॥ भक्ष्यंभो
ज्यंचब्रह्मर्षेददाम्याभरणानिच ॥ २४ ॥ सर्वान्कामान्प्रयच्छामिभोगांश्चमुनिपुंगव ॥ तारणेभगवन्मह्यंप्रसादंकर्तुमर्हसि ॥ २५ ॥ तस्याहंस्वर्गिणो
वाक्यंश्रुत्वादुःखसमन्वितम् ॥ तारणायोपजग्राहतदाभरणमुत्तमम् ॥ २६ ॥

मोक्षयेत्यर्थः ननुकथमहमगस्त्यइतित्वयावगतस्तत्राहान्येषामिति कुंभयोनिंद्विजमृतेभयादन्येषामत्रनिर्मानुषेगतिर्नास्तिअतस्त्वमगस्त्यइतिनिर्णीतमितिभावः ॥२२ ॥ २३ ॥ ननुएतद्दानस्या
न्नदानत्वाभावात्कथंपुनरेतद्दानेपिदुःखमोक्षस्तत्राह इदमिति अस्यसर्वदत्वादेतद्दानंसर्वदानात्मकमितिभावः ॥ २४ ॥ तस्माद्यदिदंप्रयच्छामितत्सर्वान्कामान्सर्वभोगांश्चप्रयच्छामीतिजानीहि
तारणेतारणनिमित्तम् ॥ २५ ॥ २६ ॥

मयाप्रतिगृहीते तत्सुकृतबलादितिशेषः ननाशह पुनर्भक्षणायनोपस्थितोभूदित्यर्थः ॥ २७ ॥ प्रमुदितः क्षुत्पिपासारहिततयाऽतिसंतोषंप्राप्तः ॥ २८ ॥ तस्मिन्निमित्तेस्वतारणरूपेनिमित्ते ॥ २९ ॥
इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेअष्टसप्ततितमःसर्गः ॥ ७८ ॥ ॥ ७९ ॥ ॥ अथरामेगवनस्यनिर्जनत्वहेतुप्रश्नेतद्वर्णनम् तदिति

मयाप्रतिगृहीतेतुतस्मिन्नाभरणेशुभे ॥ मानुषःपूर्वकोदेहोराजर्षेर्विननाशह ॥ २७ ॥ प्रणष्टेतुशरीरेसौराजर्षिःपरयामुदा ॥ तृप्तःप्रमुदितोराजाजगामत्रिदिवंसुखम् ॥ २८ ॥ तेनेदंशक्रतुल्येनदिव्यमाभरणंमम ॥ तस्मिन्निमित्तेकाकुत्स्थदत्तमद्भुतदर्शनम् ॥ २९ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेअष्टसप्ततितमःसर्गः ॥ ७८ ॥ ॥ ७९ ॥ ॥ तदद्भुततमंवाक्यंश्रुत्वागस्त्यस्यराघवः ॥ गौरवाद्विस्मयाच्चैवभूयःप्रष्टुंप्रचक्रमे ॥ १ ॥ भगवंस्तद्वनंघोरंतपस्तप्यतियत्रसः ॥ श्वेतोवैदर्भकोराजाकथंतदमृगद्विजम् ॥ २ ॥ तद्वनंसकथंराजाशून्यंमनुजवर्जितम् ॥ तपश्चर्तुंप्रविष्टःसश्रोतुमिच्छामितत्त्वतः ॥ ३ ॥ रामस्यवचनंश्रुत्वाकौतूहलसमन्वितम् ॥ वाक्यंपरमतेजस्वीवक्तुमेवोपचक्रमे ॥ ४ ॥ पुराकृतयुगेरामममनुर्दंडधरःप्रभुः ॥ तस्यपुत्रोमहानासीदिक्ष्वाकुःकुलनंदनः ॥ ५ ॥ तंपुत्रंपूर्वकंराज्येनिक्षिप्यभुविदुर्जयम् ॥ पृथिव्यांराजवंशानांभवकर्तेत्युवाचतम् ॥ ६ ॥ तथेवचप्रतिज्ञातंपितुःपुत्रेणराघव ॥ ततःपरमसंतुष्टोमनुःपुत्रमुवाचह ॥ ७ ॥ प्रीतोस्मिपरमोदारकर्ताचासिनसंशयः ॥ दंडेनचप्रजारक्षमाचदंडमकारणे ॥ ८ ॥ अपराधिषुयोदंडःपात्यतेमानवेषुवै ॥ सदंडोविधिवन्मुक्तःस्वर्गंनयतिपार्थिवम् ॥ ९ ॥ तस्माद्दंडेमहाबाहोयत्नवान्भवपुत्रक ॥ धर्मोहिपरमोलोकेकुर्वतस्तेभविष्यति ॥ १० ॥ इतितंबहुसंदिश्यमनुःपुत्रंसमाधिना ॥ जगामत्रिदिवंदृष्टोब्रह्मलोकंसनातनम् ॥ ११ ॥ प्रयातेत्रिदिवेतस्मिन्निक्ष्वाकुरमितप्रभः ॥ जनयिष्येकथंपुत्रानितिचिंतापरोभवत् ॥ १२ ॥

गौरवात्सर्वज्ञःसर्ववक्तापरमगुरुरितिसंभावनयेत्यर्थः ॥ १ ॥ यत्रसतपस्तप्यतितद्वनंकथममृगद्विजम् ॥ २ ॥ तादृशंतद्वनंतपश्चर्तुंचरितुंप्रविष्टः ॥ ३ ॥ ४ ॥ दंडधरोराजाप्रभुःवर्णाश्रमविभागतद्धर्मप्रवर्तनाधिकृतः ॥ ५ ॥ ६ ॥ ७ ॥ दंडेनक्षत्रियसहजधर्मभूतेनशिक्षणेन अकारणेचदंडंमापातयेतिशेषः ॥ ८ ॥ ननुपरपीडावहोदंडःकथंकर्तुंयुक्तस्तत्राह अपराधिष्विति विधिवद्यथाशास्त्रम् यथापराधंमुक्तः प्रवर्तितइत्यर्थः ॥ ९ ॥ कुर्वतः दंडमितिशेषः ॥ १० ॥ समाधिनाप्रणवानुसंधानसहितचित्तैकाग्र्येण अतएवब्रह्मलोकंजगाम ॥ ११ ॥ १२ ॥

बहुरूपैर्यज्ञदाननपोलक्षणैः ॥ १३ ॥ पूर्वजान्ज्येष्ठान् ॥ १४ ॥ दंडेतिनामकरणंपितुःसर्वज्ञत्वादन्वर्थाविसायपूर्वकमित्याहावश्यमिति ॥ १५ ॥ घोरंदेशमपश्यमानः दंडराज्ययोग्यंघोरंदेशमपश्यन्नित्यर्थः ॥ १६ ॥ पर्वतरोधसिपर्वततटप्राये ॥ १७ ॥ १८ ॥ १९ ॥ शक्रोत्रबलिः ॥ २० ॥ ॥ इतिश्रीरा०श्रीरा०रा०वा०आ०उत्तरकांडेएकोनाशीतितमःसर्गः ॥ ७९ ॥



कर्मभिर्बहुरूपैश्चतैस्तैर्मनुसुतस्तदा ॥ जनयामासधर्मात्माशतंदेवसुतोपमान् ॥ १३ ॥ तेषामवरजस्तातसर्वेषांरघुनंदन ॥ मूढश्चाकृतविद्यश्चनशुश्रूषतिपूर्वजान् ॥ १४ ॥ नामतस्यचदंडेतिपिताचक्रेल्पतेजसः ॥ अवश्यंदंडपतनंशरीरेस्यभविष्यति ॥ १५ ॥ अपश्यमानस्तंदेशंघोरंपुत्रस्यराघव ॥ विंध्यशैवलयोर्मध्येराज्यंप्रादादरिंदम ॥ १६ ॥ सदंडस्तत्रराजाभूद्रम्येपर्वतरोधसि ॥ पुरंचाप्रतिमंरामन्यवेशयदनुत्तमम् ॥ १७ ॥ पुरस्यचाकरोन्नाममधुमंतमितिप्रभो ॥ पुरोहितंतूशनसंवरयामाससुव्रतम् ॥ १८ ॥ एवंसराजातद्राज्यमकरोत्सपुरोहितः ॥ प्रहृष्टमनुजाकीर्णंदेवराजोयथादिवि ॥ १९ ॥ ततःसराजामनुजेंद्रपुत्रःसार्धंचतेनोशनसातदानीम् ॥ चकारराज्यंसुमहान्महात्माशक्रोदिवीवोशनसासमेतः ॥ २० ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेएकोनाशीतितमःसर्गः ॥ ७९ ॥ ॥ छ ॥ ॥ एतदाख्यायरामायमहर्षिःकुंभसंभवः ॥ अस्यामेवापरंवाक्यंकथायामुपचक्रमे ॥ १ ॥ ततःसदंडःकाकुत्स्थबहुवर्षगणायुतम् ॥ अकरोत्तत्रदांतात्माराज्यंनिहतकंटकम् ॥ २ ॥ अथकालेतुकस्मिंश्चिद्राजाभार्गवमाश्रमम् ॥ रमणीयमुपाक्रामच्चैत्रेमासिमनोरमे ॥ ३ ॥ तत्रभार्गवकन्यांसरूपेणाप्रतिमांभुवि ॥ विचरंतींवनोद्देशेदंडोऽपश्यदनुत्तमाम् ॥ ४ ॥ सदृष्ट्वातांसुदुर्मेधाअनंगशरपीडितः ॥ अभिगम्यसुसंविग्नःकन्यांवचनमब्रवीत् ॥ ५ ॥ कुतस्त्वमसिसुश्रोणिकस्यवासिसुताशुभे ॥ पीडितोहमनंगेनपृच्छामित्वांशुभानने ॥ ६ ॥ तस्यत्वेवंब्रुवाणस्यमोहोन्मत्तस्यकामिनः ॥ भार्गवीप्रत्युवाचेदंवचःसानुनयंत्विदम् ॥ ७ ॥



एवमुक्तोपोद्घातांप्रकृतकथामाह एतदिति अस्यामेवापरंवाक्यंउपक्रांतकथायामेवसंबद्धम् तत्पृष्टोत्तरभूतमित्यर्थः ॥ १ ॥ दांतात्माजितेंद्रियः ॥ २ ॥ भार्गवःशुक्रस्तत्संबंधिनमाश्रममुपाक्रामदगमत् ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ मोहेनरागमोहेनोन्मत्तस्यउचितानुचितविवेकरहितस्य ॥ ७ ॥

॥ ७ ॥ किनामसुरकार्यंतत्राह । स्वर्गभागिति हियतः शूद्रस्तपसा स्वर्गानर्हः सोसौत्वत्कृतेत्वत्कृततपोनिवर्तनेनस्वर्गभाक्नजातः अतोदेवकार्यंकृतमितिभावः ॥ ८ ॥ ९ ॥ एतंवरंमेदिशंतु एतद्वर दानमेवममेप्सितमित्यन्वयान्नममेतिपुनरुक्तम् ॥ १० ॥ वैवस्वतक्षयंयमसदनम् ॥ ११ ॥ तेनवसुतंजीवयिष्यामीत्ययमर्थोमेमयाद्विजस्यसंश्रुतः प्रतिज्ञातोऽतस्तंजीवयथ मामनृतंकर्तुंनार्हथ

सुप्रीताश्चाब्रुवनरामंदेवाःसत्यपराक्रमम् ॥ सुरकार्यमिदंदेवसुकृतंतेमहामते ॥ ७ ॥ गृहाणचवरंसौम्ययंत्वमिच्छस्यरिंदम ॥ स्वर्गभाङ्नहिशूद्रोयं त्वत्कृतेरघुनंदन ॥ ८ ॥ देवानांभाषितंश्रुत्वारामःसत्यपराक्रमः ॥ उवाचप्रांजलिर्वाक्यंसहस्राक्षंपुरंदरम् ॥ ९ ॥ यदिदेवाःप्रसन्नामेद्विजपुत्रःसजीवतु ॥ दिशंतुवरमेतंमेईप्सितंपरमंमम ॥ १० ॥ ममापचाराद्बालोसौब्राह्मणस्यैकपुत्रकः ॥ अप्राप्तकालःकालेननीतोवैवस्वतक्षयम् ॥ ११ ॥ तंजीवयथभद्रंवोनानृतंकर्तुमर्हथ ॥ द्विजस्यसंश्रुतोर्थोमेजीवयिष्यामितेसुतम् ॥ १२ ॥ राघवस्यतुतद्वाक्यंश्रुत्वाविबुधसत्तमाः ॥ प्रत्यूचूराघवंप्रीता देवाःप्रीतिसमन्वितम् ॥ १३ ॥ निर्वृत्तोभवकाकुत्स्थसोस्मिन्नहनिबालकः ॥ जीवितंप्राप्तवान्भूयःसमेतश्चापिबंधुभिः ॥ १४ ॥ यस्मिन्मुहूर्तेकाकुत्स्थशूद्रोयंविनिपातितः ॥ तस्मिन्मुहूर्तेबालोसौजीवेनसमयुज्यत ॥ १५ ॥ स्वस्तिप्राप्नुहिभद्रंतेसाधुयामनरर्षभ ॥ अगस्त्यस्याश्रमपदंद्रष्टुमिच्छामराघव ॥ १६ ॥ तस्यदीक्षासमाप्ताहिब्रह्मर्षेःसुमहाद्युते ॥ द्वादशंहिगतंवर्षंजलशय्यांसमासतः ॥ १७ ॥ काकुत्स्थतद्गमिष्यामोमुनिंसमभिनंदितुम ॥ त्वंचापिगच्छभद्रंतेद्रष्टुंतमृषिसत्तमम् ॥ १८ ॥ सतथेतिप्रतिज्ञायदेवानांरघुनंदनः ॥ आरुरोहविमानंतंपुष्पकंहेमभूषितम् ॥ १९ ॥ ततोदेवाः प्रयातास्तेविमानैर्बहुविस्तरैः ॥ रामोप्यनुजगामाशुकुंभयोनेस्तपोवनम् ॥ २० ॥ दृष्ट्वातुदेवान्संप्राप्तानगस्त्यस्तपसांनिधिः ॥ अर्चयामासधर्मात्मासर्वांस्तानविशेषतः ॥ २१ ॥

॥ १२ ॥ प्रीतिसमन्वितंयुक्तम् ॥ १३ ॥ अस्मिन्नहनिशूद्रशिरश्छेददिवसे विनापिवरंजीवितंप्राप्तवानित्यर्थः ॥ १४ ॥ उक्तमेवार्थमहःशब्दविवक्षितार्थप्रदर्शनेनप्रकाशयति यस्मिन्मुहूर्तइति ॥ १५ ॥ यामेतिलोट् ॥ १६ ॥ १७ ॥ १८ ॥ तथेतिप्रतिज्ञायदेवानांदेवान्प्रतितथास्त्वित्युक्त्वेत्यर्थः ॥ १९ ॥ २० ॥ अविशेषतः अपक्षपाततइत्यर्थः ॥ २१ ॥

॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ उत्तमैर्बहुभिर्गुणैस्त्वंबहुमतोबहुमान्यः अतिथित्वाच्चपूज्यः विशेषतश्चत्वंमेपूज्यइत्याह ममहृदिस्थितइति अंतर्यामिस्वरूपत्वादितिभावः अतएवसदास्मरण विषयतयापिहृदिस्थितःअतोध्येयत्वाच्चत्वंपूज्यः यद्वा हृदिस्थितः तेनस्वस्वरूपत्वमप्युक्तम् ॥२६ ॥ ब्राह्मणस्यसुतःशूद्रहननधर्मेणत्वयाजीवापितःजीवनंप्रापितः पुगार्षः ॥२७॥ नारायणः नारस्यजीवसमूहस्यस्थानं तदेवाह त्वयिसर्वमिति ॥ २८ ॥ सनातनःपुरुषोब्रह्म ॥ २९ ॥ दिव्येनवपुषासन्निवेशेनदिव्यं अतएवस्वतेजसादीप्यमानं आभरणंवलयरूपम् ॥ ३० ॥ ननुक्षत्रि

प्रतिगृह्यततःपूजांसंपूज्यचमहामुनिम् ॥ जग्मुस्तेत्रिदशाहृष्टानाकपृष्ठंसहानुगाः ॥ २२ ॥ गतेषुतेषुकाकुत्स्थःपुष्पकादवरुह्यच ॥ ततोऽभिवादयामासअगस्त्यमृषिसत्तमम् ॥२३॥ सोभिवाद्यमहात्मानंज्वलंतमिवतेजसा ॥ आतिथ्यंपरमंप्राप्यनिषसादनराधिपः ॥ २४ ॥ तमुवाचमहातेजाः कुंभयोनिर्महातपाः ॥ स्वागतंतेनरश्रेष्ठदिष्ट्याप्राप्तोसिराघव ॥ २५ ॥ त्वंमेबहुमतोरामगुणैर्बहुभिरुत्तमैः ॥ अतिथिःपूजनीयश्चममराजन्हृदिस्थितः ॥ २६ ॥ सुराहिकथयंतित्वामागतंशूद्रघातिनम् ॥ ब्राह्मणस्यतुधर्मेणत्वयाजीवापितःसुतः ॥ २७॥ उष्यतांचेहरजनींसकाशेममराघव ॥ त्वंहिनारायणःश्रीमांस्त्वयिसर्वंप्रतिष्ठितम् ॥ २८ ॥ त्वंप्रभुःसर्वदेवानांपुरुषस्त्वंसनातनः ॥ प्रभातेपुष्पकेणत्वंगंतास्वपुरमेवहि ॥ २९ ॥ इदंचाभरणंसौम्यनिर्मितंविश्वकर्मणा ॥ दिव्यंदिव्येनवपुषादीप्यमानंस्वतेजसा ॥ ३० ॥ प्रतिगृह्णीष्वकाकुत्स्थमत्प्रियंकुरुराघव ॥ दत्तस्यहिपुनर्दानेसुमहत्फलमुच्यते ॥ ३१ ॥ भरणेहिभवान्शक्तःफलानांमहतामपि ॥ त्वंहिशक्तस्तारयितुंसेंद्रानपिदिवौकसः ॥ ३२ ॥ तस्मात्प्रदास्येविधिवत्तत्प्रतीच्छनराधिप ॥ अथोवाचमहात्मानमिक्ष्वाकूणांमहारथः ॥ ३३ ॥

यस्यब्राह्मणाद्द्रव्यग्रहणमनुचितंतत्राह मत्प्रियंकुर्विति मत्प्रियार्थमनुचितमपिकार्यमित्याशयः किंचराजत्वाद्रिक्तहस्ततयात्वद्दर्शनस्यममानुचिततयाएतद्ग्रहणेममप्रियंभवतितवचदोषोनास्ति भक्तदत्तांगीकारेइवहविषोंगीकारइवचदोषाभावाच्चेत्याशयः ननुतवकिंप्रियंतत्राह दत्तस्येति येनकेनापिदत्तस्यानुपभुज्यपुनःस्वेष्टदेवादिभ्योदानेमहत्फलमुच्यते लब्ध्वाष्टगुणंपुण्यमितिस्मरणात् एवंचमहाफलहेतुत्वात्तुभ्यंतद्दानंममप्रियमितिभावः ॥ ३१ ॥ नन्वन्यस्माएवतर्हिदेयंतत्राह भरणेहीति आभरणस्यधारणेभवानेवशक्तोयोग्यः किंचमहतामपिफलानांब्रह्मलोकादीनांदानेचत्वंशक्तइतिशेषः ननुमत्तोपिमहद्भ्यइंद्रादिभ्योदीयतांतत्राह त्वंहीति तेत्वत्तोनमहांतइतिभावः ॥ ३२ ॥ ३३ ॥

किंविषयकमुवाचेत्यत्राहागममिति प्राप्तिमार्गमित्यर्थः इदंदिव्यमत्यद्भुतमत्याश्चर्यमित्यर्थः अद्भुतंयथाभवतितथावपुषासन्निवेशविशेषेणयुक्तम् ॥ ३४ ॥ कथंकेनप्रकारेणकुतोहेतोःकेनपुरु

"रामोमनिमतांश्रेष्ठःक्षत्रधर्ममनुस्मरन् ॥ प्रतिग्रहोयंभगवन्ब्राह्मणस्याविगर्हितः ॥ क्षत्रियेणकथंविप्रप्रतिग्राह्यंभवेत्ततः॥ प्रतिग्रहोहिविप्रेंद्र क्षत्रियाणांसुगर्हितः ॥ब्राह्मणेनविशेषेणदत्तंतद्वक्तुमर्हसि ॥ एवमुक्तस्तुरामेणप्रत्युवाचमहानृषिः ॥ आसन्कृतयुगेरामब्रह्मभूतेपुरायुगे॥ अपार्थिवाःप्रजाःसर्वाःसुराणांतुशतक्रतुः॥ ताःप्रजादेवदेवेशंराजार्थंसमुपाद्रवन्॥ सुराणांस्थापितोराजात्वयादेवशतक्रतुः॥ प्रयच्छास्मासुलोकेशपार्थिवंनरपुंगवम् ॥ यस्मिपूजांप्रयुंजानाधूतपापाश्चरेमहि ॥ नवसामोविनाराज्ञाएषनोनिश्चयःपरः॥ ततोब्रह्मासुरश्रेष्ठोलोकपालान्सवासवान्॥ समाहूयाब्रवीत्सर्वांस्तेजोभागान्प्रयच्छत॥ ततोददुर्लोकपालाःसर्वेभागान्स्वतेजसः ॥ अक्षुपच्चततोब्रह्मायतोजातःक्षुपोनृपः ॥ तंब्रह्मालोकपालानांसमांशैःसमयोजयत् ॥ ततोददौनृपंतासांप्रजानामीश्वरंक्षुपम् ॥ तत्रैंद्रेणचभागेनमहीमाज्ञापयन्नृपः ॥ वारुणेनतुभागेनवपुःपुष्यतिपार्थिवः॥ कौबेरेणतुभागेनवित्तपाभांददौतदा॥ यस्तुयाम्योऽभवद्भागस्तेनशास्तिस्मसप्रजाः॥ तत्रैंद्रेणनरश्रेष्ठभागेनरघुनंदन॥प्रतिगृह्णीष्वभद्रंतेतारणार्थममप्रभो ॥ तद्रामःप्रतिजग्राहमुनेस्तस्यमहात्मनः॥ दिव्यमाभरणंचित्रंप्रदीप्तमिवभास्करम्॥ प्रतिगृह्यततोरामस्तदाभरणमुत्तमम्" ॥ आगमंतस्यदीप्तस्यप्रष्टुमेवोपचक्रमे ॥ अत्यद्भुतमिदंदिव्यंवपुषायुक्तमद्भुतम्॥ ३४ ॥ कथंवाभवताप्राप्तंकुतोवाकेनवाहृतम्॥ कौतूहलतयाब्रह्मन्पृच्छामित्वांमहायशः॥ ३५॥ आश्चर्याणांबहूनांहिनिधिःपरमकोभवान् ॥ एवंब्रुवतिकाकुत्स्थेमुनिर्वाक्यमथाब्रवीत्॥ शृणुरामयथावृत्तंपुरात्रेतायुगेयुगे॥ ३६॥ ॥इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेषट्सप्ततितमःसर्गः ॥ ७६ ॥ ॥ ७ ॥ ॥पुरात्रेतायुगेरामबभूवबहुविस्तरम्॥ समंताद्योजनशतंविमृगंपक्षिवर्जितम्॥ १ ॥

षणाद्दत्तंदत्तम् ॥ ३५ ॥ पुरात्रेतायुगेयुगेपूर्वतनत्रेयुगाख्येयुगे ॥ ३६ ॥ ॥ इतिश्री०श्रीरा०रा०वा०आ०उ०षट्सप्ततितमःसर्गः ॥ ७६ ॥ ॥ ७ ॥ ॥ अथतत्प्राप्तिकथनं पुरेति पूर्वचतुर्युगवर्तित्रेतायुगेबहुविस्तरंबहुविस्तारंपक्षिवर्जितमरण्यमभूदितिशेषः ॥ १ ॥

तस्मिन्नरण्येतस्यैकदेशेउत्तमंतपःकुर्वाणोहंतदारण्यमाक्रमितुमासमंतात्पर्यटनेनकृत्स्नमवगंतुमुपागममुपगतवानस्मि ॥ २ ॥ तस्यरूपमिति सुखावहंस्वरूपमित्यर्थः नशशाकनशक्तवान् अपरोक्षेलिङार्षः नचैवाह फलमूलैरिति ॥ ३ ॥ ४ ॥ सुखास्वादंसुखावहप्राशनपानीयवत् ॥ ५ ॥ ६ ॥ नैदाघींनिदाघसंबंधिनीम् ॥ ७ ॥ काल्यंप्रातःकर्तव्यंस्नानादिकमौद्दिश्योत्थायतत्सरोगंतु



तस्मिन्निर्मानुषेरण्येकुर्वाणस्तपउत्तमम् ॥ अहमाक्रमितुंसौम्यतदारण्यमुपागमम् ॥ २ ॥ तस्यरूपमरण्यस्यनिर्देष्टुंनशशाकह ॥ फलमूलैःसुखास्वादैर्बहुरूपैश्चकाननैः ॥ ३ ॥ तस्यारण्यस्यमध्येतुसरोयोजनमायतम् ॥ हंसकारंडवाकीर्णंचक्रवाकोपशोभितम् ॥ ४ ॥ पद्मोत्पलसमाकीर्णंसमतिक्रांतशैवलम् ॥ तदाश्चर्यमिवात्यर्थंसुखास्वादमनुत्तमम् ॥ ५ ॥ अरजस्कंतदाक्षोभ्यंश्रीमत्पक्षिगणायुतम् ॥ तस्मिन्सरःसमीपेतुमहदद्भुतमाश्रमम् ॥ ६ ॥ पुराणंपुण्यमत्यर्थंतपस्विजनवर्जितम् ॥ तत्राहमवसंरात्रिंनैदाघींपुरुषर्षभ ॥ ७ ॥ प्रभातेकाल्यमुत्थायसरस्तदुपचक्रमे ॥ अथापश्यंशवंतत्रसुपुष्टमरजःक्वचित् ॥ ८ ॥ तिष्ठंतंपरयालक्ष्म्यातस्मिंस्तोयाशयेनृप ॥ तमर्थंचिंतयानोहंमुहूर्तंतत्रराघव ॥ ९ ॥ विष्ठितोस्मिसरस्तीरेकिंन्विदंस्यादितिप्रभो ॥ अथापश्यंमुहूर्तात्तुदिव्यमद्भुतदर्शनम् ॥ १० ॥ विमानंपरमोदारंहंसयुक्तंमनोजवम् ॥ अत्यर्थंस्वर्गिणंतत्रविमानेरघुनंदन ॥ ११ ॥ उपास्तेप्सरसांवीरसहस्रंदिव्यभूषणम् ॥ गायंतिकाश्चिद्रम्याणिवादयंतितथापराः ॥ १२ ॥ मृदंगवीणापणवान्नृत्यंतिचतथापराः ॥ अपराश्चंद्ररश्म्याभैर्हेमदंडैर्महाधनैः ॥ १३ ॥ दोधूयुर्वदनंतस्यपुंडरीकनिभेक्षणाः ॥ ततःसिंहासनंहित्वामेरुकूटमिवांशुमान् ॥ १४ ॥ पश्यतोमेतदारामविमानादवरुह्यच ॥ तंशवंभक्षयामासससस्वर्गीरघुनंदन ॥ १५ ॥ ततोभुक्त्वायथाकामंमांसंबहुसुपीवरम् ॥ अवतीर्यसरःस्वर्गीसंस्प्रष्टुमुपचक्रमे ॥ १६ ॥ उपस्पृश्ययथान्यायंसस्वर्गीरघुनंदन ॥ आरोढुमुपचक्रामविमानवरमुत्तमम् ॥ १७ ॥

मुपचक्रमे अपरोक्षेलिङार्षः अरजःनिर्मलम् ॥ ८ ॥ लक्ष्म्याउपेतमितिशेषः तमर्थंचिंतयानःकिमिदंस्यादितिचिंतयानः शवःसन्नपिनिर्मलोलक्ष्मीयुक्तश्चेतिकिमिदमितिस्वदृष्टार्थविषयकचिंतांकुर्वाणइत्यर्थः ॥ ९ ॥ १० ॥ अत्यर्थंअतिरूपवंतम् ॥ ११ ॥ १२ ॥ चंद्ररश्म्याभैश्चामरैरितिशेषः ॥ १३ ॥ दोधूयुरितियङ्लुगंतस्य ॥ १४ ॥ पश्यतोमेसमक्षमितिशेषः ॥ १५ ॥ संस्प्रष्टुंशुद्धाचमनंकर्तुम् ॥ १६ ॥ १७ ॥

अनर्थेत्रेतायुगेब्राह्मणक्षत्रिययोस्तपोविशेषेणतयोर्मध्येब्राह्मणस्यततःक्षत्रादधिकंविशेषमपश्यंतोमन्वादयःसर्वैतात्कालिकाधर्मप्रवर्तनाधिकृताः चातुर्वर्ण्यस्य स्वार्थेष्यञ् ब्राह्मणादिचतुर्वर्णा
नांसंमतमनादितःसर्वलोकसंमतंस्थापनंवर्णानामाचारभेदकस्थापनंशास्त्रंतत्रत्रेतायुगेचक्रिरे कृतेतुविनैवस्थापनंस्वयमेवसर्वेवर्णाःस्वस्वधर्मरताइतिभावः ॥ १४ ॥ तस्मिन्त्रेतायुगेधर्मभूतेव
र्णाश्रमप्रयुक्तयागादिधर्मबहुलेऽनावृतेधर्माचरणप्रतिबंधकपापरहितेप्रज्वलितेतैनैवधर्मेणप्रदीप्तेसतिअधर्मोहिंसानृतासंतोषविग्रहरूपचतुष्पात्पृथिवीतलेपादंचतुर्थांशंपातयत्अपातयत्प्रवर्त
यामासेत्यर्थः एवंचत्रेतापुरुषाःकृतयुगपुरुषाइवनिर्मलज्ञानराहित्याद्ब्रह्मज्ञानाधिकारशून्याअग्निहोत्रादिधर्मेएवप्रवृत्ताः ज्ञानाभावादेवचाधर्मोपिपादेनप्रवृत्तइतिभावः ॥ १५ ॥ अतएवते
कृतयुगपुरुषेभ्यःक्षीणाइत्याह अधर्मेणेति यतस्तेनसंयुक्तोलोकोवर्णाश्रमाधिकृतोभवतिततस्तस्यतेजोमंदंभविष्यति ॥ १६ ॥ एवंचतेषांकृष्यादिकमेवजीवनोपायइत्याहामिषमिति पूर्वेषां
कृतयुगस्थानांशुभमत्यर्थंमलंमलवत्त्याज्यंयद्राजसंरजोगुणमूलमामिषंजीवनोपायरूपंकृष्याद्यासीत्तदनृतंनाम सेवाश्ववृत्तिरनृतंकृषिरितिकोशात् तद्रूपेणपादेनपृथिवीतलेभूतंप्राप्तमधर्मे

अपश्यंतस्तुतेसर्वेविशेषमधिकंततः॥ स्थापनंचक्रिरेतत्रचातुर्वर्ण्यस्यसंमतम् ॥ १४ ॥ तस्मिन्युगेप्रज्वलितेधर्मभूतेह्यनावृते॥ अधर्मःपादमेकं
तुपातयत्पृथिवीतले ॥ १५ ॥ अधर्मेणहिसंयुक्तस्तेजोमंदंभविष्यति ॥ १६ ॥ आमिषंयच्चपूर्वेषांराजसंचमलंभृशम् ॥ अनृतंनामतद्भूतंक्षिप्तेनपृ
थिवीतले ॥ १७ ॥ अनृतंपातयित्वातुपादमेकमधर्मतः॥ ततःप्रादुष्कृतंपूर्वमायुषःपरिनिष्ठितम् ॥ १८ ॥ पातितेत्वनृतेतस्मिन्नधर्मेणमहीतले॥
शुभान्येवाचरंल्लोकःसत्यधर्मपरायणः॥ १९ ॥

णेतिशेषः कृतेत्वकृष्टपच्याहाराइतिभावइतितीर्थः कतकस्तु अपिचपूर्वेषांसत्वस्थानांयच्चामिषंपुरदेशगृहक्षेत्रादितदुद्दिश्यराजसंरजोगुणमूलंद्वेषलक्षणंभवतित्रेतायामितिशेषः कामएष
क्रोधएषरजोगुणसमुद्भवइत्युक्तेः कोनामाधर्मस्यपादस्तत्राहानृतमिति येनपृथिवीक्षिप्तेनपादेनतत्यागुक्तंद्वेषरूपंमलंभूतंतदनृतंनाम देहात्मताधीरूपमिथ्याज्ञानात्मकःसर्वानर्थमूलोहंकारमयः
प्रथमःपादइत्यर्थइत्याह ॥ १७ ॥ तत्पादपातेकिंभवतीत्याह अनृतमिति उक्तरूपमेकमनृतपादंपातयित्वानिक्षिप्याधर्मतोऽधर्मेणपूर्वयुगेऽपरिमितस्यायुषःपरिनिष्ठितंपरिमाणंप्रादुष्कृतंते
नकृतयुगपुरुषापेक्षयात्रेतापुरुषाणांप्रभावादिन्यूनताआयुर्न्यूनताचोक्ता ॥ १८ ॥ अथायुःक्षयकारकाधर्मपादपरिहारहेतुव्यापारोपदेशः पातितेत्विति अधर्मेणतस्मिन्ननृतेउक्तलक्षणानृत
पादेमहीतलेपातितेसतिनत्ययुक्तायुःक्षयपरिहारायशुभान्येवयज्ञदानतपोरूपपुण्यकर्माण्येवाचरन्लोकोधर्माधिकारीतद्बलात्सत्यधर्मपरायणोभवति अनेनत्रेतायांयज्ञाद्यनुष्ठानेनशुद्धचित्त
स्यज्ञ.टतिदेहात्माभिमाननिवृत्तिरित्युक्तम् ॥ १९ ॥

उक्तमेवस्पष्टीकरोति त्रेतेति ब्राह्मणाःक्षत्रियाश्चयेतएवयज्ञादिशुद्धचित्तास्तपोतप्यंत अपरेसर्वेविट्शूद्रसंकरविशेषाःब्राह्मणक्षत्रियशुश्रूषांचक्रुरितिशेषः ॥ २० ॥ अथतेषांमध्येवैश्यशूद्रं समाहारद्वंद्वः शुश्रूषारूपःपरमःस्वधर्मउत्कृष्टःस्वधर्मोभूत्वाऽगमत्प्राप्तोभूत्तदेवाह पूजांचेति सर्ववर्णानांत्रैवर्णिकानां एवंचवैश्यस्यकृष्यादिकरणेनद्विवर्णसेवाधर्मइत्यर्थादुक्तमितिबोध्यम् ॥ २१ ॥ अथद्वापरप्रवृत्तिंदर्शयितुमाह एतस्मिन्निति एतस्मिन्नंतरेत्रेतायुगावसानकाले तेषांवैश्यशूद्राणामनृतरूपेऽधर्मपादेसम्यक्प्राप्तेसतीतिशेषः ततःपूर्वेब्राह्मणाःक्षत्रियाह्रासमगमन्प्राप्ताः ह्रासमुपागमन्नितिपाठेसेवकदोषस्यस्वामिप्राप्यत्वाद्राष्ट्रदोषाद्धीनावभूवुः ॥ २२ ॥ ततस्तदनंतरमधर्मस्यद्वितीयंपादंममतारूपमधर्मोऽवतारयत् ततोद्वितीयपादावतारणादेवतृतीययुगस्यद्वा

त्रेतायुगेचवर्तंतेब्राह्मणाःक्षत्रियाश्चये ॥ तपोऽतप्यंततेसर्वेशुश्रूषामपरेजनाः ॥ २० ॥ स्वधर्मःपरमस्तेषांवैश्यशूद्रंतदागमत् ॥ पूजांचसर्ववर्णानां शूद्राश्चक्रुर्विशेषतः ॥ २१ ॥ एतस्मिन्नंतरेतेषामधर्मेचानृतेचह ॥ ततःपूर्वेपुनर्ह्रासमगमन्नृपसत्तम ॥ २२ ॥ ततःपादमधर्मस्यद्वितीयमवतारयत् ॥ ततोद्वापरसंख्यासायुगस्यसमजायत ॥ २३ ॥ तस्मिन्द्वापरसंख्येतुवर्तमानेयुगक्षये ॥ अधर्मश्चानृतंचैववव्रधेपुरुषर्षभ ॥ २४ ॥ अस्मिन्द्वापर संख्यानेतपोवैश्यान्समाविशत् ॥ त्रिभ्योयुगेभ्यस्त्रीन्वर्णान्क्रमाद्वैतपआविशत् ॥ २५ ॥ त्रिभ्योयुगेभ्यस्त्रीन्वर्णान्धर्मश्चपरिनिष्ठितः ॥ नशूद्रोल भतेधर्मंयुगतस्तुनरर्षभ ॥ २६ ॥ हीनवर्णोनृपश्रेष्ठतप्यतेसुमहत्तपः ॥ भविष्यच्छूद्रयोन्यांहितपश्चर्याकलौयुगे ॥ २७ ॥ अधर्मःपरमोराजन्द्वापरे शूद्रजन्मनः ॥ सवैविषयपर्यंतेतवराजन्महातपाः ॥ २८ ॥

परसंख्याद्वापरइतिनाम पृषोदरादित्वात्साधुः ॥ २३ ॥ तत्कालिकलोकस्थितिमाह तस्मिन्निति द्वापरसंख्येद्वापराख्येयुगस्याधर्मपादद्वयस्यक्षयेआश्रयभूतेयुगेवर्तमानेतद्रूप अयंप्राप्याधर्मो विहितातिक्रमरूपःअनृतंचववृधेऽहंभावममतयोराधिक्यात् तीर्थस्तुअधर्मवृद्धिरत्यल्पायुष्ट्वं अनृतवृद्धिःप्रयासबाहुल्येनकृषिसाफल्यमित्याह ॥ २४ ॥ तद्वृद्धिफलमाह वैश्यांस्तपःसमा विशत् एवंत्रिभ्योयुगेभ्यः सप्तम्यर्थेचतुर्थी त्रिषुयुगेषु ॥ २५ ॥ तथात्रिषुयुगेषुत्रीन्वर्णानवलंब्यधर्मस्तपोरूपःपरिनिष्ठितःप्रतिष्ठितोभूत् धर्मंतपोलक्षणंशूद्रोयुगतोयुगत्रयेपिनलभते ॥ २६ ॥ किंतुहीनवर्णःशूद्रःकदाचित्सुमहत्तपस्तप्यते कदातत्राह भविष्यदिति ॥ भविष्यत्कालवर्तिन्यांशूद्रयोन्यांशूद्रजातौकलौयुगेतपश्चर्याभविष्यतिनत्वेतत्कालिकेइतिभावः ॥ २७ ॥ यदेवम तोद्वापरेपिशूद्रजन्मनस्तपोधारणंपरमोऽधर्मःकिमुताद्यत्रेतायां सशूद्रोवैनिश्चयेनतवविषयपर्यंतेदेशसमीपेमहातपाभूत्वादुर्बुद्धिरयंतपति तेनैवहेतुनायंबालवधोजातः ॥ २८ ॥

उक्तमेवदार्ढ्यायपुनराह योहीति योहिदुर्मतिःपार्थिवस्यविषयेदेशेपुरेवाऽधर्मंविहितधर्मलोपमकार्यंनिषिद्धकृत्यंवाकरोतितदेवपुरेराज्येवाऽश्रीमूलमलक्ष्मीमूलंभवति तदनिवारयन्सराजाक्षि
प्रंनरकंयातिइहामुत्रचपरमकश्मलंप्राप्नोतिनात्रसंशयः ॥ २९ ॥ ३० ॥ ३१ ॥ नन्वन्यदीयाधर्मेणकथंराज्ञःकश्मलप्राप्तिरतआह षड्भागस्येति रक्षार्थंधनधान्यपुण्यादिषड्भागवेतनभोक्ताक
यंनरक्षेत् न्यायेनरक्षायांधर्मादिषड्भागप्राप्तिवदरक्षणेऽधर्मभागप्राप्तिरपीतिभावः अतःसत्वमिति ॥ ३२ ॥ यत्नंनिवारणयत्नम् ॥ ३३ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलके

अप्यनत्यतिदुर्बुद्धिस्तेनबालवधोह्ययम् ॥ योह्यधर्ममकार्यंवाविषयेपार्थिवस्यतु ॥ २९ ॥ करोतिचाश्रीमूलंतत्पुरेवादुर्मतिर्नरः ॥ क्षिप्रंचनरकंयाति सचराजानसंशयः ॥ ३० ॥ अधीतस्यचतप्तस्यकर्मणःसुकृतस्यच ॥ षष्ठंभजतिभागंतुप्रजाधर्मेणपालयन् ॥ ३१ ॥ षड्भागस्यचभोक्तासौरक्षतेनप्रजाःकथम् ॥ सत्वंपुरुषशार्दूलमार्गस्वविषयंस्वकम् ॥ ३२ ॥ दुष्कृतंयत्रपश्येथास्तत्रयत्नंसमाचर ॥ एवंचेद्धर्मवृद्धिश्चनृणांचायुर्विवर्धनम् ॥ भविष्यतिनरश्रेष्ठबालस्यास्यचजीवितम् ॥ ३३ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेचतुःसप्ततितमःसर्गः ॥ ७४ ॥ ॥ ७५ ॥ नारदस्यतुतद्वाक्यंश्रुत्वाऽमृतमयंयथा ॥ प्रहर्षमतुलंलेभेलक्ष्मणंचेदमब्रवीत् ॥ १ ॥ गच्छसौम्यद्विजश्रेष्ठंसमाश्वासयसुव्रत ॥ बालस्यचशरीरंततैलद्रोण्यांनिधापय ॥ २ ॥ गंधैश्चपरमोदारैस्तैलैश्चसुसुगंधिभिः ॥ यथानक्षीयतेबालस्तथासौम्यविधीयताम् ॥ ३ ॥ यथाशरीरोबालस्यगुप्तःसन्क्लिष्टकर्मणः ॥ विपत्तिःपरिभेदोवानभवेच्चतथाकुरु ॥ ४ ॥ एवंसंदिश्यकाकुत्स्थोलक्ष्मणंशुभलक्षणम् ॥ मनसापुष्पकंदध्यावागच्छेतिमहायशाः ॥ ५ ॥ इंगितंसतुविज्ञायपुष्पकोहेमभूषितः ॥ आजगाममुहूर्तेनसमीपेराघवस्यवै ॥ ६ ॥ सोब्रवीत्प्रणतोभूत्वाअयमस्मिनराधिप ॥ वश्यस्तवमहाबाहोकिंकरःसमुपस्थितः ॥ ७ ॥ भाषितंरुचिरंश्रुत्वापुष्पकस्यनराधिपः ॥ अभिवाद्यमहर्षींन्सविमानंसोध्यरोहत ॥ ८ ॥ धनुर्गृहीत्वातूणींचखड्गंचरुचिरप्रभम् ॥ निक्षिप्यनगरेचैतौसौमित्रिभरतावुभौ ॥ ९ ॥

वाल्मीकीयेआदिकाव्येउत्तरकांडेचतुःसप्ततितमःसर्गः ॥ ७४ ॥ ॥ ७५ ॥ ॥ अथशूद्रतपस्विनोन्विष्यदर्शनं नारदस्येति ॥ १ ॥ २ ॥ ३ ॥ यथानक्षीयतेतथाविधीयतामित्युक्तमेवविवृणो
ति यथेति क्लिष्टकर्मणःशुभाचारस्यबालस्यशरीरः अर्थचर्चादिः गुप्तःसन्यथानक्षीयतेतथाविधीयतामितिपूर्वेणान्वयः विपत्तिःस्वरूपनाशः शरीरस्येतिशेषः परिभेदःसंधिबंधकेशादिविश्लेषजो
रूपभेदश्च तदुभयंयथानभवतितथाकुरु ॥ ४ ॥ ५ ॥ पुष्पकस्तदधिष्ठातृचेतनः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

हरितंदिशंविचिन्वन्नस्थूलतपस्विनमितिशेषः ॥ १० ॥ अपश्यमानःअपश्यन् ॥ ११ ॥ १२ ॥ शैवलस्यशैवलाख्यस्यविंध्यसमीपदक्षिणभागवर्तिगिरेः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ कोर्थ इति तुभ्यंतवकराश्रयःप्रीतदेवतावरलभ्योमनीषितोभीष्टोर्थःकःस्वर्गलाभःपरोन्योवा यदर्थंतपसि ॥ १७ ॥ सत्यवाग्भवसत्यंवद ॥ १८ ॥ १९ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामाय

प्रायात्प्रतीचींहरितंविचिन्वंश्चततस्ततः ॥ उत्तरामगमच्छ्रीमान्दिशंहिमवतावृताम् ॥ १० ॥ अपश्यमानस्तत्रापिस्वल्पमप्यथदुष्कृतम् ॥ पूर्वामपि दिशंसर्वामथोपश्यन्नराधिपः ॥ ११ ॥ प्रविशुद्धसमाचारामादर्शतलनिर्मलाम् ॥ पुष्पकस्थोमहाबाहुस्तदापश्यन्नराधिप ॥ १२ ॥ दक्षिणांदिश माकामत्ततोराजर्षिनंदनः ॥ शैवलस्योत्तरेपार्श्वेददर्शसुमहत्सरः ॥ १३ ॥ तस्मिन्सरसितप्यंतंतापसंसुमहत्तपः ॥ ददर्शराघवःश्रीमाँल्लंबमानम धोमुखम् ॥ १४ ॥ राघवस्तमुपागम्यतप्यंतंतपउत्तमम् ॥ उवाचचनृपोवाक्यंधन्यस्त्वमसिसुव्रत ॥ १५ ॥ कस्यांयोन्यांतपोवृद्धवर्तसेदृढविक्रम ॥ कौतूहलात्त्वांपृच्छामिरामोदाशरथिस्त्वहम् ॥ १६ ॥ कोर्थोमनीषितस्तुभ्यंस्वर्गलाभोपरोथवा ॥ वराश्रयोयदर्थंत्वंतपस्यन्यैःसुदुश्चरम् ॥ १७ ॥ यमा श्रित्यतपस्तप्तंश्रोतुमिच्छामितापस ॥ ब्राह्मणोवासिभद्रंतेक्षत्रियोवासिदुर्जयः ॥ वैश्यस्तृतीयोवर्णोवाशूद्रोवासत्यवाग्भव ॥ १८ ॥ इत्येवमुक्तः स्तराधिपेन अवाक्शिरादाशरथायतस्मै ॥ उवाचजातिंनृपपुंगवाययत्कारणंचैवतपःप्रयत्नः ॥ १९ ॥ ॥ इत्यार्षेश्रीम० वा० आ० उत्तरकांडेपंच सप्ततितमःसर्गः ॥ ७५ ॥ ॥ ७ ॥ ॥ तस्यतद्वचनंश्रुत्वारामस्याक्लिष्टकर्मणः ॥ अवाक्शिरास्तथाभूतोवाक्यमेतदुवाचह ॥ १ ॥ शूद्रयोन्यांप्र जातोस्मितपउग्रंसमास्थितः ॥ देवत्वंप्रार्थयेरामसशरीरोमहायशः ॥ २ ॥ नमिथ्याहंवदेरामदेवलोकजिगीषया ॥ शूद्रंमांविद्धिकाकुत्स्थशंबूको नामनामतः ॥ ३ ॥ भाषतस्तस्यशूद्रस्यखड्गंसुरुचिरप्रभम् ॥ निष्कृष्यकोशाद्विमलंशिरश्चिच्छेदराघवः ॥ ४ ॥ तस्मिन्शूद्रेहतेदेवाःसेंद्राःसाग्निपुरो गमाः ॥ साधुसाध्विति काकुत्स्थंतेशशंसुर्मुहुर्मुहुः ॥ ५ ॥ पुष्पवृष्टिर्महत्यासीद्दिव्यानांसुसुगंधिनाम् ॥ पुष्पाणांवायुमुक्तानांसर्वतःप्रपपातह ॥ ६ ॥

णतिलकेवाल्मीकीयेआदिकाव्ये उत्तरकांडेपंचसप्ततितमःसर्गः ॥ ७५ ॥ ॥ ७ ॥ ॥ अथशूद्रशिरश्छेदेनबालोज्जीवनं तस्येति ॥ १ ॥ २ ॥ मिथ्यावचनभावेहेतुर्देवलोकजिगीषया ॥ ३ ॥ तस्यशिरइत्यन्वयः ॥ ४ ॥ अग्निपुरोगमोवायुर्ब्रह्मातत्सहिताः ॥ ५ ॥ पुष्पवृष्टेःप्रपंचनं दिव्यानामिति प्रपपात वृष्टिरितिशेषः ॥ ६ ॥

पौर्वाह्लिकक्रमंशौचस्नानार्घ्यसंध्यावंदनब्रह्मयज्ञानुष्ठानरूपंपूर्वाह्नसंबंध्याचारक्रमम् ॥ ३ ॥ राघवंरघुगोत्रापत्यंरघुनंदनंरघुकुलस्यानंदजनकं त्वयानुज्ञातंतवानुज्ञां एभिर्मुनिभिःसहेच्छामि
॥४॥ ५ ॥ ६ ॥ पुरीमयोध्याम् ॥ ७ ॥ ८ ॥ ९ ॥ अस्यपुरीनिवेशितासर्वप्रजानिवेशनेनप्रतिष्ठापिता ॥ १० ॥ ११ ॥ १२ ॥ क्षत्रियचेष्टितंक्षत्रियाचारः ॥१३ ॥ हियस्मान्नःक्षत्रियाणांप्र

तस्यांरजन्यांव्युष्टायांकृत्वापौर्वाह्लिकक्रमम् ॥ उवाचप्रांजलिर्वाक्यंशत्रुघ्नोमुनिपुंगवम् ॥ ३॥ भगवन्द्रष्टुमिच्छामिराघवंरघुनंदनम् ॥ त्वयानुज्ञा
तमिच्छामिसहैभिःसंशितव्रतैः ॥४॥ इत्येवंवादिनंतंतुशत्रुघ्नंशत्रुसूदनम् ॥ वाल्मीकिःसंपरिष्वज्यविससर्जसराघवम् ॥ ५॥ सोभिवाद्यमुनिश्रेष्ठंर
थमारुह्यसुप्रभम् ॥ अयोध्यामगमत्तूर्णंराघवोत्सुकदर्शनः ॥ ६ ॥ सप्रविष्टःपुरींरम्यांश्रीमानिक्ष्वाकुनंदनः ॥ प्रविवेशमहाबाहुर्यत्ररामोमहाद्यु
तिः ॥ ७ ॥ सरामंमंत्रिमध्यस्थंपूर्णचंद्रनिभाननम् ॥ पश्यन्नमरमध्यस्थंसहस्रनयनंयथा ॥ ८ ॥ सोभिवाद्यमहात्मानंज्वलंतमिवतेजसा ॥ उवाच
प्रांजलिर्भूत्वारामंसत्यपराक्रमम् ॥ ९ ॥ यदाज्ञप्तंमहाराजसर्वंतत्कृतवानहम् ॥ हतःसलवणःपापःपुरीचास्यनिवेशिता ॥ १० ॥ द्वादशैतानिवर्षा
णित्वांविनारघुनंदन ॥ नोत्सहेयमहंवस्तुंत्वयाविरहितोनृप ॥ ११ ॥ समेप्रसादंकाकुत्स्थकुरुष्वामितविक्रम ॥ मातृहीनोयथावत्सोनचिरंप्रवसा
म्यहम् ॥ १२ ॥ एवंब्रुवाणंकाकुत्स्थःपरिष्वज्येदमब्रवीत् ॥ माविषादंकृथाःशूरनैतत्क्षत्रियचेष्टितम् ॥ १३ ॥ नावसीदंतिराजानोविप्रवासेषुराघ
व ॥ प्रजाहिपरिपाल्याहिक्षत्रधर्मेणराघव ॥ १४ ॥ कालेकालेतुमांवीरअयोध्यामवलोकितुम् ॥ आगच्छत्वंनरश्रेष्ठगंतासिचपुरंतव ॥ १५ ॥ म
मापित्वंसुदयितःप्राणैरपिनसंशयः ॥ अवश्यंकरणीयंचराज्यस्यपरिपालनम् ॥ १६ ॥ तस्मात्त्वंवसकाकुत्स्थसप्तरात्रंमयासह ॥ ऊर्ध्वंगंतासि
मधुरांसभृत्यबलवाहनः ॥ १७ ॥ रामस्यैतद्वचःश्रुत्वाधर्मयुक्तंमनोनुगम् ॥ शत्रुघ्नोदीनयावाचाबाढमित्येवचाब्रवीत् ॥ १८ ॥ सप्तरात्रंचकाकु
त्स्थोराघवस्ययथाज्ञया ॥ उष्यतत्रमहेष्वासोगमनायोपचक्रमे ॥ १९ ॥ आमंत्र्यतुमहात्मानंरामंसत्यपराक्रमम् ॥ भरतंलक्ष्मणंचैवमहारथ
मुपारुहत् ॥ २० ॥

जाःसर्वथापरिपाल्याइतिहिप्रसिद्धम् ॥ १४ ॥ मामवलोकितुमयोध्यामागच्छ तवपुरंस्वपुरंगंतासि गच्छेत्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ १८॥ यथाज्ञयायथावत्कृतयाआज्ञया ॥१९॥२०॥

॥ २१ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेद्विसप्ततितमःसर्गः ॥ ७२ ॥ ॥ ७ ॥ ॥ अथमृतबालकब्राह्मणत्वराजद्वारिविलापः प्रस्थाप्येति भ्रातृभ्यांलक्ष्मणभरताभ्याम् ॥ १ ॥ कतिपयाहस्सु गतेष्विविशेषः ॥ २ ॥ स्नेहेनपुत्रस्नेहेनतन्मरणदुःखेनचसमन्वितः ॥ ३ ॥ यद्यस्मान्निधनंगतंत्वांपश्यामिअतोमेमयाकिंदुष्कृतंकृतम् ॥४ ॥ किंच हेपुत्रकाप्राप्तयौवनंममदुःखायअकालेकालमापन्नंपश्यामीत्यनुषंगः पंचवर्षसहस्रकं वर्षशब्दोत्रदिनपरः सहस्रसंवत्सरंसत्रमुपासीतेतिवत् तेनषोडशवर्षमित्यर्थइत्येके तेन

दूरंपश्चामनुगतोलक्ष्मणेनमहात्मना॥ भरतेनचशत्रुघ्नोजगामाशुपुरींतदा॥२१॥ ॥इत्यार्षेश्रीम०वा०आ०उत्तरकांडेद्विसप्ततितमःसर्गः॥७२॥ प्रस्थाप्यतुसशत्रुघ्नंभ्रातृभ्यांसहराघवः॥ प्रमुमोदसुखीराज्यंधर्मेणपरिपालयन्॥ १ ॥ ततःकतिपयाहस्सुवृद्धोजानपदोद्विजः॥ मृतंबालमुपादायराजद्वारमुपागमत् ॥ २॥ किन्नुमेदुष्कृतंकर्मपुरादेहांतरेकृतम् ॥ रुदन्बहुविधावाचःस्नेहदुःखसमन्वितः ॥ असकृत्पुत्रपुत्रेतिवाक्यमेतदुवाचह॥ ३ ॥ किन्नुमेदुष्कृतंकर्मपुरादेहांतरेकृतम्॥ यदहंपुत्रमेकंतुपश्यामिनिधनंगतम् ॥ ४ ॥ अप्राप्तयौवनंबालंपंचवर्षसहस्रकम्॥ अकालेकालमापन्नंममदुःखायपुत्रक॥५॥ अल्पैरहोभिर्निधनंगमिष्यामिनसंशयः॥ अहंचजननीचैवतवशोकेनपुत्रक ॥ ६ ॥ नस्मराम्यनृतंह्युक्तंनचहिंसांस्मराम्यहम्॥ सर्वेषांप्राणिनांपापंनस्मरामिकदाचन॥ ७ ॥ केनाद्यदुष्कृतेनायंबालएवममात्मजः॥ अकृत्वापितृकार्याणिगतोवैवस्वतक्षयम्॥ ८॥ नेदृशंदृष्टपूर्वंमेश्रुतंवाघोरदर्शनम्॥ मृत्युरप्राप्तकालानांरामस्यविषयेह्ययम्॥९॥ रामस्यदुष्कृतंकिंचिन्महदस्तिनसंशयः॥ यथाहिविषयस्थानांबालानांमृत्युरागतः॥ १० ॥ नह्यन्यविषयस्थानांबालानांमृत्युतोभयम्॥ सराजन्जीवयस्वैनंबालंमृत्युवशंगतम्॥ ११ ॥

किंचिन्न्यूनचतुर्दशवर्षमित्यर्थइत्यन्ये ॥ ५ ॥ तवशोकेनाहंतवजननीचनिधनंगमिष्यामि ॥ ६ ॥ अस्यमरणेमत्कृतंकिंचिन्नकारणमित्याह नेति सर्वेषांप्राणिनांतद्विषयमनृतंहिंसातिरिक्तमपिपापंमनोवाक्कायैरनिष्टाचरणंस्वकृतंनस्मरामि अकृतत्वादेव सर्वेषांप्राणिनांप्राणंनकदाचनविद्यतेइतिपाठेसर्वेषांप्राणिनांप्राणमुद्दिश्यमयाकृतांहिंसांनस्मरामि अतोममकदाचनजन्मांतरेपिपापंनविद्यते जन्मांतरेतत्करणेसंस्कारेणैतज्जन्मन्यपितत्रप्रवृत्तिःस्यादितिभावः ॥ ७ ॥ पितृकार्याणिश्राद्धादीनि ॥ ८ ॥ रामस्यविषयेदेशे ॥ ९ ॥ तस्माद्राजदोषादेवेदंबालमरणमित्याह रामस्येति ॥ १० ॥ सराजन्नित्याभिमुख्येनवादः ॥ ११ ॥

सुखीभवेतिव्यंग्योक्तिः ॥ १२ ॥ उषिताःस्म एतावत्कालमितिशेषः ॥ १३ ॥ इदंबालकमरणदुःखं हियतइदानींवयंकालस्यवशमापन्नाः हितस्मात्तवराज्येनोस्माकंस्वल्पमपिसुखंनहि ॥ १४ ॥ इदानीमिक्ष्वाकूणामयंविषयोदेशोरामंबालानामंतंकरोतितादृशंनाथमासाद्यप्राप्यानाथोजातोरक्षकमुराजरहितोजातः ॥ १५ ॥ कथमेवंवादस्तत्राह राजदोषैरिति असद्वृत्तेधर्मेणप्रजापालनहीने ॥ १६ ॥ अयुक्तानिअनुचितकृत्यानि नचरक्षास्तिअनुचितकृत्यनिवारणंचयदानास्तितदैवकालकृतंअकालमृत्युकृतंभयं नान्यथेत्यर्थः ॥ १७ ॥ तस्मान्मत्पुत्रमरणंरा

राजद्वारिमरिष्यामिपत्न्यासार्धमनाथवत् ॥ ब्रह्महत्यांततोरामसमुपेत्यसुखीभव ॥ १२ ॥ भ्रातृभिःसहितोराजन्दीर्घमायुरवाप्स्यसि ॥ उषिताःस्मसुखंराज्येतवास्मिन्सुमहाबल ॥ १३ ॥ इदंतुपतितंतस्मात्तवरामवशेस्थितान् ॥ कालस्यवशमापन्नाःस्वल्पंहिनहिनःसुखम् ॥ १४ ॥ संप्रत्यनाथोविषयइक्ष्वाकूणांमहात्मनाम् ॥ रामंनाथमिहासाद्यबालांतकरणंध्रुवम् ॥ १५ ॥ राजदोषैर्विपद्यंतेप्रजाह्यविधिपालिताः ॥ असद्वृत्तेहिनृपतावकालेम्रियतेजनः ॥ १६ ॥ यद्वापुरेष्वयुक्तानिजनाजनपदेषुच ॥ कुर्वतेनचरक्षास्तितदाकालकृतंभयम् ॥ १७ ॥ सुव्यक्तंराजदोषोहिभविष्यतिनसंशयः ॥ पुरेजनपदेचापितथाबालवधोह्ययम् ॥ १८ ॥ एवंबहुविधैर्वाक्यैरुपरुध्यमुहुर्मुहुः ॥ राजानंदुःखसंतप्तःसुतंतमुपगूहति ॥ १९ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेत्रिसप्ततितमःसर्गः ॥ ७३ ॥ ॥ ७४ ॥ ॥ तथातुकरुणंतस्यद्विजस्यपरिदेवनम् ॥ शुश्रावराघवःसर्वंदुःखशोकसमन्वितम् ॥ १ ॥ सदुःखेनचसंतप्तोमंत्रिणस्तानुपाह्वयत् ॥ वसिष्ठंवामदेवंचभ्रातॄंश्चसहनैगमान् ॥ २ ॥ ततोद्विजावसिष्ठेनसार्धमष्टौप्रवेशिताः ॥ राजानंदेवसंकाशंवर्धस्वेतिततोऽब्रुवन् ॥ ३ ॥ मार्कंडेयोथमौद्गल्योवामदेवश्चकाश्यपः ॥ कात्यायनोथजाबालिर्गौतमोनारदस्तथा ॥ ४ ॥ एतेद्विजर्षभाःसर्वेआसनेषूपवेशिताः ॥ महर्षीन्समनुप्राप्तानभिवाद्यकृतांजलिः ॥ ५ ॥

जदोषहेतुकमेवेत्याह सुव्यक्तमिति पुरेजनपदेवानुचितकृत्यप्रवृत्तदंडाभावरूपोराजदोषोजातोभविष्यतितथातस्मादेवायंबालवधः तथाऽकालवधोह्ययमितिपाठांतरम् ॥ १८ ॥ राजानमुपरुध्येत्यन्वयः ॥ १९ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेत्रिसप्ततितमःसर्गः ॥ ७३ ॥ ॥ ७४ ॥ ॥ अथमहर्षीनाहूयतान्प्रतिबालमरणनिमित्तप्रश्नेतेभ्यस्तन्निमित्तज्ञानलाभः तथात्विति सर्वंपरिदेवनंदुःखमात्मनोवार्धकादिनिमित्तंशोकःपुत्रवियोगजस्ताभ्यांसमन्वितंशुश्राव ॥ १ ॥ नैगमाःपौरास्तत्सहितान् ॥ २ ॥ ॥ ३ ॥ ४ ॥ ५ ॥

अनुकूलिताः कृतशिष्टाचाराः अयंद्विजउपरोधतिउपरुणद्धि राजद्वारमितिशेषः सर्वेराजदोषमूलमेवबालमरणंवदतीत्यादिकंचसर्वमाचष्टे ॥ ६ ॥ ७ ॥ हेराजन्नयंबालस्यसंक्षयोयथायेनप्र
कारेणअकालेसंप्राप्तस्तच्छृणु ततस्तस्यप्रतिक्रियायाःकर्तव्यतामनुष्ठेयांशंश्रुत्वातत्कुरुष्व ॥ ८ ॥ तदेवक्कुंपीठिकामाह पुरेति तपस्विनःअनशनप्रभृत्यनेककायक्लेशलक्षणतपोयुक्ताब्राह्मणाए
वकृतयुगेऽभवन् ॥ ९ ॥ अब्राह्मणस्तद्व्यतिरिक्तःकथमपितपस्वीन कृतेइतिशेषः किंतुनित्यनैमित्तिककर्ममात्रपरएव तस्मिन्युगेप्रज्वलितेतपसादीप्ते ब्रह्मभूतेब्राह्मणवर्णप्रधाने अनावृतेअज्ञा
नावरणरहितजनेयुगेकृतयुगे ॥ १० ॥ सर्वेएवतदाऽमृत्यवोजज्ञिरे मरणदुःखहेत्वधर्मलेशस्याप्यभावात् अनावृतज्ञानत्वाच्चदीर्घदर्शिनःअतीतानागतादिसकलज्ञानवंतः ततःकृतयुगसमाप्त्यनं
तरंवपुष्मतांशिथिलत्वात्मबुद्धितयाकिंचिद्देहात्मबुद्धिमतांमानवानांत्रेतायुगंनामभवति ॥ ११ ॥ यत्रत्रेतायुगेपूर्वेणपूर्वयुगेपूर्ववर्णब्राह्मणानुष्ठितेनतपसान्विताःक्षत्रियाजायंतेतादृशंत्रेतायु

मंत्रिणोनैगमाश्चैवयथार्हमनुकूलिताः ॥ तेषांसमुपविष्टानांसर्वेषांदीप्ततेजसाम् ॥ ६ ॥ राघवःसर्वमाचष्टेद्विजोयमुपरोधति ॥ तस्यतद्वचनंश्रुत्वा
राज्ञोदीनस्यनारदः ॥ ७ ॥ प्रत्युवाचशुभंवाक्यमृषीणांसन्निधौस्वयम् ॥ शृणुराजन्यथाऽकालेप्राप्तोबालस्यसंक्षयः ॥ ८ ॥ श्रुत्वाकर्तव्यतांराज
न्कुरुष्वरघुनंदन ॥ पुराकृतयुगेराजन्ब्राह्मणावैतपस्विनः ॥ ९ ॥ अब्राह्मणस्तदाराजन्नतपस्वीकथंचन ॥ तस्मिन्युगेप्रज्वलितेब्रह्मभूतेत्वनावृते
॥ १० ॥ अमृत्यवस्तदासर्वेजज्ञिरेदीर्घदर्शिनः ॥ ततस्त्रेतायुगंनाममानवानांवपुष्मताम् ॥ ११ ॥ क्षत्रियायत्रजायंतेपूर्वेणतपसान्विताः ॥ वीर्येण
तपसाचैवतेधिकाःपूर्वजन्मनि ॥ मानवायेमहात्मानस्तत्रत्रेतायुगेयुगे ॥ १२ ॥ ब्रह्मक्षत्रंचतत्सर्वंयत्पूर्वमवरंचयत् ॥ युगयोरुभयोरासीत्समवी
र्यसमन्वितम् ॥ १३ ॥

गंनामाभूदितिसंबंधः कृतयुगेब्राह्मणमात्रनिष्ठंतपस्त्रेतायांक्षत्रियसाधारणमभूदितिभावः त्रयीविहितत्रेताग्निसाध्यकर्मसुप्रवृत्त्यायुगस्यत्रेतासंज्ञेतिपुराणविदः किंचतत्रत्रेतायुगेत्रेतायुगाख्येयुगे
महात्मानस्तपोयुक्तायेमानवाब्राह्मणाःक्षत्रियावासंतितदपेक्षयापूर्वस्मिन्जन्मनिपूर्वजातेकृतयुगेतपोभाजोयेमानवास्तेवीर्येणप्रभावेणतपसातपोतिशयेनाधिकाउत्कृष्टाः ॥ १२ ॥ अथत्रेता
कालिकक्षत्रियाणांकृतकालिकब्राह्मणेभ्योन्यूनतात्रेताकालिकब्राह्मणैस्तुसमतेत्याह ब्रह्मक्षत्रमिति उभयोर्युगयोर्मध्येकृतयुगेब्रह्मपूर्वंतपोवीर्याभ्यामुत्कृष्टंक्षत्रंचावरंचताभ्यांतपोवीर्याभ्यां
न्यूनमासीत्तत्सर्वंब्रह्मक्षत्ररूपमुभयंत्रेतायांसमवीर्यसमन्वितमासीत् कृतेक्षत्रियाणांतपस्यनधिकारात्तद्युगीयेभ्योब्राह्मणेभ्यस्तेषांन्यूनता त्रेतायांतूभयोरपितपोधिकाराद्उभावपितपोवीर्याभ्यां
समावितिभावः अर्थात्कृतयुगब्राह्मणेभ्यस्त्रेतायुगब्राह्मणानामपिन्यूनत्वमुक्तम् ॥ १३ ॥

शत्रुघ्नधारितः तेनधृतइत्यर्थः ॥ २४ ॥ एषोपूर्वस्येति पूर्वस्यलोककर्तुर्देवस्यएषशरः आर्षःसंधिः ॥ २५ ॥ २६ ॥ तेनभगवतेत्यर्थः तमेवंतेजोमयंशरंएकोविष्णुरेवप्रजानाति तद्दपरमूर्तित्वात्
॥ २७॥ तदेवाह एषाएवेति असंधिरार्षः महात्मनस्तस्यविष्णोरेषाशरमयीतनुरेवपूर्वाप्राचीनामूर्तिः वध्यमानंलवणमित्यन्वयः ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५॥

उवामचधुरांवाणींश्टणुध्वंसर्वदेवताः॥ वधायलवणस्याजौशरःशत्रुघ्नधारितः॥ २४ ॥ तेजसातस्यसंमूढाःसर्वेस्मःसुरसत्तमाः॥ एषोपूर्वस्यदेव
स्यलोककर्तुःसनातनः॥ २५॥ शरस्तेजोमयोवत्सायेनवैभयमागतम्॥ एषवैकैटभस्यार्थेमधुनश्चमहाशरः॥ २६॥ स्रष्टोमहात्मनातेनवधार्थंदैत्ययो
स्तयोः॥ एकएवप्रजानातिविष्णुस्तेजोमयंशरम्॥ २७॥ एषाएवतनुःपूर्वाविष्णोस्तस्यमहात्मनः॥ इतोगच्छतपश्यध्वंवध्यमानंमहात्मना॥ २८॥
रामानुजेनवीरेणलवणंराक्षसोत्तमम्॥ तस्यतेदेवदेवस्यनिशम्यवचनंसुराः॥ २९॥ आजग्मुर्यत्रयुध्येतेशत्रुघ्नलवणावुभौ॥ तंशरंदिव्यसंका
शंशत्रुघ्नकरधारितम्॥ ३०॥ ददृशुःसर्वभूतानियुगांताग्निमिवोत्थितम्॥ आकाशमावृतंदृष्ट्वादेवैर्हिरघुनंदनः॥ ३१॥ सिंहनादंभृशंकृत्वाददर्शल
वणंपुनः॥ आहूतश्चपुनस्तेनशत्रुघ्नेनमहात्मना॥ ३२॥ लवणःक्रोधसंयुक्तोयुद्धायसमुपस्थितः॥ आकर्णात्सविकृष्याथतद्धनुर्धन्विनांवरः॥ ३३॥
समुमोचमहाबाणंलवणस्यमहोरसि॥ उरस्तस्यविदार्याशुप्रविवेशरसातलम्॥ ३४॥ गत्वारसातलंदिव्यःशरोविबुधपूजितः॥ पुनरेवागमत्तूर्ण
मिक्ष्वाकुकुलनंदनम्॥ ३५॥ शत्रुघ्नशरनिर्भिन्नोलवणःसनिशाचरः॥ पपातसहसाभूमौवज्राहतइवाचलः॥ ३६॥ तच्चशूलंमहद्दिव्यंहतेलवण
राक्षसे॥ पश्यतांसर्वदेवानांरुद्रस्यवशमन्वगात्॥ ३७॥ एकेषुपातेनभयंनिपात्यलोकत्रयस्यास्यरघुप्रवीरः॥ विनिर्बभावुत्तमचापबाणस्तमःप्र
णुद्येवसहस्ररश्मिः॥ ३८॥ ततोहिदेवाऋषिपन्नगाश्चप्रपूजिरेत्वप्सरसश्चसर्वाः॥ दिष्ट्याजयोदाशरथेरवाप्तस्त्यक्त्वाभयंसर्पइवप्रशांतः॥ ३९॥
इत्यार्षेश्रीम० वा० आ० उ० एकोनसप्ततितमःसर्गः॥ ६९॥ ॥ ७॥ ॥ हतेतुलवणेदेवाःसेंद्राःसाग्निपुरोगमाः॥ ऊचुःसुमधुरांवाणींशत्रुघ्नंशत्रु
तापनम्॥ १॥ दिष्ट्यातेविजयोवत्सदिष्ट्यालवणराक्षसः॥ हतःपुरुषशार्दूलवरंवरयसुव्रत॥ २॥

॥ ३६ ॥ ३७ ॥ ३८ ॥ भयंत्यक्त्वाजयोवाप्तः सर्पइवसर्पसदृशोलवणश्चप्रशांतः ॥ ३९ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेएकोनसप्तति
तमःसर्गः ॥ ६९ ॥ ॥ ७ ॥ ॥ अथदेवप्रसादतोमहतीप्रतिष्ठाशत्रुघ्नस्य हतेइति ॥ १ ॥ २ ॥

तुभ्यंतत ॥ ३ ॥ ४ ॥ मधुरामनोहरा निवेशंसपौरजानपदमहाबलसेनानिवेशभूतमहाराजधानीत्वंप्राप्नुयात् ॥ ५ ॥ शूरसेनाशूरासेनायस्यांसा ॥ ६ ॥ तांसेनांगंगातीरेस्थापितम् ॥ ७ ॥ श्रावणेनश्रावणमासावलंबनेन निवेशनंस्थापनंसेनायाः पौरजानपदानांचसमारभदारभतेस्म ॥ ८ ॥ द्वादशमेद्वादशे पुरापूर्वंप्राथमिकेद्वादशेवर्षेनिविष्टः शूरसेनानांविषयोदेशः सापुरीतिपा

वरदास्तुमहाबाहोसर्वएवसमागताः ॥ विजयाकांक्षिणस्तुभ्यममोघंदर्शनंहिनः ॥ ३ ॥ देवानांभाषितंश्रुत्वाशूरोमूर्ध्निकृतांजलिः ॥ प्रत्युवाचमहाबाहुःशत्रुघ्नःप्रयतात्मवान् ॥ ४ ॥ इयंमधुपुरीरम्यामधुरादेवनिर्मिता ॥ निवेशंप्राप्नुयाच्छीघ्रमेषमेस्तुवरःपरः ॥ ५ ॥ तंदेवाःप्रीतमनसोबाढमित्येवराघवम् ॥ भविष्यतिपुरीरम्याशूरसेनानसंशयः ॥ ६ ॥ तेतथोक्त्वामहात्मानोदिवमारुरुहुस्तदा ॥ शत्रुघ्नोपिमहातेजास्तांसेनांसमुपानयत् ॥ ७ ॥ सासेनाशीघ्रमागच्छच्छ्रुत्वाशत्रुघ्नशासनम् ॥ निवेशनंचशत्रुघ्नःश्रावणेनसमारभत् ॥ ८ ॥ सपुरादिव्यसंकाशोवर्षेद्वादशमेशुभे ॥ निविष्टःशूरसेनानांविषयश्चाकुतोभयः ॥ ९ ॥ क्षेत्राणिसस्ययुक्तानिकालेवर्षतिवासवः ॥ अरोगवीरपुरुषाशत्रुघ्नभुजपालिता ॥ १० ॥ अर्धचंद्रप्रतीकाशायमुनातीरशोभिता ॥ शोभितागृहमुख्यैश्चचत्वरापणवीथिकैः ॥ चातुर्वर्ण्यसमायुक्तानानावाणिज्यशोभिता ॥ ११ ॥ यच्चतेनपुराशुभ्रंलवणेनकृतंमहत् ॥ तच्छोभयतिशत्रुघ्नोनानावर्णोपशोभितम् ॥ १२ ॥ आरामैश्चविहारैश्चशोभमानंसमंततः ॥ शोभितांशोभनीयैश्चतथान्यैर्दैवमानुषैः ॥ १३ ॥ तांपुरींदिव्यसंकाशांनानापण्योपशोभिताम् ॥ नानादेशगतैश्चापिवणिग्भिरुपशोभिताम् ॥ १४ ॥ तांसमृद्धांसमृद्धार्थःशत्रुघ्नोभरतानुजः ॥ निरीक्ष्यपरमप्रीतःपरंहर्षमुपागमत् ॥ १५ ॥ तस्यबुद्धिःसमुत्पन्नानिवेश्यमधुरांपुरीम् ॥ रामपादौनिरीक्षेऽहंवर्षेद्वादशआगते ॥ १६ ॥ ततःसताममरपुरोपमांपुरींनिवेश्यवैविविधजनाभिसंवृताम् ॥ नराधिपोरघुपतिपाददर्शनेदधेमतिंरघुकुलवंशवर्धनः ॥ १७ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेसप्ततितमःसर्गः ॥ ७० ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

ऽसापुरीनिविष्टाविषयोदेशश्चनिविष्टइत्यर्थः ॥ ९ ॥ १० ॥ अर्धचंद्रप्रतीकाशेतिपुरीसंस्थानकथनं वीथिकस्यास्त्रीत्वमार्षम् ॥ ११ ॥ तेनलवणेनयद्गृहंपुरापूर्वंकृतंतद्देवशुभ्रंसुधाधवलंकृत्वा नानावर्णैश्चित्रैरुपशोभितंयथाभवतितथाशोभयतिस्मेत्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेसप्ततितमःसर्गः ॥ ७० ॥ ॥ ७ ॥ ॥

अथशत्रुघ्नस्यागमनसमयेवाल्मीक्याश्रमेरामचरितश्रवणं ततोद्वादशमेइति अल्पभृत्याबलानिचानुगाअनुयायिनोयस्यसः ॥ १ ॥ बलमुख्यान्बलप्रधानान् ॥ २ ॥ गणितान्वासान् पूर्वमेवैतावद्भिर्वासैर्वाल्मीक्याश्रमंयास्यामीतिसंख्यातान्वाल्मीकेरयंवाल्मीकःसचासावाश्रमस्तम् ॥ ३ ॥ ४ ॥ ५ ॥ लवणस्यवधाश्रितं कथालापमितिशेषः नकृतंतवपूर्वकैरितिपाठेतवपूर्वकैर्मांधात्रादिभिर्यन्नकृतंतत्त्वयाकृतमित्यर्थः ॥ ६ ॥ ७ ॥ तत्रतन्निमित्तम् ॥ ८ ॥ सुमहत्कर्मरावणवधादपिमहद्दुष्करमिदंकर्मलवणवधकर्मत्वयाऽयत्नतोलीलयैवकृतम् ॥ ९ ॥ १० ॥ वासवस

ततोद्वादशमेवर्षेशत्रुघ्नोरामपालिताम् ॥ अयोध्यांचक्रमेगंतुमल्पभृत्यबलानुगः ॥ १ ॥ ततोमंत्रिपुरोगांश्चबलमुख्यान्निवर्त्यच ॥ जगामहयमुख्येनयानानांचशतेनसः ॥ २ ॥ सगत्वागणितान्वासान्सप्ताष्टौरघुनंदनः ॥ वाल्मीकाश्रममागत्यवासंचक्रेमहायशाः ॥ ३ ॥ सोभिवाद्यततःपादौवाल्मीकेःपुरुषर्षभः ॥ पाद्यमर्घ्यंतथातिथ्यंजग्राहमुनिहस्ततः ॥ ४ ॥ बहुरूपाःसुमधुराःकथास्तत्रसहस्रशः ॥ कथयामाससमुनिःशत्रुघ्नायमहात्मने ॥ ५ ॥ उवाचचमुनिर्वाक्यंलवणस्यवधाश्रितम् ॥ सुदुष्करंकृतंकर्मलवणंनिघ्नतात्वया ॥ ६ ॥ बहवःपार्थिवाःसौम्यहताःसबलवाहनाः ॥ लवणेनमहाबाहोयुध्यमानामहाबलाः ॥ ७ ॥ सत्वयानिहतःपापोलीलयापुरुषर्षभ ॥ जगतश्चभयंतत्रप्रशांतंतवतेजसा ॥ ८ ॥ रावणस्यवधोघोरोयत्नेनमहताकृतः ॥ इदंचसुमहत्कर्मत्वयाकृतमयत्नतः ॥ ९ ॥ प्रीतिश्चास्मिन्पराजातादेवानांलवणेहते ॥ भूतानांचैवसर्वेषांजगतश्चप्रियंकृतम् ॥ १० ॥ तच्चयुद्धंमयादृष्टंयथावत्पुरुषर्षभ ॥ सभायांवासवस्याथउपविष्टेनराघव ॥ ११ ॥ ममापिपरमाप्रीतिर्हृदिशत्रुघ्नवर्तते ॥ उपाघ्रास्यामितेमूर्ध्निस्नेहस्यैषापरागतिः ॥ १२ ॥ इत्युक्त्वामूर्ध्निशत्रुघ्नमुपाघ्रायमहामतिः ॥ आतिथ्यमकरोत्तस्ययेचतस्यपदानुगाः ॥ १३ ॥ सभुक्तवान्नरश्रेष्ठोगीतमाधुर्यमुत्तमम् ॥ शुश्रावरामचरितंतस्मिन्कालेयथाकृतम् ॥ १४ ॥ तंत्रीलयसमायुक्तंत्रिस्थानकरणान्वितम् ॥ संस्कृतंलक्षणोपेतंसमतालसमन्वितम् ॥ १५ ॥

भायांउपविष्टेनापिमयातद्युद्धंयथावद्दृष्टंदिव्यचक्षुषेतिशेषः दृष्टमित्यस्यश्रुतमित्यर्थोवा ॥ ११ ॥ मूर्ध्न्याघ्राणंपरागतिःपरंकार्यंस्नेहस्य ॥ १२ ॥ १३ ॥ गीतस्यमाधुर्यंयत्रतादृशंरामचरितंतस्मिन्कालेपूर्वकालेयथारामेणकृतंतादृशमेवकाव्यनिबद्धंशुश्राव क्वचिदाश्रमप्रदेशेगायतोःकुशलवयोर्मुखादितिशेषः ॥ १४ ॥ तंत्रीलयसमायुक्तं तंत्र्याःवीणातंत्र्युत्थध्वनेर्लयस्यतालपरिच्छेदस्यसमनुरुद्धं त्रीणिस्थानानिउरःकंठशिरांसितेषुकरणंमंद्रमध्यतारभेदेनोच्चारणंतेनान्वितं संस्कृतंसंस्कृतवाक्यबद्धं लक्षणोपेतंव्याकरणलक्षणैर्वृत्तलक्षणैःकाव्यलक्षणैःसंगीतशास्त्रलक्षणैश्चोपेतं समतालेनगानोचिततालशब्देनसमन्वितम् ॥ १५ ॥

रामचरितंरामचरितगीतं तस्मिन्कालेपुरापूर्वरामेणयथाकृतंस्वानुभूतंचतथैवशुश्राव तदेवपुनराह तानीति अक्षराणिअक्षरघटितवाक्यानि सत्यानिसत्यार्थानिपूर्वशः पूर्वकालेयथावृत्तानियथा वृत्तार्थकानि यद्वा यथावृत्तानिरवृत्तलक्षणमनतिक्रम्यनिबद्धानि पूर्वशआनुपूर्व्येण ॥ १६ ॥ श्रुत्वापुरुषशार्दूलःशत्रुघ्नोविसंज्ञोहर्षाद्विवेकशून्योभूदितिशेषः समुहूर्तमसंज्ञइवस्थितःपश्चाल्लब्ध विवेकोविस्मयातिरेकान्मुहुर्मुहुर्निःश्वस्य ॥ १७ ॥ तस्मिन्गीतेयथावृत्तंअतीतमपिवर्तमानमिवाश्रृणोत् रसावेशादतीताअप्यर्थाःप्रत्यक्षवद्भांतीतिभावः येचराज्ञोमधुराजस्यशत्रुघ्नस्यपदानु गास्तेपिगीतिसंपदंश्रुत्वा ॥ १८ ॥ एवंरामचरितगायकोस्माभिर्नदृश्यतइतिखेदादवाङ्मुखत्वादिविशिष्टाःसंतआश्चर्यमित्यब्रुवन् यद्वा येनुगीतिकुशलास्तेस्वस्यतादृशगीतिनैपुण्याभावादवा

शुश्रावरामचरितंतस्मिन्कालेपुराकृतम् ॥ तान्यक्षराणिसत्यानियथावृत्तानिपूर्वशः ॥ १६ ॥ श्रुत्वापुरुषशार्दूलोविसंज्ञोबाष्पलोचनः ॥ समुहूर्तमिवासंज्ञोविनिःश्वस्यमुहुर्मुहुः ॥ १७ ॥ तस्मिन्गीतेयथावृत्तंवर्तमानमिवाश्रृणोत् ॥ पदानुगाश्चयेराज्ञस्तांश्रुत्वागीतिसंपदम् ॥ १८ ॥ अवाङ्मुखाश्चदीनाश्चत्याश्चर्यमितिचाब्रुवन् ॥ परस्परंचयेतत्रसैनिकाःसंबभाषिरे ॥ १९ ॥ किमिदंक्वचवर्तामःकिमेतत्स्वप्नदर्शनम् ॥ अर्थोयोनःपुरादृष्टस्तमाश्रमपदेपुनः ॥ २० ॥ श्रृणुमःकिमिदंस्वप्नेगीतबंधनमुत्तमम् ॥ विस्मयंतेपरंगत्वाशत्रुघ्नमिदमब्रुवन् ॥ २१ ॥ साधुपृच्छनरश्रेष्ठवाल्मीकिंमुनिपुंगवम् ॥ शत्रुघ्नस्त्वब्रवीत्सर्वान्कौतूहलसमन्वितान् ॥ २२ ॥ सैनिकानक्षमोस्माकंपरिप्रष्टुमिहेदृशः ॥ आश्चर्याणिबहूनीहभवंत्यस्याश्रमेमुनेः ॥ २३ ॥ नतुकौतूहलाद्युक्तमन्वेष्टुंतंमहामुनिम् ॥ एवंतद्वाक्यमुक्त्वातुसैनिकान्रघुनंदनः ॥ अभिवाद्यमहर्षिंतंस्वंनिवेशंययौतदा ॥ २४ ॥ ॥ इत्यार्षेश्रीम० वा० आ० उ० एकसप्ततितमःसर्गः ॥ ७१ ॥ ॥ ७ ॥ ॥ तंशयानंनरव्याघ्रंनिद्रानाभ्यागमत्तदा ॥ चिंतयानमनेकार्थंरामगीतमनुत्तमम् ॥ १ ॥ तस्यशब्दंसुमधुरंतंत्रीलयसमन्वितम् ॥ श्रुत्वारात्रिर्जगामाशुशत्रुघ्नस्यमहात्मनः ॥ २ ॥

ङ्मुखाइत्यर्थः येचसैनिकास्तेपरस्परंसंबभाषिरे ॥ १९ ॥ तदेवाह किमिति क्ववर्तामः आश्रमेअन्यत्रवायोर्थोनोस्माकंअस्माभिःपुरादृष्टस्तमर्थमाश्रमपदेश्रृणुमः किमिदम् आश्रमवर्तिभिरननु भवेनाशक्यनिबंधनत्वादितिभावः ॥ २० ॥ यदेवमतःस्वप्नेऽस्मदीयेएवगीतबंधमाश्रितोभवेत्तत्रदुर्घटस्यापिसुघटत्वादितिसंबभाषिरेइतिसंबंधः ॥ २१ ॥ साधुपृच्छेति किंकर्तृकंगानमितितिशेषः ॥ २२ ॥ ईदृशोऽर्थःपरिप्रष्टुंनक्षमः ॥ २३ ॥ अन्वेष्टुमवगंतुंप्रष्टुंच ॥ २४ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेएकसप्ततितमःसर्गः ॥ ७१ ॥ अथशत्रुघ्नस्यरामंदृष्ट्वापुनःप्रतिनिवृत्तिः तमिति ॥ १ ॥ तस्यरामगीतस्य ॥ २ ॥

अथराज्यामिति प्रवृत्तायांजातायां लवणबलंशूलबलं पूर्वंशूलेन विनाशिताश्वकेइतिपप्रच्छेतिसंबंधः ॥ १ ॥ २ ॥ ३ ॥ अस्यशूलस्यलवणस्यचासंख्येयानिकर्माणियानिसंतितेषुइक्ष्वाकुवं
शप्रभवेमांधातरियन्महत्कर्मास्यवृत्तंतच्छृणुष्व ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ शक्रस्यार्धासनेनार्धराज्येनचयुक्तःपार्थिवोराजाभूत्वासुरगणैर्वंद्यमानःस्थास्येइतिप्रतिज्ञांकृत्वादिवमध्यरोहत राजे

अथराज्यांप्रवृत्तायांशत्रुघ्नोभृगुनंदनम् ॥ पप्रच्छच्यवनंविप्रंलवणस्यंयथाबलम् ॥ १ ॥ शूलस्यचबलंब्रह्मन्केचपूर्वंविनाशिताः ॥ अनेनशूलमु
ख्येनद्वंद्वयुद्धमुपागताः ॥ २ ॥ तस्यतद्वचनंश्रुत्वाशत्रुघ्नस्यमहात्मनः ॥ प्रत्युवाचमहातेजाश्च्यवनोरघुनंदनम् ॥ ३ ॥ असंख्येयानिकर्माणियान्य
स्यरघुनंदन ॥ इक्ष्वाकुवंशप्रभवेयद्वृत्तंतच्छृणुष्वमे ॥ ४ ॥ अयोध्यायांपुराराजायुवनाश्वसुतोबली ॥ मांधाताइतिविख्यातस्त्रिषुलोकेषुवीर्यवान्
॥ ५ ॥ सकृत्वापृथिवींकृत्स्नांशासनेपृथिवीपतिः ॥ सुरलोकमितोजेतुमुद्योगमकरोन्नृपः ॥ ६ ॥ इंद्रस्यचभयंतीव्रंसुराणांचमहात्मनाम् ॥ मांधात
रिकृतोद्योगेदेवलोकजिगीषया ॥ ७ ॥ अर्धासनेनशक्रस्यराज्यार्धेनचपार्थिवः ॥ वंद्यमानःसुरगणैःप्रतिज्ञामध्यरोहत ॥ ८ ॥ तस्यपापमभिप्रायं
विदित्वापाकशासनः ॥ सांत्वपूर्वमिदंवाक्यमुवाचयुवनाश्वजम् ॥ ९ ॥ राजात्वंमानुषेलोकेनतावत्पुरुषर्षभ ॥ अकृत्वापृथिवींवश्यांदेवराज्यमि
हेच्छसि ॥ १० ॥ यदिवीरसमग्रातेमेदिनीनिखिलांवशे ॥ देवराज्यंकुरुष्वेहसभृत्यबलवाहनः ॥ ११ ॥ इंद्रमेवंब्रुवाणंतंमांधातावाक्यमब्रवीत् ॥ क्व
मेशक्रप्रतिहतंशासनंपृथिवीतले ॥ १२ ॥ तमुवाचसहस्राक्षोलवणोनामराक्षसः ॥ मधुपुत्रोमधुवनेनतेज्ञांकुरुतेनघ ॥ १३ ॥ तच्छ्रुत्वाविप्रियं
घोरंसहस्राक्षेणभाषितम् ॥ व्रीडितोऽवाङ्मुखोराजाव्याहर्तुंनशशाकह ॥ १४ ॥ आमंत्र्यतुसहस्राक्षंप्रायात्किंचिदवाङ्मुखः ॥ पुनरेवागमच्छ्री
मानिमंलोकंनरेश्वरः ॥ १५ ॥ सकृत्वाहृदयेऽमर्षंसभृत्यबलवाहनः ॥ आजगाममधोःपुत्रंवशेकर्तुमरिंदमः ॥ १६ ॥ सकांक्षमाणोलवणंयुद्धाय
पुरुषर्षभः ॥ दूतंसंप्रेषयामाससकाशंलवणस्यसः ॥ १७ ॥

त्यर्थः ॥ ८ ॥ ९ ॥ तावत्प्रथमंमानुषेएवलोकेसर्वात्मनाराजानासिसत्वंपृथिवीमेववश्यामकृत्वाकथमिहदेवराज्यमिच्छसि ॥ १० ॥ यदिसमग्रांमेदिनीतेतववशेभविष्यतितदादेवराज्यंकुरुष्व
॥ ११ ॥ १२ ॥ नतेज्ञां नतेआज्ञामित्यर्थः संधिरार्षः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥

र्थ्यात् पक्षे ङसादौ च गंगावत् दिक् समासे बहुव्रीहौ सर्वादेर्वा सर्वकार्य्यं गौणत्वादप्राप्ते विभाषेयम् दिशां समासो दिक् समासस्तस्मिन् बहुव्रीहौ सर्वादेः सर्वादिकार्य्यं वा वाच्यं दक्षिणस्याः पूर्वस्या अंतराले मध्ये या दिक् सा दक्षिणपूर्वा तस्यै उत्तरस्याः पूर्वस्या अंतराले या दिक् सा उत्तरपूर्वा तस्याः अन्यपदार्थोपि दिक् शब्दवाच्य एव ग्राह्यस्तेनेनेह यो त्तरा सा पूर्वा यस्या उन्मत्तायाः सा उत्तरपूर्वा तस्यै उत्तरपूर्वायै अंतरो ऽपुरि परिधाने र्बाहियोगे इत्युक्तत्वादंतरशब्दस्य बहिरर्थे सर्वकार्यं अंतरस्यै शालायै नगरबाह्यायै इत्यर्थः अंतरस्य न पुनर्यथा सर्वकार्यं अंतरायै नसुट् द्वितीया तृतीययोस्तृतीयस्य ङित्सु वा सर्ववदित्युक्तत्वात् ङे ङ सिङस् ङि षु वा सर्ववत् शेषं गंगावद्रूपम् पाददंतेति नासिकाशब्दस्य शसादौ नस् सस्य विसर्गे रुत्वे इत्युक्ते ओत्वे च नोभ्यां पृतना सेना छशषराजादेः षः छांतस्य शांतस्य षांतस्य राजादेश्च नाम्नः षः स्यात् रसे पदांते च छांतस्य शांतस्य षांतस्य राजादेश्च धातोः षः स्यात् झसे पदांते च छांतस्य नाम्नो यथा तत्व प्राड् २ भजां विणिति विण् प्रकृते अकृतव्यूह परिभाषया द्वित्वं न प्रवर्तेत ततो ऽसि

छशषराजादेः षः छकारान्तस्य शकारान्तस्य षकारान्तस्य राज् यज् सृज् मृज् भ्रस्ज् व्रश्च् भ्राजादेश्च षकारो भवति धातोर्झसे परे नाम्नश्च रसे पदांते च ॥ ॥

द्धपरिभाषया न वृद्धिः वृद्धेर्विण् निमित्तत्वेन षत्वं प्रति बहिरंगत्वात् धातोश्च यथा प्रष्टा अप्राट् शांतस्य नाम्नो यथा विट् विड्भ्यां धातोश्च यथा वेष्टा अवेवेट् षांतस्य नाम्नो यथा द्विट् द्विड्भ्याम् धातोश्च यथा द्वेष्टा अद्वेट् षस्य षविधानमादेशान्तरनिवृत्त्यर्थं ततः पुरस्तादपवादन्यायेन रवसे चपा एव बाध्यो न तु व्यवहितो झबे जबा इति च अयं च निषेधः स्यादौ नलस्यानुरोधात् तेन षड् सु इत्यादिसिद्धिः द्विड् द्वे त्र झबे जबाः अद्वेट् अद्वेड त्र वावसाने च स्यादेवव्यवहित विधित्वात् राजादयस्तु राजृ दीप्तौ यज देवपूजादौ सृज् विसर्गे मृजूष् शुद्धौ भ्रस्ज् पाके ओव्रश्चू छेदे भ्राजृ दीप्तौ आदि शब्दात् परिव्राज् शब्दो विण्णंतो ग्राह्यः दिशामिति सूत्रे स्रग्वृत्विजोः पाठस्तु षत्वबाधनार्थः असृ धातो रौणादिके ऋज् प्रत्यये नसिद्धो ऽ सृज् शब्दो न गृह्यते लाक्षणिकत्वात् ॥ ॥ छ छ छ
छ छ छ छ छ

षोडः षस्यनाम्नोविशेषणात्तदंतविधिः षांतस्य नाम्नोंतस्यडः स्यात् रसेपदांतेचषष्ठीति निर्देशात् थट्प्रत्ययेन षस्यडः षष्ठः ननुवावसानेझबेजबाः
रवसेचपाझसानामित्यंते ः सूत्रेष्टडयोर्लभिन्नास्त्विदं सूत्रंउच्यते षाष्मातुर इत्यादिसिद्ध्यर्थमिदमावश्यकं यथा षाष् मातुरइति स्थिते षोडइतिडत्वे
कृते त्वन्म देकत्वे इति निर्देशाज्जबस्यापि ञमो भवतीति अष्टनोडोवेति निर्देशाच्च द्वेष्टीत्यादावपि नडत्वं षस्य षलेडत्वं निड्भ्यां सुपिडस्य रवसेचपाइति
चपत्वे टनात्तस्यवेतिवाधुट् धस्यचपत्वं धुडभावेदस्यधुट्पक्षे तकारस्य शसे चपस्येत्यनेन ठथौनकुकुङुक्वर्जितस्येति निषेधात् स्यादीनांसस्येतिन
षुत्वं निड्सु निट्सु परिशिष्टकारादयः छशषराजादेरितिसूत्रेधातोश्चइतिसूत्रान्धातोरित्येवानुवर्तयंतिनतु नाम्नइति तन्मतेझबे जबा इत्यनेनशस्य

षोडः निड्भ्याम् निड्भिः निट्सु निट्सु निशासु केचित्तु धातोरेवषत्वमाहुः तन्मतेतु झबे जबा इति जकारः निजभ्यां नि
ज्भिः श्चुत्वम् निच्सु निशासु गोपाः सोमपावत् बुद्धिः बुद्धीबुद्धयः हे बुद्धे बुद्धिम् बुद्धीः बुद्ध्या इदुद्भ्याम् स्त्रियांवर्तमा
नाभ्यामिकारोकाराभ्यांपरेषां ङितां वचनानांवाडागमोभवति बुद्ध्यै बुद्धये बुद्ध्याः बुद्धेः बुद्ध्याः बुद्धेः बुद्धीनां स्त्रियांयोः
बुद्ध्यांअडागमाभावे आमोप्यभावः बुद्धौ एवंमतिभूति धृतिरुच्यादयः धेनुरज्जुदनुचंच्वादयोप्येवम् ॥ ॥ ॥

जकारे निज्भ्यामिति सुपिरवसे चपा इति शस्यचः स्तोश्चुभिरिति शत्वं चपाच्छः शइतिपक्षे शस्यच्छत्वमपि बोध्यं निच्छः चोः कुरिति कुत्वं
नचपस्यासिद्धत्वात् इत्यावन्ताः गोपाशब्दआकारांतः बुद्धिः प्रायेणहरिवत् स्त्रीत्वात्तोनश्चसइति न नत्वं बुद्धीः अस्त्रियामित्युक्तत्वाद्दानेतिनात्वं नबुद्ध्या
इदुद्भ्याम् इश्च उश्च इदुतौ ताभ्यामिदुद्भ्यां वेयुवइत्यतोवेत्यनुवर्तते ङितामडि तिच स्त्रियां ङितां वाङ्स्यात् ङितामडितिनित्येप्राप्ते विभाषेयं स्त्रिया
मितिकिं सख्ये पत्ये ङितामितिकिम् मतिभ्यः तपरत्वंकिं नद्यै अट् बुद्ध्यै अडभावे ङितीत्येत्वं बुद्धयेडौत्तु अडामोः सहैवप्रवृत्त्य प्रवृत्ती सन्नियोगवि
शिष्टानां सहवा प्रवृत्तिः सहवानिवृत्तिरिति न्यायात् ॥ ॥ छ छ छ

त्रिचतुरोः स्त्रियांतिसृचतसृव त्त्यदादेरित्यतः स्यादावनुकृष्यते स्त्र्यर्थवाचकयोरेनयोरेतावादेशौस्तो विभक्तौराऋकारेण तुल्यंऋवदितिवाक्यां
तरं ऋत्रऋवदिति पदच्छेदः ष्योरित्यातः स्वरे इत्यनुवर्तते स्वरेपरे तिसृचतसृशब्दयोर्ऋकारऋकारकार्यं लभते तच्चरत्वं तेनपंचसुइतिडाविति चारस्तुरां
रित्यार् ऋतोङ्ङ्इत्युकारः एते विधयोन अस्शसोरल्लोपोपिनसेरेत्यात्वं धेरित्यर् तुभवत्येव स्वरपरत्वाभावात् तिसृइत्यत्रक्लिादिति षत्वाभावप्रदर्श
नेनां ऽऽदेशावयवे षत्वंनेति ज्ञापितं सैषादिति षत्वनिर्देशेनसमात्रादेशस्य षत्वंभवतीति ज्ञापितंच विभक्तौ किं तिस्रः प्रियायस्यस त्रिप्रिय इत्यत्र तुन-
लुकिनतन्निमित्तमित्युक्तत्वात् स्त्रियां किं त्रयः चत्वारः नतिसृचतसृोर्नामिदीर्घः एतयोर्दीर्घोनस्यान्नामि आमितुनुट् तिसृणांश्रुतत्वात् त्रिचतुरोरित्य
स्यैव स्त्रियामिति विशेषणंनानुवृत्तस्यनाम्नः प्रियास्त्रयः पुरुषाः प्रियाणि त्रीणि कुलानि वायस्याः साप्रियत्रिः तस्यबुद्धिवद्रूपं समासस्यस्त्र्यर्थावि

त्रिचतुरोः स्त्रियांतिसृचतसृवत् स्त्रियांवर्तमानयोस्त्रिचतुर् शब्दयोस्तिसृचतसृइत्येतावादेशौ भवतः विभक्तौ ऋका
रश्चऋकारवत् ततः ऽराऋकारानभवंतिसेराधेरर् तुभवति तिस्रः २ तिसृभिः तिसृभ्यः २ नतिसृचतसृोर्नामिदीर्घः तिसृ-
णांस्त्रियामिति त्रिचतुरोर्विशेषणान्नेह प्रियास्त्रयः प्रियाणि त्रीणि वायस्यास्साप्रियत्रिः बुद्धिवत् आमिप्रियत्रयाणां यदा
स्त्रियांमुख्यौ लिंगान्तरे गौणौ तदैतौस्तः प्रियास्तिस्रोयस्यस प्रियतिसा प्रियतिस्रौ प्रियतिस्रः हे प्रियतिसः नामृशसोरल्लोपः
प्रियतिस्त्रं प्रियास्तिस्रोयस्य कुलस्य तत् कुलंप्रियत्रि॥ ॥ धायत्वेपि त्रिचतुराः स्त्र्यर्थाविधायकत्वाभावात् आमि तुत्रेरयडित्यय

ङ् प्रियत्रयाणामिति विशेषः यदास्त्रियांमुख्यौ लिंगांतरे गौणौ तदैतौस्तः यदविग्रहे त्रिचतुर्शब्दौ स्त्र्यर्थवाचकौमुख्यौ तिसृचतसृरूपावित्यर्थः यस्य
यस्यावेत्यादि समासार्थरूपेलिंगांतरेतुतौ गौणौस्तः तदात्रिचतुरोस्तिसृचतसृइत्येतौभवतः यथा प्रियाः तिस्रोयस्य पुंसः सइत्यत्र प्रियाजस् त्रिजस्इति
स्थिते अंतरंगानपिविधीन् बहिरंगोलुक् बाधतइत्यलुक्त्वेवतिस्रादेशं सिपोर्लुकिकृते समासाद्याविभक्तिस्तस्यांपरतः तिस्रादेशः पुंवद्धेति प्रियाशब्दस्यपुं
वद्भावः सेरेत्यात्वं प्रियतिसेतियद्यपीहजहत्स्वार्थावृत्तिपक्षेत्रिशब्दस्यनिरर्थकत्वेनस्त्रीवाचित्वंदुर्लभंतथापिभूतपूर्वगत्यास्त्रियांवृत्तिर्बोध्या उत्तरपदार्थप्रधान

स्तसुरुपइत्यादिसिद्धांतस्यैवमेवनिर्वाह्यत्वात् अजहत्स्वार्थवृत्तिपक्षे तुस्त्रीनिष्ठसंख्यासमर्पकयोस्त्रिचतुरोरिति विवक्षितोर्थः प्रियतिस्रौ प्रियतिस्रः
प्रियतिस्रं प्रियतिस्रौ प्रियतिस्रः प्रियतिस्रा प्रियतिसृभ्यां प्रियतिसृभिः प्रियतिस्रे प्रियतिस्रः प्रियतिस्रोः प्रियतिसृणां प्रियतिस्रि प्रियतिस्रोः प्रियति
सृषु हे प्रियतिस्रः प्रियाः तिस्रोयस्य कुलस्येत्यत्र स्यमोर्लुकालुप्तत्वेन प्रत्ययलक्षणाभावान्न तिस्रादेशः प्रियत्रि न्नणईपूलुकिन तन्निमित्तमित्यस्यानित्य-
त्व पक्षे प्रियतिसृ एतद्रूपद्वयं कैयटेनस्वीकृतं इदमोयं पुंसीत्यनेनानित्यत्वंज्ञापितं नामिनः स्वरे इति नुम् ई माविनीत्व प्रियतिसृणी नोपधायाइति दीर्घः तृती
आदिषु वक्ष्यमाणेन टादावित्यनेन पुंवद्भावविकल्पात् पर्यायेणनुम् रत्वे प्रियतिस्रा प्रियतिसृणा प्रियतिस्रे प्रियतिसृणे प्रियतिस्रः प्रियतिसृ
णः आमिरत्वं बाधित्वा परत्वात्नुम् प्राप्तः तंच बाधित्वा विप्रतिषेधे परमितिनुट् प्रियतिसृणाम् स्वृणामिति वा गुणः हे प्रियतिसः हे प्रियतिसृ द्विशब्दस्यत्यदा

न्नणईपू नकारांता दकारांतादृणंताच्च स्त्रियामीप्प्रत्ययो भवति प्रियतिसृणी प्रियतिसृणि स्वृणां नपुंसके धौगुणो
वा हे प्रियतिसः हे प्रियतिसृ टादौस्वरे टादावितिपुंवत् नामिनस्स्वरे प्रियतिसृणा प्रियतिस्रा द्वेरत्वे सत्याप् द्वे द्वे द्वाभ्याम्
३ द्वयोः २ हसेपस्सेर्लोपः नदीनद्यौ नद्यः हे नदि नदीम् नद्यौ नदीः नद्या ङितामट् नद्यै नद्याः नदीनाम् नद्याम् एवंब्राह्मणी
सखीकुमारीगौर्यादयः लक्ष्मीः अनीबंतत्वान्नसिलोपः धौन्हस्वः हे लक्ष्मि शेषं नदीवत् एवमवीतंत्रीतरीप्रभृतयः ईबन्तत्वा
त्सिलोपः स्त्रीस्त्रीभ्रुवोः स्त्रीशब्दस्य भ्रूशब्दस्यचेयुवौ भवतः स्यादौस्वरे परे स्त्रियौ स्त्रियः हे स्त्रि ॥ ॥ देरित्यकारे कृतेस
न्निपातपरिभाषाया अनित्यत्वादाबात् इत्याप् इतीदंताः नदादेरितीप् नदीधौन्हस्व इतिन्हस्वे हे नदि प्रातिपदिकग्रहणे लिंगविशिष्टस्यापिग्रहणमि
तिसेर्डाधेरितिडात्वे ऐसरव्युरित्यैत्वे च प्राप्ते विभक्तौ लिंगविशिष्टाग्रहणमितिन सखीलक्षेर्मुट् चेति ईप्रत्ययः लक्ष्मीः केचिदिह कृदिकारादितिपाक्षि
कमीपमिच्छंति तन्मते पक्षे सिलोपः स्यादेववातप्रमीश्रीलक्ष्मीतिपक्षेङ्यंताः सुसाधवइतिरक्षितः लक्ष्मीर्लक्ष्मीहरिप्रियेति द्विरूपकोशश्च अवीरजस्व
लास्त्री तंत्रीर्वीणास्तरीर्धूमः तरीर्वेडास्त्यायतेर्डडितिड्ट्प्रत्ययेयवयोर्वसे इतियल्लोपः षितइतीप् स्त्यायतेऽस्याः शुक्रशोणितेइतिस्त्री ॥ ॥

स्त्रीभ्रुवोः अप्राप्ते विधिरयं यत्ववत्वयोरपवादः एतयोरिवर्णोवर्णयोरियुवौ भवतः स्वरादौ स्यादौ किम् स्त्र्यर्थः भ्र्वर्थं धीन्द्रस्त्वइति ह्रस्वे हे स्त्रिवाम्शश
सि पूर्वेण नित्ये प्राप्ते विकल्पोऽयम् क्वचिदेकदेशोऽनुवर्ततेइतिस्त्रीभ्रुवोरित्यतः स्त्रीशब्दस्यानुवृत्तिः ङितामडित्यट् स्त्रियै आमि स्त्रियास्तु नित्यमिति
वक्ष्यमाणेन नुट् स्त्रीणां ङौ स्त्रियां योरित्याम् स्त्रियां गौणेतु स्त्रियमतिक्रांतः पुमान् अतिस्त्री अन्यार्थे इति ह्रस्वः एओनेत्यादि एओनेभावौत्वनुड्भिः
पुंसि स्त्रीशब्दस्य इय् बाध्यते इति त्वयाऽवधार्यतां ज्ञायतां एश्च ओश्च नाश्च ते एओनाः एओनानां भावः एओनाभावः एओनाभावश्च औत्वंच नुट् च

वाम्शसि अमि शसि च परे स्त्रीशब्दस्य वा इय् भवति स्त्रियम् स्त्रीम् स्त्रियः स्त्रीः स्त्रियास्त्रीणाम् स्त्रियमतिक्रान्तोऽतिस्त्रिः
अन्यार्थे अतिस्त्रियौ एओनाभावौत्वनुड्भिः पूर्वस्यैः पुंसि बाध्यते क्लीबे नुमा च स्त्रीशब्दस्येय् इत्यवधार्यतां अतिस्त्रयः
हे अतिस्त्रे अतिस्त्रियं अतिस्त्रिम् अतिस्त्रियौ अतिस्त्रियः अतिस्त्रीन् अतिस्त्रिणा अतिस्त्रये अतिस्त्रेः अतिस्त्रियोः अति
स्त्रीणां अतिस्त्रौ अतिस्त्रियोः अतिस्त्रिषु ओस्यौ कारे च नित्यं स्यादम्शसोऽस्तु विभाषया इयादेशस्तु नान्यत्र स्त्रियाः पुंस्युप
सर्ज्जने क्लीबे तु नुम् अतिस्त्रि अतिस्त्रिणी अतिस्त्रीणि अतिस्त्रिणा अतिस्त्रिये अतिस्त्रिणे अतिस्त्रेः अतिस्त्रिणः अतिस्त्रेः
अतिस्त्रिणः अतिस्त्रेः अतिस्त्रिणः अतिस्त्रियोः अतिस्त्रिणोः अतिस्त्रीणां अतिस्त्रौ अतिस्त्रिणि स्त्वृणां नपुंसके धोर्गुणो वा
वक्तव्यः हे अतिस्त्रे हे अतिस्त्रि स्त्रियान्तु प्रायेण पुम्वत् अतिस्त्रिः अतिस्त्रियौ अतिस्त्रयः शसि अतिस्त्रीः अतिस्त्रियाइदु
द्भ्याम् अतिस्त्रियै अतिस्त्रिये अतिस्त्रियाः अतिस्त्रेः २ अतिस्त्रियोः अतिस्त्रीणाम् अतिस्त्रियां अतिस्त्रौ श्रीः श्रियौ श्रियः
हे श्रीः ॥ ॥

तेएओनाभावौत्वनुटस्तैः एओजसिङितीत्येत्वौत्वे टानास्त्रियामितिनाङेरौङिदित्यौत्वं नुडागमइतिनुट् कीदृशैः पूर्वस्मिन् तिष्ठंती
ति पूर्वस्यास्तैश्च पुनः क्लीबेनामिनः स्वरेइतिनुगागमेन स्त्रीशब्दस्येय् बाध्यते ओसीत्यादि स्त्रियाः स्त्रीशब्दस्य पुंस्युपसर्ज्जने विद्यमानस्य ओसादिषु च
तुर्ष्वेव परेषु स्त्रीभ्रुवोरितीयादेशो भवति यथा ओसि औकारप्रत्यये च परतः इय् नित्यम् तु पुनरम्शसोः परतो विकल्पेनेय् अन्यस्मिन् प्रत्यये इय् न एओनाभा
वौत्वनुड्भिः ॥ ॥

पूर्वोक्तेर्बाधितत्वादित्यर्थः ह्रस्वे तुनुम् ईमावितीत्वं अतिस्त्रिणी जस्शसोरिति शिः नोपधाया इति दीर्घः अतिस्त्रीणि टादिस्वरे तु टादौ वुक्तपुंस्कमिति व
क्ष्यमाणेन पुंवद्भावपक्षे हरिवद्रूपम् स्त्रियमतिक्रांता या स्त्री सा अतिस्त्रिः शसि स्त्रीत्वात् सो नः पुंसि इति न नत्वं अतिस्त्रीः स्वरादिविभक्तौ स्त्रीभ्रुवो
रितीयं ङिद्वचनेषु इदुद्भ्यामिति वा ऽऽट् अतिस्त्रियै ङिती त्येत्वपक्षे अतिस्त्रये आमि नुट् अतिस्त्रीणां ङौ स्त्रियां योरित्याम् अतिस्त्रियां पक्षे ङेरौ ङिदि
त्यौत्वे अतिस्त्रौ क्विपि वचि प्रच्छायतस्तु कटप्रुजुश्रीणामिति क्विपि दीर्घः अनीबंतत्वान्न सिलोपः श्रीः श्र्योधातोरितीयं श्रियौ इयुव्स्थानि वर्ज्जितयो-
रित्युक्तत्वात् धावितिह्रस्वो न हे श्रीः ॥ वेयुवः ङिनामडित्यनेन नित्ये प्राप्ते विकल्पोयं स च व्यवस्थितः तेन स्त्रियां नित्यमेवाट् इयुं च उवं च आनयोः समाहा
रः इयुव् तस्मादियुवः योरित्यनुवर्तते स्त्रियामियुव्स्थानिभ्यामिवर्णोवर्णाभ्यां परेषां ङितामड्वा स्यात् स्त्रियामिति किं सुधियेस्वयंभुवे इयुवङिति
किं प्रध्यै वर्षाभ्वे इयुवंतादामो नुड्वा स्त्रियास्तु नित्यं स्त्रियामियुव्स्थानिभ्यामिवर्णोवर्णाभ्यां परस्यामो नुड्वा स्यात् स्त्रीशब्दात्परस्यामो नित्यमेव नुट्

वेयुवः इयुवन्तान् ङितामड् वास्त्रीं विना श्रियै श्रिये श्रियाः श्रियः इयुवन्तादामो नुड्वा स्त्रियास्तु नित्यम् श्रीणाम् श्रिया
म् श्रियि श्रियाम् एवं ह्रीधीप्रभृतयः एवं भ्रूप्रभृतयः प्रधीशब्दस्य तु लक्ष्मीशब्दवद्रूपम् केषांचिन्मते तु पुम्वत् प्रकृ-
ष्टा धीरिति विग्रहे तु लक्ष्मीवत् अमि शसि च प्रध्यम् प्रध्यः सुष्ठु धीर्यस्याः सुष्ठु ध्यायति वेति विग्रहे सुधीः श्रीवत् केषा-
ञ्चिन्मते पुम्वत् सुष्ठुधीरिति विग्रहे तु श्रीवदेव ग्रामणीः पुम्वत् एवं खलप्वादिः ॥ ॥

धीः प्रज्ञा धीषणा बुद्धि मतिरित्यमरः ह्रीर्लज्जा भूर्भू
मिरचलानंतेत्यमरः भ्रमतीति भ्रमेर्डूरिति भ्रमतेर्डूप्रत्ययः डित्वाट्टिलोपः नेत्रयोरुपरि रोमपद्धतीभ्रूः पदांतरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति
वदतां वृत्तिकारादीनां मते प्रधीशब्दस्य लक्ष्मीशब्दवद्रूपम् अमि शसि च प्रध्यं प्रध्य इति विशेषः धातुत्वात् य्वोर्वेति स्वरे यत्वं लिंगांतराऽनभिधायकत्वं नि
त्यस्त्रीत्वमिति वदतः कैयटस्य मते प्रकृष्टा धीर्यस्याः सा प्रकर्षेण ध्यायतीति वा विग्रहे प्रधीशब्दस्य पुंवद्रूपम् अयं मतभेदः प्रकृष्टा धीरिति विग्रहे णत्व पु
रुषे तु मतद्वयेपि लक्ष्मीवत्प्रधीशब्दस्य स्याद्रूपम् सुष्ठु धीर्यस्याः सा सुष्ठु ध्यायति वेति विग्रहे वृत्तिकारमते सुधीशब्दस्य श्रीशब्दवद्रूपम् कैयटमते तु नित्य

स्त्रीत्वाऽभावात्पुंवद्रूपं सुष्ठु धीरिति विग्रहेण तत्पुरुषे तु मतद्वयेऽपि श्रीवदेव बुद्धिवाचक धीशब्दस्य नित्यस्त्रीत्वात् ग्रामणीशब्दः पुंवत् ग्रामनयनस्यो
त्सर्गतः पुंधर्मतया पदांतरं विना स्त्रियामप्रवृत्तेः स्त्रं खलप्वादेरपि पुंधर्मत्वमौत्स र्गिकं बोध्यम् न्वणईप् नृच आच अण्च एषां समाहारो न्वण् तस्मान्न्वण अ
णिनिप्रत्ययो न तु क्विबंतोऽणिति गृह्यते प्रत्ययाप्रत्यययोरिति न्यायात् अस्य व्याख्यानं स्त्रीप्रत्यये द्रष्टव्यं क्रोष्टुशब्दस्य पुंसि पंचस्वधि पुस्त्रियां वेति तृवद्भा
वः क्रोष्ट्री धाविति न्हस्वः हे पुनर्भु स्त्रियां योरिति ङेः राम् पुनर्भ्वां कैयटमते भेकजातौ नित्यस्त्रीत्वाभावात् हे वर्षाभूः वृत्तिकारकमते तु हे वर्षाभु पुनर्नवा
यां तु हे वर्षाभु उक्तंच भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमानिति यादवः भेक्यां मंडूक्यां तथा पुनर्नवा औषधी तस्यां वाच्यायां वर्षाभूशब्दः स्त्रीलिंगः
दर्दुरवाची तु पुल्लिंगः ङौ वर्षाभ्वां स्वयंभूशब्दे स्वरे परतो य्वोर्धातोरित्युव् मतद्वयेऽपि नित्यस्त्रीत्वाभावात् ङितामङित्यादिना नकारांतसंख्यायाः स्वसृति

न्वणईप् नकारान्तादृकारान्ताच्च स्त्रियामीप्प्रत्ययो भवति क्रोष्ट्री क्रोष्ट्र्यौ नदीवत् वधूजम्बादयो नदीवत् पुनर्भूः य्वौ वा पु
नर्भ्वौ हे पुनर्भु पुनर्भ्वा पुनर्भूणाम् पुनर्भ्वाम् भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान् हे वर्षाभु वर्षाभ्वौ स्वयम्भूः पुंवत् नका
रान्तसंख्यायाः स्वसृतिसृचतसृननांदृदुहितृयातृमातृभ्यश्च नेवायौ माता पितृवत् स्वसा कर्तृवत् शसि मातॄः स्वसॄः राः
पुम्वत् गौः पुम्वत् नौर्ग्लौवत् इति स्वरांताः स्त्रीलिंगाः अतोम् अकारान्तान्नपुंसकलिंगात्सरयोस्स्य मोरम् भवत्यधो कुलम्॥

सृच तसृ ननांदृ दुहितृ यातृ मातृभ्यश्च नेवायौ स्वस्रादीनामीप्प्राप्तो नकारांतसंख्यायास्तु भौ प्राप्ताव नेन निषिध्येते साव सेर्ऋ इति ऋ प्रत्ययः स्वसा स्तुरा
रित्यार् स्वसारौ शसि स्वसॄः स्त्रीत्वात्सो नः पुंस इति नत्वं ननांदा तु स्वसापत्युरित्यमरः भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परमिति च यद्यपि पुल्लिंग एव रै
शब्दः अर्थरैविभवा अपीत्यमरे भिन्नलिंगानां न द्वंद्व इति परिभाषितत्वात् तथापि रात्येनामिति राः स्त्रीत्येके नुदत्ते ग्लौ नुदिभ्यां डौ विति डौ प्रत्ययः ङित्वा
ट्टिलोपः नौः स्त्रियां नौस्तरणिस्तरिरित्यमरः इति स्वरान्ताः स्त्रीलिंगा अतोऽम् अदन्तान्नपुंसकान्नाम्नः परयोः स्यमोरम् स्यात् नपुंसकात्स्यमोर्लुगित्यस्या
पवादोऽयम् अतः किंपयः तपरकरणं सुखार्थं नपुंसकस्येति ह्रस्वे कृते दीर्घत्वाभावात् केचित्तु म् इत्येव पदच्छेदं कुर्वंति लाघवात् तत्र सेर्मे कृते कुलमिति सिद्धं

द्वितीयैकवचने तुमस्यैव मे कृते अम् शसो रित्यल्लोपे सिद्धमिष्टं यत्त्वाहुः अतिजरसमिति सिद्ध्यर्थमम् विधानं तन्न द्वितीयैकवचने लुकोपवादे अतो
मितिम् भावे कृते अम् शसोरित्यल्लोपं बाधित्वा जरस् ततः सन्निपातपरिभाषया लुकोऽप्रवृत्तौ रूपसिद्धिरिति हे कुले त्यत्र धेरमि कृते अल्लोपे च समाना
द्धेरिति मलोपः यद्वाऽतोमिति सूत्रे सन्महन्नित्यतो मंडूकप्लुत्याऽधावित्यनुवर्त्य षष्ठ्या विपरिणम्यते अमादेशनिषेधाद्धेर्लोप एव विधेयः ॥ छ ॥ ईमौ नपुंस
कान्नाम्नः पर औरीत्वं प्राप्नोति दीर्घोच्चारणं तु मधुनी इत्यादौ श्रवणार्थं विपरीतनिर्देशो नित्यादपि नुमः पूर्वमीविधानार्थः जश्शसोः शिः नपुंसकान्नाम्नः पर
योर्जस् शसोः शिस्स्यात् नपुंसकात्किम् देवाः जसा सहचरितस्य शसो ग्रहणान्नेह ज्ञातशो ददाति शकारः सर्वादेशार्थः नुमयमः अयम् प्रत्याहारान्तस्य नपुं
सकस्य नुम् स्यात् शौ परतः नपुंसकादिति षष्ठ्या विपरिणम्यते शिरिति सप्तम्यान्त अयम इति षष्ठी मकाराऽकारस्योच्चारणार्थत्वात् मित्त्वादंत्यात्स्वरात्परो नु

ईमौ नपुंसकलिंगात्पर औरीकारमापद्यते कुले जश्शसोश्शिः नपुंसकलिंगात्परयोर्जश्शसोश्शिर्भवति नुमयमः नपुंस
कस्य नुमागमो भवति शौ परे यम प्रत्याहारान्तस्य नमिदन्त्यात्स्वरात्परः नोपधायाः नान्तस्योपधाया दीर्घो भवति शौ पंचस्व
धिषु नामिच इति न कुलानि हे कुल शेषं देववत् एवं मूलफलादयः श्त्वन्यादेः अन्यादेः क्लीबात्परयोस्स्यमोः श्तुर्भवति अन्य
त् ॥ ॥
म् अयमः किं विमलदिवि चत्वारि वारि फलि सुगणि ब्रह्माणि प्रशामि नोपधायाः नेत्यविभक्तिको निर्देशः नाम्नो विशेषणं तेन नान्तस्य
नाम्न उपधाया दीर्घः स्यात् शौ परे पंचस्वधिषु ईमाविति ईकारे तु न ब्रह्मणि इति वादीपोरित्यत ईकारस्य अनुक्तसमुच्चयार्थस्य निषेधार्थस्य वाचकस्य चानु
वर्तनात् नामी त्यस्यापकर्षणान्नाम्यपि नोपधाया दीर्घः विदो न वा नामिनि निर्देशात् भवन्नित्यादौ संयोगान्तलोपस्यासिद्धत्वान्न दीर्घः श्त्वन्यादेः क्लीबादन्या
देर्नाम्नः परयोस्स्यमोः श्तुः स्यात् अतोमित्यस्यापवादः अन्य अन्यतर इतर डतर डतम इति पंचात्मकोऽन्यादिः सर्वाद्यंतर्गणः डतर डतमौ प्रत्ययौ ततस्तदंताः
कतर कतमादयो ग्राह्याः क्लीबादिति किं अन्यः अन्यं शकारः सर्वादेशार्थः उकार उच्चारणार्थः ॥ ॥ छ छ
छ छ छ छ छ छ

चावसाने अवसातिरवसानं षोंतकर्मणि अस्माद्धावेयुट् समाप्तिरंत इतियावत् पदस्यांते वर्तमानाना झसानांजबाश्चपाश्च वास्यु ःपदस्य किंम
रुतौ अंतेकिं गतः झसानां किंराजन् अन्यादेर्द्धे र्लोपोन अन्यादेः परस्य धेर्लोपोनसमाना द्धेरिति प्राप्ते निषेधः एकतरस्य श्तुर्न एकतरासर
योः स्यमोः श्तुर्नस्यात् डतरप्रत्ययां तत्वात्प्राप्ते निषेधः अविद्यमानाजरायस्य तत् अन्यार्थे ह्रस्वे कृते अतोमित्यम् अजरमित्यत्राजरशब्द
माश्रित्य सिस्थानेऽम् उत्पन्नः तेनाजरशब्दस्याम् विधिः संनिपातः अतः सन्निपातोम् विधिर्जरसादेशविधानेनाजरशब्दस्य विघातकोने
ति अजरमित्येकमेवरूपं प्रथमैकवचने अजरसि इतिस्थिते परत्वाज्जरसि कृतेतुमयम इतिनुम् न्सम्महतोऽधौदीर्घः शौच न्सचअप्च मह-

चावसाने अवसानेवर्त्तमानानां झसानांजबा भवन्तिचपावा अन्यत् अन्यद् अन्ये अन्यानि अन्यादेर्द्धे र्लोपोन
हे अन्यत् अन्यतरत् इतरत् कतरत् कतमत् एकतरस्य श्तुर्न एकतरम् शेषंसर्ववत् सेरमादेशे सन्निपातपरिभा
षया नजरस् अजरम् अजरसौ अजरे अजराणि न्सम्महतोऽधौदीर्घः शौच न्संतस्याप्शब्दस्य महच्छब्दस्य चदी
र्घो भवतिपंचस्वधिपु शौच अजरांसि अमिलुकोपवाद मम्भावं बाधित्वा परत्वाज्जरस्॥ ॥

च एषांसमाहारो न्सम्महत् तस्य न्सम्महतः अमे अमावाइत्यनेनयस्य मादेशं कृत्वा अप् शब्दोऽत्रनिर्द्दिश्यते अधिकाराल्लब्धश्च नाम्नोविशेष
णामिदं विशेषणेनच तदंतविधिरिति तदंतस्यापिदीर्घोभवतीत्यर्थः अधाविति छेदोनतु धाविति पंचस्वित्यनुवर्तते तद्विशेषणं चेदं अत्रपूर्वव
त् इइत्यनुवर्ततेचकारोस्त्येव तेनस्वपी इत्यादौ इतिनेत्यर्थः अत्राम्महत्साहचर्य्याद धातोरेव न्सगृह्यते तेनसुहिन् इत्यादौ नदीर्घो धातुत्वात् न्संतत्वाद्दी
र्घो अजरांसि नोपधाया इतिदीर्घे अजराणि अजरअमित्यत्र नपुंसकात्स्यमोर्लुगित्यस्यापवादमतोऽमित्य म्भावं बाधित्वा परत्वाज्जरस् ततोयोयमाश्रि

त्योतद्घतेसतंप्रतिसन्निपातः॥ ७ ॥सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषया नामोर्लुगू अजरसं अजरम् पाददंतेत्यनेन हृद् उ
दन् आसन् मांस् आदेशाः अल्लोपः स्वरे इत्यकारलोपे उद्ना नाम्नो नोलोप शिति नलोपे उदभ्यां संयोगांतस्येति सलोपे मान्भ्यामिति नपुंसकस्य ह्र
स्वः अत्र ह्रस्वश्रुत्या स्वरस्येत्युपस्थितं तच्च नपुंसकस्य विशेषणं नाम्न इत्यनुवृत्तमधिकारात् तत्र स्वरांतस्य नपुंसकस्य नाम्न इति सामानाधिकरण्ये
न व्याख्यातं लिंगस्य नामार्थत्वाभ्युपगमात् तस्य ह्रस्वः स्यादित्यर्थः श्रियंपातियत् कुलंतत् श्रीपं अत्र ह्रस्वे कृतेऽतोमित्यम् नपुंसकात् स्यमोर्लुक्
नपुंसकान्नाम्नः परयोः स्यमोर्लुक् स्यात् त्यादित्यादौ लुकात्यदा द्यत्वं बाध्यते कश्चित्पूर्वेणापि परस्य बाधस्वीकारात् नित्यत्वाद्वा कृताकृत प्रसंगित्वाल्लुङ्
नित्यः त्यदाद्यत्वं विभक्तावुच्यमानं कृते लुकि विभक्त्यभावान्न ख्यृणां नपुंसके धौ गुणो वा इश्च उश्च आच ते ख्यरस्तेषां ख्यृणामिकारोकारऋकारांतानां

ततस्संनिपातपरिभाषया न लुक् अजरसम् अजरसी अजरे अजरांसि अजराणि शेषं नि र्जरवत् हृदयोदका
स्यमांसानाम् हृद् उदन् आसन् मांस हृदि हृदा हृद्भ्याम् उदानि उद्ना उदभ्याम् आसानि आस्ना आसभ्याम् मां
सि मांसा मान्भ्याम् नपुंसकस्य ह्रस्वः नपुंसकस्य ह्रस्वो भवति श्रीपं कुलवत् नपुंसकात्स्यमोर्लुक् अस्थि ख्यृणां
नपुंसके धौ गुणो वा हे अस्थे हे अस्थि नामिनः स्वरे नाम्यन्तस्य नपुंसकस्य नुमागमो भवति स्यादौ स्वरे अस्थिनी अ
च्चास्थ्नां शसादौ शसादौ स्वरे ऽस्थ्यादीनां नुमागम इकारस्य चाकारः अल्लोपस्स्वरे ऽम्वयुक्तात् छसादौ अस्थ्ना अस्थ्ने
अस्थ्नः अस्थ्नोः अस्थ्नाम् ॥ ॥

नपुंसकानां गुणो वा स्यात् धौ नामिनः स्वरे नाम्यंतस्य नपुंसकस्य नाम्नो नुम् स्यात्
स्वरादौ स्यादौ नाम्यंतस्य किम् जगते नपुंसकस्य किं वातप्रम्ये स्वरादौ किं वारिभ्यां स्यादौ किं दध्यत्र अच्चास्थ्नां शसादौ अत्राधिकृतस्य नाम्नोऽ
स्थ्नादिभिर्विशेषणात्तदंतविधिस्तेनाऽ नपुंसकस्याप्यस्थ्याद्यंतस्य नाम्नो नुम् स्यादेषामितोऽकारश्च शस् आदिर्यस्येत्यतद्गुणसंविज्ञानो बहुव्रीहि-
स्तेन शसि न अस्थीनीति अस्थ्नामिति बहुवचनमाद्यर्थं तेनास्थि दधि सक्थ्य क्षिशब्दाः ग्राह्याः अल्लोप इत्यनेनोपधाऽकारलोपे अस्थ्ना वेङ्योरित्युपधाया

वालोपे अस्थ्नि अस्थनि तदंतेतु प्रियमस्थियस्यसः प्रियास्थिः तेनप्रियास्थ्नाशुनादधि अतिक्रांतमतिदधि तेनातिदध्ना व्यंजनेन स्त्रियाम
प्यातिदध्नेत्येवसान्निपातपरिभाषया बहिरंगपरिभाषया चेपोऽप्रवृत्तेः व्यूणामितिवा गुणो हेवारि हेवारे टानास्त्रियामिति नाभावे वारिणाङयि ङि
तीत्येत्वे प्राप्ते एत्वौत्वतृवद्भावैत्वान् बाधित्वानामिनः स्वरेइतिनुम् परेणपूर्वबाधोवेत्याद्युक्तत्वात् अतिसाखिनीत्यत्र ऐसख्युरित्यैत्वेप्राप्तेनुम् वारिणी
त्यत्रङेरौ ङिदित्यौत्वेप्राप्तेनुम् प्रियक्रोष्टूनि इत्यत्र क्रोष्टुशब्दस्येति तृवद्भावे प्राप्तेनुम् वारिणेएत्वे प्राप्तेनुम् आमि प्रायश इत्युक्तत्वात्पूर्वेण परस्यबा
धनात् नुडेव ननुनुम्नुटोः कोविशेषः उच्यते नामीतिदीर्घत्वमिति वारीणां हसादौ हरिवत् ग्रामंनयतियत् कुलमिति नपुंसकस्येति ह्रस्वे ग्रामणि

वेङ्योः अस्थ्नि अस्थनि एवंदधिसक्थ्यक्षिशब्दास्तदंतस्यापीष्टाः प्रियास्थ्ना अतिदध्ना वारि वारिणी वारीणि आ
मिनुट् वारीणाम् नपुंसकस्य ह्रस्वः ग्रामणि टादावुक्तपुंस्कंपुंवद्वा उक्तपुंस्कन्नाम्यंतन्नपुंसकलिंगं टादौस्वरे परेपुं
वद्वाभवति ग्रामण्या ग्रामणिना ग्रामणीनां ग्रामण्यां ग्रामणिनि ग्रामण्यां प्रधि प्रध्या प्रधिना सुधि सुधिया सुधिनाम
धु हेमधो हेमधु एवमम्बादयः सानु सानुनी सानूनि सानूनि स्नुना सानुना स्नुभ्याम् प्रियक्रोष्टु प्रियक्रोष्टुनी प्रियक्रोष्टूनि प्रि
यक्रोष्ट्रा प्रियक्रोष्टुना प्रियक्रोष्ट्रे प्रियक्रोष्टवे प्रियक्रोष्टुने प्रियक्रोष्टुः प्रियक्रोष्टोः प्रियक्रोष्टुनः सुलु सुलुनी सुलूनि सुल्वा सुलु
ना एवंखलप्वादयः धातृ धातृणी धातृणि हेधातः हेधातृ एवंज्ञातृकर्त्रादयः ॥ ॥

टादावुक्तपुंस्कंपुंवद्वा प्रवृत्तिनिमित्तैक्ये उक्तपुं
स्कं नाम्यंतं नपुंसकं पुंवद्वाभवति टादौस्वरे नपुंसकादित्युक्तपुंस्क मित्यनेनसह प्रथमांतं संबध्यते पुंवदितिपुंशब्देन तुल्यमित्यर्थः केनप्रकारेण पुंशब्देन
तुल्यं नुम् ह्रस्वयोरभावाद्वारिणोतितेननुम् ह्रस्वयोरभावोऽतिदिश्यते पुंनपुंसके वर्तमानस्य यस्य शब्दस्य प्रवृत्तिनिमित्तं भिद्यते तस्य टादौस्वरेनपुंवत्
यथा मधुशब्दो मद्येनपुंसकः चैत्रदैत्ययोः पुल्लिंगः नात्रपुंवत् प्रवृत्तिनिमित्तभेदात् उक्तः पुमान् यस्मिन्नर्थे तद्भाषितपुंस्कं प्रवृत्तिनिमित्तं तदस्यास्तीतिउ
क्तपुंस्कं पटुनेपटवे यथा १ पुल्लिंगपक्षे ग्रामणिशब्दो दीर्घांत एव ततोय्वौवेतियः नियइत्याम् ग्रामण्याम् नपुंसकपक्षे ह्रस्वः ततोनामिनः स्वरेइतिनुम् पुनरु

क्तं च एक एवेत्यादि तन्नाम उक्तपुंस्कमाचार्येणोच्यते तत्किं एक एव यः शब्दः हीति निश्चयेन त्रिषु लिंगेषु वर्ततेयः शब्द स्त्रिषु लिंगेषु एक एवार्थमा
ऽख्याति कथयति अर्थशब्देन प्रवृत्तिनिमित्तमुच्यते १ प्रकृष्टाधीर्यस्य तत्प्रधि प्रधिनी इत्यत्र पूर्वेणानुमानपरमपि यत्वं बाध्यते प्रायश इत्युक्तत्वा
त् अत्रापि प्रकृष्टज्ञानवत्त्वं पुंनपुंसकयोरेकमेवेति उक्तपुंस्कत्वात्पुंवत्पक्षे य्वोवेतियः नपुंसकपक्षे नुम् सुष्ठु धीर्यस्य तत् सुधि सुधिनी इत्यत्र इयं बाधि
त्वा प्राग्वन्नुम् शोभनज्ञानवत्त्वं प्रवृत्तिनिमित्तं पुंनपुंसकयोरेकमेव उक्तपुंस्कत्वात् पुंवत्पक्षे सुधीशब्दस्य च्वनेति निषेधादियं सुधिया मधुमद्येपुष्प
रसे मधुर्वसंते चैत्रे चेति पुंनपुंसकयोरेक प्रवृत्तिनिमित्तं नास्त्यत्र किंतु मद्यत्ववसंतत्वादिरूपं भिन्नं भिन्नमेव उक्तपुंस्कत्वाऽभावान्मधुने मधुन इत्ये
व न तु मधवे मधोरित्यादि य्वृणामिति वा गुणे हे मधु हे मधो सानुशब्दस्य शसादौ पादद्दंतेत्यनेन वा स्नुरादेशः स्नुः प्रस्थः सानुरस्त्रियां इत्युभयलिंगः
सानुशब्दः स्नूनि सानूनीत्यादि प्रियः क्रोष्टा यस्य तत् प्रियक्रोष्टु टादौ स्वरे पुंवत्पक्षे रत्वं प्रियक्रोष्ट्रा टानानास्त्रियामिति नाभावे प्रियक्रोष्टुना इतिरूप

ह्रस्वादेशे सन्ध्यक्षराणामिकारोकारौ अतिरि अतिराया अतिरिणा अतिराये अतिरिणे अतिराभ्यां अतिरिणि अति
रासु प्रद्यु प्रद्युना प्रद्यवा उपगुना उपगवा अतिनु अतिनुना अतिनावा ॥ ॥

द्वयम् क्लीबे तु नुमेव प्रियक्रोष्टुने एवमन्यत्रापि आ
मि नुडेव नित्यत्वात् सुष्ठु लुनाति तत्सुलु नपुंसकस्येति ह्रस्वः शोभनलवनकर्तृत्वं पुंनपुंसकयोरेकमेव पुंवत्पक्षे य्वोवेति वः क्लीबे नुम् सुल्वा सुलुना द
धाति तत् धातृ धारणकर्तृत्वं पुंनपुंसकयोरेकमेव पुंवत्पक्षे रत्वं क्लीबे नुम् ङसिङसोरुत्तोङ उरित्युत्वं धातुः आमि नुट् धातृणां ङाविति गुणे धातरि
य्वृणामिति वा गुणे हे धातः ॥ ७ ॥ ह्रस्वादेशे संध्यक्षराणामिकारोकारौ आदिश्यते इत्यादेशः ह्रस्वश्चासावादेशश्च ह्रस्वादेशः निर्धारणे सप्त
मी जातावेकवचनं आदिश्यमानेषु ह्रस्वमध्ये संध्यक्षराणामिकारोकारौ भवतः एकारांतस्योदाहरणं इः कामः स्मृतो येन स स्मृतेः शोभनः
स्मृतेर्यस्य तत् सुस्मृति रायमतिक्रांतं यत् कुलं तदतिरि अत्यादयः क्रांताद्यर्थे इति तत्पुरुषः अतिरिणा इह न पुंवत् उक्तपुंस्कत्वाऽभावात् पुंसि त्वेदंतो
स्तीति एवमग्रेपि एकदेशविकृतस्याऽनन्यत्वाद्रै स्मीत्यात्वं अतिराभ्यां आमि नुट् नामीति दीर्घः अतिरीणां प्रकृष्टा द्यौर्यस्मिन् तत् प्रद्यु प्रकृष्टस्वर्गव

त्वादिप्रवृत्तिनिमित्तैक्यात् प्रद्योशब्द उक्तपुंस्कः स एवेदानीं ह्रस्वत्वे प्रद्युशब्दोपि उक्तपुंस्क एव एकदेशविकृतस्यानन्यत्वात् अतः पुंवद्भावो भवतीत्येके वदंति माधवमतेतु संध्यक्षरांतेषु क्लीबेषु पुंवद्भावो नास्तीति बोध्यम् नावमतिक्रांतं यत्तदतिनु अनडुहश्च अनडुह्शब्दस्यामागमः स्यात् अत्र चतुरांशौ चेत्यत आम् शाविति पदद्वयमनुवृत्तं पंचस्विति च अत्र हि चकारोऽनुक्तसमुच्चयार्थस्तेन ईकारे नाम् ईप्याम् वाईकारे बह्वनडुहीई पि अनडुही अनड्वाही षत्यादित्वान्नदादित्वादीप् तदंतविधिरत्र प्रिया नड्वान् सावनडुहः अस्यनुम् स्यात् सौपरे नुमयम इत्यतो नुमित्यनुवृत्तम प्योरां नित्य मितिसूत्रान्मंडूकप्लुत्या आदित्यनुवर्तते तेनाऽवर्णात्परोयं नुम् अतो विशेषविहिते नापिनुमाम् नबाध्यते अमा च नुम् नबाध्यते

इतिस्वरान्ता नपुंसकलिङ्गाः अनडुहश्च पुंसि पंचसु शौ चानडुह आमागमः ईपि वा सावनडुहः अनडुहस्सौ नुम् संयोगान्तस्यलोपः स्यादोरसे पदांते च वसाभिन्नस्यरान्न अनड्वान् अनड्वाहौ अनड्वाहः धावम् चतुरनडुहोर्धावमागमो भवति आम्न्हे अनड्वान् वसा रसे वस्रुस्रंस्रुध्वंसु भ्रंसु अनडुहान्दत्वम्भवति रसे पदांते च अनडुद्भ्याम् अनडुत्सु ॥ ॥

संयोगांतस्यलोपः संयोगेति अंतस्येति च च्छेदः अनुकरणाद्विभक्तेर्वैकल्पिकत्वादविभक्तिको निर्देशः नाम्न इति विशेष्यं संयोगेति विशेषणं विशेषणेन च तदंतविधिः तेन संयोगांतस्य नाम्नोंतस्य लोपो भवति स्यादौ रसे च पुनः पदांते वर्तमानो नाम्नो धातोश्च यः संयोगस्तस्यांतस्य लोप इति पदांते यथायमर्थः अचोस्कुन् संयोगांतस्येति किम् रुत् संयोगस्य नाम्नो विशेषणत्वादादेर्नत्वद् अनः शकटं वहतीति विग्रहे अनसीव हेः क्विप् अनसोडस्येति क्विप् यजामिति संप्रसारणं अनडुह् सि इति स्थिते आम् नुमौ परत्वात् संयोगांतलोपे कृते सिलोपः अनड्वान् न वसा रसे इत्यनेन नुमो वत्वं न नुम् विधिसामर्थ्यात् सभिन्नस्यरान्नरात्परस्य सस्यैव लोपः स्यान्नान्यस्य वर्णस्य च तुरो वारान् इति चतुः सुप्रत्ययस्य लोपोत्र सस्येति ऊर्क् अमार्ट् धावम् चतुरनडुहोर मागमः स्याद्धौ परे आमोपवादः चतुर्शब्दात्तु गौणे हे प्रियचत्वः वसा रसे बहुवचनमाद्यर्थं वसु चात्र प्रत्ययो गृह्यते न धातुर्व्याख्या

नात् उत्सृष्टानुबंधत्वेन वसुक्कसोः सामान्यग्रहणं सौस इत्यतः सइत्यनुवर्त्य पष्ठ्यंतंव्याख्येयम् तच्चवसोर्विशेषणं न स्रंसादेर्व्यभिचारात् नाप्यनडु
होः संभवात् सांतवस्वंतस्यस्रंसादेश्चनाम्नो अनडु हूशब्दस्यदः स्यात् सांतेति किं विविद्वान् नाम्नइति किं स्रस्तं ध्वस्तं खसेचपाइतितः अनडुत्सु
दादेर्घः द आदिर्यस्यसदादिस्तस्यदादेः अत्रधातुग्रहण द्वयमनुवर्त्यतत्रैकमाद्योच्चारणप्रतिपत्त्यर्थम् आद्योच्चारणे दादेर्धातोर्हस्य घः स्यात् झसेप
दांतेचदादेर्नाम्नश्च हस्यघोर सेपदांतेनढस्या ऽपवादोयम् धातोर्यथादोग्धि अधोक् आद्योच्चारणेकिम् अधोगित्यत्र यथास्यात् दामलिहमात्मान
मिच्छतीति दामलिह्यति नाम्नोय इतियप्रत्ययः ततः क्विपि दामलिट् अत्रमाभूदिति आदिजबानांझभांतस्य झभा स्ध्वोः मंडूकप्लुत्याभिदपा-
मित्यतो भिइत्यनुवर्ततेपदांतेइतिच आदिशब्दस्यावयववाचित्वादवयव्या कांक्षायां धातोर्नाम्नश्चेत्याक्षिप्यते झभांतस्येति न धातोर्विशेषणं

दादेर्घः आद्योच्चारणे दादेर्हकारस्य घत्वम्भवति धातोर्झसे नाम्नश्च रसेपदान्तेच आदिजबानांझभान्तस्यझ-
भा स्ध्वोः धातोर्झभांतस्यावयवस्यादौ वर्तमानानां जबानां झभाभवंति सकारे ध्वशब्दे नाम्नश्चरसेपदांतेच धुक्
धुग् दुहौ दुहः धुग्भ्याम् धुक्षु आद्योच्चारणेकिं दामलिह्यतीति दामलिट् दामलिड् दामलिड्भ्यां दामलिट्सु दामलिट्त्सु
अवयवस्यकिं गर्द्दभमाचष्टे गर्द्दभयतीति गर्धप् गर्दभौ गर्धब्भ्यां गर्धप्सु ॥ ॥ किंत्ववयवस्य झभांतस्य धातो रवयवस्यादौ
स्थिता जबा झभाः स्युः स्यादौ ध्वादौ पदांतेच ध्वेति ध्वेध्वमोः सामान्यग्रहणं धातोर्यथा धेक्ष्यते धुग्ध्वे अधुग्ध्वं अधोक् जबानामिति किं योत्स्यते
झभांतस्येति किं दास्यति जबानामित्यत्रदबानां झभा इत्यत्र धभाइत्यपेक्षितमाद्ययोरदर्शनात् अवयवस्येति किं गर्दभमाचष्टे इति गर्दभयति ना
म्नोञिर्डिदिति ञिप्रत्ययः ततः क्विप् ञिलोपे गर्द्दप् अवयवग्रहणाभावेगकारस्थाने ऽत्रघः स्यादित्यर्थः दुहप्रपूरणे क्विप् दादेर्घः इतिघत्वे झभांत-
त्वाद् धः वावसाने इति जबूनपौ धुग् धुक् झबे जबाइति जबूत्वं धुग्भ्यां धत्वंचप्रत्वे धुक्षु ॥ ७ ॥ ॥ ॥
७ ७ ७ ७ ९

होढः धातोर्हस्य ढः स्यात् झसे पदांते च नाम्नो हस्य च ढः स्याद्रसे पदांते च धातोर्यथा लेक्ष्यति अलेट् लिह आस्वादने क्विप् सौ परत्वात् ढत्वे
सिलोपः जबत्वचपत्वे लिट् लिड् सुपि ढस्य चपत्वे कृते टना त्सस्य वेति धुट् धुटः चपत्वेन ततः शसे चपस्य द्वितीयो वेति तस्य थो न कु कृ डु क् वर्जितस्ये
त्युक्तत्वात् ष्टुत्वं तु तकारस्य न शंक्यमेव स्यादीनां सुपि त्सस्य नेति निषेधात् लिट्सु धुड्भावेपि शसे चपस्येति टस्य ठो न पूर्ववत् ष्टुत्वं तु स्यादीनामि
ति निषिद्धमेव द्रुहादेर्वा द्रुह मुह ष्णुह ष्णिह हांघत्वं वा द्रुह जिघांसायां मुह वैचित्ये ष्णुह उद्गिरणे ष्णिह प्रीतौ द्रुहेर्दादित्वान्नित्यं प्राप्ते अन्येषामप्राप्ते
विभाषेयं द्रुहादीनां हस्य घः स्यात् धातोर्झसे पदांते च नाम्नो रसे पदांते च पक्षे ढः धातोर्यथा द्रोढा द्रोग्धा अदोधोड् अदोधोक् विश्ववहतीति विग्रहे भ

होढः हकारस्य ढत्वम्भवति धातोर्झसे परे नाम्नश्च रसे पदांते च लिट् लिड् लिहौ लिहः लिट्सु लिट्त्सु द्रुहादेर्वा द्रुह मु
ह स्नु ह स्निहां वा घत्वं ध्रुक् ध्रुग् ध्रुट् ध्रुड् द्रुहौ द्रुहः ध्रुग्भ्यां ध्रुड्भ्यां ध्रुक्षु ध्रुट्सु ध्रुट्त्सु एवम्मुह स्नुह स्निहः विश्ववाट् वि
श्ववाड् वाहौ शसादौ स्वरे वाहो वकारस्यौ भवति शसादौ स्वरे परे तद्धितयस्वरयोरीपीकारे च विश्वौहः विश्वौहा विश्ववाड्
भ्यां विश्ववाट्सु विश्ववाट्त्सु सहेस्साढि साढि रूपे सति सहेस्सस्य षो भवति तुराषाट् तुराषाड् तुरासाहौ तुरासाहः तुराषा
ड्भ्यां तुराषाट्सु इति हांताः ॥ दिव औ दिवो नाम्न औकारादेशो भवति सौ परे सुद्यौः सुदिवौ ॥ ॥ ॥ ॥ ॥

जां विणिति विण् प्रत्ययः विश्वं वाहयतीति ण्यंतात् तु वा विण् प्रत्ययो बोध्यः वाहो शसादौ स्वरे वकाराकारविशिष्टस्य वाशब्दस्येत्यर्थः ट
नादिति धुट् चपत्वे विश्ववाट्सु सहेः साढि षत्वमनुवर्तते तुरं वेगं सहते इति विग्रहे विण् तुरं त्वरितं साहयत्यभिभवत्यरीनिति विग्रहे तुण्यं
तात् क्विप् सहादित्वात् पूर्वपदस्य दीर्घः तुराषाट् दिव औ समानाद्वेर्लोपः इत्यतो मंडूकप्लुत्या अधातोरित्यनुवर्तते तेन धातोर्न भवति अक्षैर्दीव्यती
ति अक्षद्यूरिति क्विबंताद्दिवेर्डिविति डिव् प्रत्ययः वर्णमात्रविधित्वेन स्थानिवत्त्वाभावाद्धसे प इति सिलोपो न सुष्टु द्यौर्यस्मिन् स सुद्यौः

॥ छ ॥ छ छ छ छ छ

उरसे अधिकृतस्यनाम्नोदिवूशब्देनविशेषणात्तदंतविधिः दिवोनाम्नः उःस्याद्रसेपदांतेच तदंतेविमलद्युइतिवांताः ॥चतुरामूशौच नाम्नश्चतुर
शब्देनविशेषणात्तदंतविधिः चकारेण पंचस्विति संबध्यते चतुरित्यविभक्तिकोनिर्देशः तदंतेप्रियचत्वाः चतेरुरित्युर् प्रत्ययेचतुर्शब्दः ईमावितीं
कारेतु नस्संख्यायाः नाम्नोरकारेणविशेषणात्तदंतविधिस्तेनांतग्रहणंणत्वंरहाद्यपोद्विरितिद्वित्वंचतुर्णांग्रक्ष्विंतिसूत्रेरकारपठनान्नविसर्गः
प्रियाश्चत्वारः पुरुषाः प्रियाणिचत्वारिकुलानिवायस्याःसास्त्रीप्रियचत्वाः तदंतत्वादाम् हेप्रियचत्वइत्यत्र धावमि स्वम् गौणत्वेतुनुड्न गौणत्वेरेफांत
संख्यायाआमोनुडनअन्यपदार्थवृत्तित्वेनसंख्याभिधायित्वाभावात् प्राधान्येभवत्येव परमचतुर्णांइतिरान्ताः कमलजलपद्मयोरितिविश्वः

उरसे दिवउदादेशो भवतिरसे पदान्तेचसुद्युभ्यांसुद्युषु इतिवांताः चतुरनित्यं बहुवचनांतः चतुराम्शौचच
तुरशब्दस्यागमो भवति पंचसु शौचनत्वीति चत्वारः चतुरः चतुर्भिः रस्संख्यायाः रेफांतसंख्यायाःपरस्यामोनुडा-
गमोभवति णत्वं द्वित्वंच चतुर्णांचतुर्षु प्रियाःचत्वारः प्रियाणिवाचत्वारि यस्यासौ प्रियचत्वा : हे प्रियचत्वः प्रियचत्वा
रौ प्रियचत्वार प्रियचतुरः गौणत्वेनुड्न स्वार्थावच्छिन्नपरा र्थावलम्बनं गौणत्वंप्रियचतुरां इतिरांताः कमलं कमलावाआच
क्षाणःकमल् कमलौ कमलः फल्फलौफल्भ्यांइतिलांताः मोनोधातोःमांतस्य धातोर्मस्य नोभवतिझसे पदांतेचवमयो
श्च प्रशान् प्रशामौ प्रशामः प्रशान्भ्यां प्रशान्सु कः कौकेशेषंसर्ववत् ॥ ॥

कमला श्रीर्हरिप्रियेत्यमरः कमलं
कमलांवाऽऽचक्षाण इतिनाम्नोञिर्ङिदितिञिप्रत्ययःञ्यंतात् क्विपिञेरितिञिलोपः कमल्षत्वं कमल्षु फलमाचक्षाण इति फल्तोयमाचक्षाण इ
त्यादौतुयवयोर्वसेइतियलोपेनोर्इतिस्याद्तोयांतेनिक्तः इतिलांताः मोनोधातोःमांतस्यधातोर्नः स्यात्झसेपदातेचवमयोश्च
मांतस्यधातोर्नकारादेशः स्यात्वकारेमकारेचपरेषष्ठ्यानिर्दिष्टत्वादंत्यस्यादेशः सिप्रत्ययेपरत्वान्नकारेकृतेसिलोपः प्रशानित्यत्रनाम्नोनोलोपशिति

नलोपोननत्वस्यासिद्धत्वात् यद्वानाम्नोनइतिसूत्रेपूर्वमेवोपपादितत्वात् शमुउपशमे क्विप् मोनोधातोरितिनत्वम् अमांतस्येतिदीर्घः प्रशाम्यतीतिप्रशान् वमयोस्तुचक्षणवदेच
क्षणमृदृपदांतेचअशांशान् अचंस्कन् पदांतेकिंप्रशामोधात्वधिकारादेवधातोरितिलभ्यमानेपुनर्धातुग्रहणान्नामधातोर्नअयमिवाचरनूइदान् प्रशान्स्यामि
त्यादौनश्चेतिनकारस्यानुस्वारेविशेषाभावात् सामर्थ्याच्चनानुस्वारः कायतेर्डिमितिडिम्प्रत्ययेनिष्पन्नः किम्शब्दः त्यदादेरित्यत्वेकृतेसर्वशब्दवद्रूपम् इदमो
यंपुंसिसावित्यनुवर्ततेसौसइत्यतः सिलोपेअयम् पुंसिकिम् इदम् नन्वत्रलुकिनतन्निमित्तमितिपरिभाषयानभविष्यतिसत्यंतस्याअनित्यत्वज्ञापनार्थम् पुं
सीतितेनप्रियतिसृइत्यादिसिद्ध्यतिइदं ः कमिर्नलोपश्चेतिकम् प्रत्ययेइदम् शब्दः दस्यमः त्यदादेर्दस्यमः स्यात्स्यादौविभक्तौस्यादौकिम् अस्यापत्यमैदमः

इदमोयंपुंसिइदमः पुंसिसावयंभवतिअयं दस्यमः त्यदादेर्दकारस्यमत्वम्भवतिस्यादौइमौइमेत्यदादेस्सम्बोधनाभावः इमंइमौ
इमान् अनटौसोः इदमोऽनादेशोभवतिटौसोः परयोः अनेन स्मिंसकारेभकारेचपरेइदमोऽकारोभवतिहलन्तस्य अद्भिः आभ्यां
भिस्भिस्इदमदसोर्भिस्भिसेवभवतिनमकारस्याकारः एभिः अस्मै अस्मात् अस्य अनयोः एषाम् अस्मिन् एषु इदमेतदोर
न्वादेशेद्वितीयाटौस्स्वेनद्वाएनम् एनौ एनान् एनेन एनयोः किंचित्कार्य्यंविधातुसुपात्तस्यकार्य्यान्तरंविधातुंपुनरुपादानम
न्वादेशः ॥ ॥

अमुमिच्छतीत्सदस्यतिननुद्वावित्यत्रकस्मान्मत्वंनद्यणुस्यादाविति दस्यविशेषणं अर्थवशाद्विभक्तिविपरिणाम इत्युक्त्वा
त् स्यादिपरस्यदस्येत्यर्थः येननाव्यवधानंतेनव्यवहितेपिउक्तत्वादकारव्यवधानेसतिनचद्विव्यवधाने क्वचित् द्वयोरितिनिर्देशाद्वानत्यदाद्यत्वेमत्वेऔ
त्वेचइमौत्यदादेः संबोधनंनास्तीत्युत्सर्गः प्रचुरप्रयोगादर्शनमेवात्रमूलंभाष्येतुहेसइत्युक्तं अनटौसोः इदमोयमित्यत इदम इत्यनुवर्ततेटेनेतीनादेशे अ
नेनस्मि स्वभश्च अनयोःसमाहारः स्भ् तस्मिन् स्मिसकारभकारादौस्यादौइदम् शब्दस्य अः स्यात् स्भाशितिसुवचंयतः सर्वस्यस्यात् अद्भीत्यात्वेआ
भ्यां भिस् भिस् इदमोऽदसश्चभिस् भिसेवभवति भिसो भिस् विधानंक्य इत्यत्वबाधनार्थं एस्मीत्येत्वेएभिः अदसस्तु अमीभिः इदमेतदोरन्वादेशेद्वि
तीयाटौस्स्वेन द्वावक्तव्यः द्वितीयायांटौसोश्च परतोऽन्वादेशे इदमेतदोरेनदादेशोवास्यात् अन्वादेशमाह किंचित्कार्यं विधातुसुपान्तस्य गृहीतस्यशन्

ब्दस्य कार्य्यांतरं विधातुं बोधयितुं पुनरुपादानं ग्रहणं सोन्वादेश उच्यते ईषदर्थे क्रियायोगे मर्य्यादाभिविधौ च यः एतमातं ङितं विद्यात् इत्यत्र तु ईषदर्थादयो न विधीयंते किंत्वनूद्यंते इति नात्रैनदादेशः एवं नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय इत्यत्रापि भीरुत्वस्यानुवाद्यत्वं बोध्यम् यथा अनेन पुरुषेण व्याकरणमधीतं पठितं एनं पुरुषं त्वं छंदोऽध्यापय पाठय इति मांताः राजते इति राजा कनृ युवृषि तक्षिराजि धन्विद्युप्रतिदिव इति कनृ प्रत्ययः परत्वान्नोपधाया इत्युपधादीर्घः हसेपः इति सिलोपः ततो नाम्नो नो लोपशिति नलोपः शसि तु अल्लोपः स्वरे इत्यल्लोपे कृते श्चुत्वं जञोर्ज्ञः उभयोर्योगे ज्ञ इत्यक्षरं भवति राज्ञः नस्य लोपशि न विभक्तिकार्यं पंचस्विति ज्ञापकात् अतो राजभ्यामित्यत्राद्दीत्याात्वं राजभिरित्यत्र भ्य इत्यत्वं राजभ्य इत्यत्रे-

यथाऽनेन व्याकरणमधीतं एनं छंदोऽध्यापय नोपधायाः नाम्नो नो लोपशधौ राजा राजानौ राजानः हे राजन् अल्लोपस्वरेऽम्व सुक्तान्छसादौ श्चुत्वं जञोर्ज्ञः जकारञकारयोर्योगे ज्ञो भवति राज्ञः राज्ञा राजभ्यां नलोपाशि न विभक्तिकार्य्यं पञ्चस्विति ज्ञापकात् राजभिः वेड्योः राज्ञि राजनि राज्ञोः राजसु एवं वृषादयः यज्वनः यज्वना आत्मनः आत्मना प्रतिदिवा प्रतिदिवानौ अल्लोपे कृते य्वोर्वि हसे धातोरिदुतोदीर्घो भवति रेफवकारयोर्हस्परयोः प्रतिदीव्नः प्रतिदीव्ना प्रतिदिवभ्यां ॥ ॥

स्त्रीत्वैत्वं च न वेड्योरिति चोपधालोपे राज्ञि राजनि वृषा इन्द्रः कन्नंतः इष्वानिति यज्वा क्विप् वनिप् ड्वा इति वनिप् प्रत्ययः अम्वयुक्तादिसुक्तत्वान्नोपधालोपः आत्मनः अततीत्यात्मा अतेर्मनिण् इति मनिण् प्रत्ययः अम्वयुक्तादित्युक्तत्वान्नोपधालोपः आत्मनः सुष्ठु धर्म्मो यस्यासौ सुधर्मा धर्मादित्यन् अम्वयुक्तादित्युक्तत्वान्नोपधालोपः सुधर्मणः प्रतिदीव्यतीति प्रतिदिवा कन्नंतः शसि अल्लोपः स्वरे इत्यल्लोपे कृते य्वोर्विहसे र् च व् च अनयोः समाहारो र्व् तस्मिन् र्वि रेफवकारयोः परतः पदांते च धातोरिकारोकारयोर्दीर्घः स्यात् कीदृशयोः हसः परो ययोस्तौ हस्परौ तयोर्हस्परयोः प्रतिदीव्नः नाम्नो न इति नलोपे प्रतिदिवभ्याम् ॥ ॥ छ छ

छ छ छ छ छ

श्वादेः श्वयुवमघोनां वउः स्यात् शसादौ स्वरे ईपि प्रत्यये ईमाविति कारे च प्रातिपदिकग्रहणे लिंगाभिधायिस्त्रीप्रत्ययविशिष्टस्यापि ग्रहणमि
तिपरिभाषा विभक्तिनिमित्ते कार्येन प्रवर्तते अतो युवतीः पश्येत्यादौ नोत्वं अकारसहितस्य वसो त्वं श्वा कुक्कुरः युवा तरुणः युवन् शब्दे वस्योत्वे
कृते दीर्घत्वम् यूनः मघवा इन्द्रः वस्योत्वे ओत्वे च कृते मघोनः अर्वणस्त्वसावनञः ननु ऋधातोर्विप्रत्यये गुणे च अरिति रूपं तस्माद्वतु प्रत्यये अर्व
तावित्यादि सेत्स्यति ऋधातोरेव वनिप् प्रत्यये त्वनर्वेति सेत्स्यति रूढिशब्दश्चायं वाजिवाहार्वगंधर्वहयसैंधवसप्तयः इत्यमरोक्तत्वात् तश्चार्थोपि न
भिधते किमनेन सूत्रेणेति चेत् उच्यते नांततांतयोः सर्वत्र प्रयोगे प्राप्ते सौ परे नञ्युपपदे च नांतस्य प्रयोगोऽन्यत्र तु तांतस्य प्रयोगो भवतीति व्यवस्था

श्वादेः श्वादेर्व उत्वम्प्राप्नोति शसादौ स्वरे ईपी कारे च शुनः शुना श्वभ्यां यूनः यूना युवभ्यां मघवा मघवानौ मघवानः
मघोनः मघोना अर्वणस्त्वसावनञः नञा रहितस्यार्वन्नस्य तृ इत्यन्तादेशः स्यान्न तु सौ ञितो नुम् उकारानुबन्धस्य ऋ
कारानुबन्धस्य नुमागमो भवति पुंसि पंचसु अर्वंतौ अर्वन्तः अर्वन्तम् अर्वन्तौ अर्वतः अर्वता अर्वद्भ्याम् अनञः किम् अनर्वाणौ
असौ किम् अर्वा इतो सं च सु पथिन् मथिन् ऋभुक्षिन् शब्दानामिकारस्याकारादेशो भवति पुंसि पंचसु शौ च ॥ ॥

र्थं सूत्रम् ञितो नुम् उश्च आच्च वरौ वरावितौ यस्य स ञित् तस्य ञितः उदितः ऋदितश्च नुम् स्यात् सोनः पुंस इत्यतो मंडूकप्लुत्या पुंस इत्यनुवर्तते तेन पुंसि
पंचस्वित्यर्थः धातोर्नऽलोपिनोऽञ्चतेरेव अंचेर्दीर्घश्चेत्यतो चेरित्यत्र भक्तु ते तत्रैव वांचेरिति विभज्य पंचस्विति नुमिति चानुवर्तते अंचेरिति निर्देशात्
नलोपिनो ग्रहणम् धातोश्चेद् ञित् कार्यं तर्हि अंचतेरेवेति नियमार्थमिदं तेन स्रंसादीनामीपनुमौ न ऋदित्वान्नुम् अर्वतौ नञ्तत्पुरुषे तु न अर्वा अन
र्वा यज्ववत् इतो सं च सु पथ्यादेरित्यतः पथामित्यनुवृत्तं पथ्यादेरितोऽत् स्यात् पुंसि पंचसु शौ च शौ सुपंथानि पुंसि किं सुपथी पतस्यश्चेति चादिन्प्रत्य
यः पथिन् मंथते: किन् प्रत्यये मथिन् शब्दः ऋभुक्षः स्वर्गवज्रयोः ततोऽस्त्यर्थे इन् प्रत्यये ऋभुक्षिन् ॥ ॥

थोनुट् पथ्यादेस्थस्य नुट् स्यात् पुंसि पंचसु शौ च थस्येति किम् ऋभुक्षाः पुंसि किम् सुपथि आसौ पथां टेरिति पदद्वयमनुवर्तते पथ्यादेष्टेरात्स्यात्
सिप्रत्यये सौ किं पथिभ्यां पथीटेः पथ्यादेष्टेर्लोपः स्यात् स्य सादौ स्वरे ईपी कारे च पथामितिबहुवचनमाद्यर्थे स्त्रियां न्वणइतीप् ततष्टिलोपः सुष्ठु
पंथा यस्याः सा सुपथी रथ्या ऋक्पूरित्य प्रत्ययो न नपूजने इति निषेधात् क प्रत्ययस्तु समासांतविधेरनित्यत्वान्न सुष्ठु मंथाः यस्यां सा सुमथी नगरी
न विद्यते ऋभुक्षाः इंद्रो यस्यां सा अनृभुक्षी सेना क्लीबे सुष्ठु पंथाः यस्मिन् तत् सुपथि आत्वं त्वत्र न लुकि न तन्निमित्तमिति निषेधात् धौ नपुंसका-
नां नस्य लोपो वा हे सुपथि इत्यत्र नलोपस्यासिद्धत्वात् स्कृणामिति गुणो न द्विवचने पथामिति टिलोपः सुपथी शौ त्वत्वे नुटि च दीर्घत्वं सुपंथानि किं च पंथा
नमात्मन इच्छतीति पथीयति ततः क्विप् यतइत्यल्लोपः यवयोरिति यलोपः एकदेशविकृतस्य नन्यत्वादासावित्यात्वं थो नुडिति नुट् पंथाः अ

थोनुट् पथिमथोस्तस्य नुट् स्यात् पुंसि पंचसु शौ च आसौ पथिमथिऋभुक्षां टेरात्वम्भवति सौ पंथाः पंथानम् पथां
टेः पथिमथिऋभुक्षां टेर्लोपो भवति शसादौ स्वरे ईपीकारे च पथः पथा पथिषु एवम्मंथाः स्त्रियां नांतत्वादीप् सुपथी सुम-
थी अनृभुक्षी सेना क्लीबे शोभनः पंथाः यस्मिन् वने तत् सुपथि वनं धौ नपुंसकानां नस्य लोपो वा हे सुपथिन् हे सुपथि सुपथी
सुपंथानि इनांशौसौ इन् हन् पूषन् अर्यमन् इत्येतेषां शौ सौ चाधौ परे उपधाया दीर्घो भवति नान्यत्र दंडी हे दंडिन् दंडिनौ दंडि
नः एवं कलिन् हलिन् यशस्विन् वाग्मिन् प्रभृतयः वृत्रहा वृत्रहणौ वृत्रहणः ॥ ॥

त्वं तु न इन इति तपरकरणात् स्योर्धातो
रितीयृ पंथियौ एवं ऋभुक्षाः ऋभुक्षियौ इनांशौसौ बहुवचनमाद्यर्थे अर्थवत्परिभाषाया अनित्यत्वादर्थवतो अनर्थकस्यापी नोत्र ग्रहणं उपधाया इ
त्यनुवर्तने अधाविति च नोपधाया इत्यनेनैव सिद्धे नियमार्थमिदं तदाह इनादीनामुपधायाः शावेव दीर्घः स्यान्नान्यत्रेति उपधादीर्घस्यैवायं नियमः
तेन वृत्र हेवाचरतीति वृत्रहायते कर्तुर्यङ् इत्यत्र येइति दीर्घो भवत्येव वृत्रहणीत्यत्र अमस्य क्वि तिझसे इति यो दीर्घः सोपि नियमेन व्यावर्त्यते उपधा-
दीर्घमात्रापेक्षया नियमविधानादिति सावितितु विध्यर्थम् पूर्वेण सावप्राप्तेर्योगविभागाभिप्रायेणैव शौसाविति निर्देशोस्ति अन्यथा शिस्योरित्ये

त्येवा वक्ष्यत् ननु पंथाइवाचरतीति पथीनति क्विप्इत्यादौ यमांतस्येत्युपधादीर्घो न प्राप्नोति पथ्यादीनामिन्नंतत्वात् इन्नादीनां शौ सावेवेत्युपधा-
दीर्घस्य नियमादितिचेत् उच्यते यत्र इनामिति सूत्रं प्रवर्ततेतत्रैवायं नियमः यथा दंडीवाचरतीति दंडीनति क्विप् वृत्रहणाति पूषणति अर्यमणति इ
ति दंडोस्यास्तीति दंडी मांतोपधादितीनू शौ बहवो दंडिनः संतियेषांतानि बहुदंडीनि मुशलमस्यास्तीति मुशली हलमस्यास्तीति हली रेवतीरम
णोरामः कामपालो हलायुधः इत्यमरः यशोऽस्यास्तीति यशस्वी विनू वागस्यास्तीति वाग्मी ग्मिन् वृत्रं हतवानिति वृत्रहा क्विबंतः वासवो वृत्रहा वृषे
त्यमरः अवकुपंतरेपीति णत्वं वृत्रहणौ हनोघ्नेहनः घ्ने इति च्छेदः आदिस्वरस्येत्यतो ञ्णितीत्यनुवृत्तं ञिति णिति प्रत्ययेनकारेचपरे हंतेर्हस्य धः स्यात्

हनो घ्ने हन्तेर्हकारस्य घो भवत्यव्यवधाने नकारे ञ्निति णिति च परे घसंयोगेणत्वं न वृत्रघ्नः वृत्रघ्ना वृत्रहभ्याम् एवम्पूष
न् अर्य्यमन् संख्याशब्दाः पंचन् प्रभृतयो बहुवचनांतास्त्रिषु सरूपाः जश्शसोर्लुक् पंचपंचभिः पंचभ्यः २ ष्णः षकार न-
कारांत संख्यायाः परस्यामो नुडागमो भवति पंचानां परमपंचानां गौणत्वेनलुग्नुटौ प्रियपंचाप्रियपंचानौ प्रियपंचानः प्रि
यपञ्च्ञः प्रियपञ्चा एवंसप्तन नवन् दशन् प्रभृतयः ॥ ॥

अल्लोपः स्वरे इत्यल्लोपे घत्वेन कृते अवकुपंतरे इति णत्वे प्राप्ते आह
घसंयोगेणत्वं न घकारात्परस्य णत्वं न भवति वृत्रघ्नः वृत्रघ्ना पूषा सूर्यः अर्यमा रविः जश्शसोर्लुक् संख्याया इति ष्ण इति चानुवर्तते संख्यायां किम्
विप्रुषः पामानः ष्ण इति किम् चत्वारः शतानि सहस्राणीत्यत्र संनिपातपरिभाषया जस्शसोर्लुग् न तथा हि सन्निपातलक्षणो विधिरनिमित्तं त
द्विघातस्य संनिपतनं संनिपातः आनंतर्यं सन्निपातो लक्षणं कारणं यस्य स संनिपातलक्षणो विधिस्तद्विघातस्य कारणविघातस्यानिमित्तं न प्रयो
जकः यमुपजीव्य यो विधिः प्रवृत्तः स तस्योपजीव्यस्य विरोधं न करोतीति परिभाषार्थः शिमाश्रित्य प्रवृत्तो नुम् शेर्विघातकोनष्णः षू च नू चानयोः स-
माहारः ष्णू तस्मात् ष्णः संख्याया इत्यनुवर्तते ष्ण इति तस्या विशेषणं विशेषणेन तदंतविधिः संख्या इति किं त्विषां यज्वनां ष्ण इति किं त्रिंशतां पंचा
शतां नलोपे नोपधाया इति दीर्घे च पंचानाम् प्राधान्ये परमाश्च ते पंच च तेषां गौणत्वेन लुग्नुटौ गौणे ष्णांत संख्यायाः जश्शसोर्लुक् नामि तु नुट् न सं

ख्यावाचित्वाभावात् प्रियाः पंच यस्य स प्रियपंचा आमि प्रियपञ्चानां अकारद्वयमध्ये चकारः अष्टनो डौ अष्टन इत्येकवचनं तु त्रेरितिवत् अल्लोपः स्वरे इत्यस्याप्रवृत्तिश्चिंत्या जश्शसोरित्यनुवर्तते वास्मिति वाशब्द उभयत्र संबध्यते काकाक्षिगोलकन्यायेनेति ननु षष्ठीनिर्दिष्टत्वादंतस्य डौ भवति न चाने कवर्णत्वात्सर्वादेशः स्यात् नानुबंधकृतमनेकवर्णत्वमित्युक्तत्वात् उच्यते ङित्वसामर्थ्यान्नोक्तदोषः तथाहि अंत्यादेशे सति जसि अष्टनाविति शसि-अष्टनाविति प्राप्नोति तच्चांतरेण ङित्वं सिद्धं अतो ङित्करणसामर्थ्यात् सर्वादेशः लुकोपवादोयमिति सर्वादेशः वा डौ शितिसुवचनं डौत्वं हि लुग्गुणादिविव प्राधान्ये एव भवति न तु गौणत्वे सप्यश्भ्यां तुड् चेत्यनेन सप्तन् अष्टन्शब्दौ निष्पन्नौ वासुभीत्य प्रकृष्यते तेन स्यादयो विशेष्यं तेवा आ आसु इति छेदः स-

स्मी ५

अष्टनो डौ अष्टन्शब्दात्परयोर्ज्जश्शसोर्वा डौ भवति अष्टौ अष्ट अष्टौ अष्ट वासु अष्टनस्सकारभकारादिषु विभक्तिषु वात्वम्भवति अष्टाभिः अष्टभिः अष्टाभ्यः अष्टभ्यः २ अष्टानां प्रियाअष्टौ यस्या सौ प्रियाष्टा प्रियाष्टानौ प्रियाष्टानः प्रियाष्णः प्रियाष्णा प्रियाष्टाभ्यां प्रियाष्टोष्ण शजवत्सप्ताष्वहाव चापरं हसौ सुगण् सुगणौ सुगणः सुगणं सुगणौ सुगणः सुगणट् सुभुत् भुद्बुधौ बुधः भुद्भ्यां भुत्सु राक् राग् राघौ राघः राग्भ्यां राक्षु सु ककुप् सुककुब् सुककुभौ सुककुभः सुककुभं सुककुप्सु ॥ ॥ कारभकारादौ स्यादौ परे अष्टन आत्वं वा भवतीति फलितोर्थः इत आरभ्य संख्याया इति निवृत्तम्व्या-ख्यानात् तेन गौणत्वेपि स्यादात्वम् स्यादाविति किं अष्टभार्यः अष्टसेवकः भीति किं प्रियाष्टानौ प्राधान्ये परमाष्टौ गौणत्वे प्रियाअष्टौ यस्य स प्रियाष्टा आत्वाभावे राजवत् शसि अल्लोपः स्वरे इत्यकारलोपे कृते ष्टुभिष्टुरिति णात्वं प्राप्तमसिद्धं बहिरंगमंतरंगे इति परिभाषया न शसु निमित्तकत्वेन बहिरं गस्याल्लोपस्यासिद्धत्वात् पूर्वंपूर्वमंतरंगमिति स्वीकारात् आत्वपक्षे प्रथमैकवचने प्रियाष्टाः हाहाशब्दवत् प्रियाष्टन् शब्दस्याऽऽत्वाभावपक्षे सर्वं रूपं राजवत् आत्वपक्षे तु हसादावपररूपं हाहावत् इति नांताः सुष्ठु गणयतीति सुगण् गणयतेर्विण् प्रत्ययः शसेङ्नोरिति ड्कि सुगणट् सुशसे चपस्येति द्वितीये सुगणङ्षु टनादिति धुटि सुगणङ्सु क्विप्प्रत्यये तु सुगाण् अमस्यकि । ति इति दीर्घे कर्तव्ये अल्लोपणिलोपयोः स्थानिवद्भावो न शं

स्यः दीर्घविधौ तन्निषेधात् इतिणान्ताः बुध्यतेः क्विप् आदि जबानामितिभः जबत्वचपत्वे भुत् भुद् जबत्वे भुद्भ्याम् चपत्वे भुत्सु इतिधांताः राघृ-
सामर्थ्येराघतेइतिराक् क्विबंतः इतिधांताः सुष्ठु ककुप् यस्मिन् स सुककुप् दिशस्तु ककुभः काष्ठाइत्यमरः इतिभांताः युजेः पंचसुनुम् नसमासेइति
चयुजिर् योगेइत्यस्यधातोः पंचसु स्यादिषु नुम्स्यान्नतु समासे युजेरितिधातुपाठपठितेकारविशिष्टस्यग्रहणं नतुनिर्देशेयइक् तस्यतेनेहनुम्
नयुज्यते समाधत्तेइतियुक् युजसमाधौदैवादिकआत्मनेपदी दिशांबहुवचनमाद्यर्थं तेनदिश् १ दृश् २ स्पृश् ३ दधृष् ४ ऋत्विज् ५ क्रुंच् ६ युंज् ७
स्रज् ८ अंच् ९ उष्णिहो १० गृह्यंते दिश् दृश् स्पृश् दधृष् ऋत्विज् स्रजां षत्वे प्राप्ते क्रुंचयुज् अंचा मप्राप्ते उष्णिहो दत्वे प्राप्ते अयं कुत्वविधिः कुरित्य

युजेः पंचसुनुम् समासेइतिच दिशाम् दिश् दृश् स्पृश् दधृष् ऋत्विज् क्रुंच युंज् स्रज् अंच् उष्णिहादीनां कुत्वंस्यादौ
रसे पदान्ते च संयोगान्तस्यलोपः युङ् युञ्जौ युञ्जः युञ्जम् युञ्जौ युजः युजा युग्भ्याम् समासे तु सुयुक् चोः
कुः चवर्गस्य कवर्गोभवतिधातोर्झसे नाम्नश्च रसे पदान्ते च समाध्यर्थस्य नुम्न युक् खन् खंजौ खन्भ्याम् खन्सु छ
शषराजादेः षः सम्राट् सम्राड् सम्राजौ सम्राजः देवेट् देवेड् देवेजौ देवेजः परिमृट् परिमृड् परिमृजौ परिमृजः विश्व
सृट् विश्वसृड् विश्वसृजौ विश्वस्यवसुराटोर्दीर्घः विश्वावसुः विश्वाराट् विश्वराजौ विश्वाराड्भ्याम् विश्वाराट्सु विश्वा
राड्त्सु ॥ ॥ नुवर्ततेचोः कुरित्यतः युनक्तीति सिलोपे संयोगांतलोपे चनस्यकुत्वे नानुना सिकोङः कारः युङ् नश्चापदांतेइतिनुमोनुस्वा
रे परसवर्णः तस्यासिद्धत्वाच्चोः कुरितिकुत्वं नयुजौ समासेतु सुष्ठुयुनक्तीति क्विप् अत्रननुम् चोः कुः रसे किम् त्वचौ नाम्नः किम् वच्मि पदांते
किं वाचिधातोर्झसेयथा वक्ता झसे किं वच्मि कुत्वे सुयुक् समाध्यर्थस्य युजेर्नुम्न युक् खंजतीतिखजिगतिवैकल्ये क्विबंतः संयोगांतलोपेखन्
संराजतेइति षत्वे जबत्व चपत्वेच सम्राट् देवान् यजतीति क्विपि यजादित्वात्संप्रसारणे एत्वेचदेवेट् विश्वंसृजतीति विश्वसृट् क्विबन्तः दिशामि
ति कुत्वंनसृजितिसूत्रेरज्जुसृड्भ्यामितिभाष्यप्रयोगात् यद्वा सृजियज्योः कुत्वापवादः षत्वविधिरेवस्वक्रुत्रत्विक् शब्दयोस्तु दिशामित्यनेनकुत्व

मेव परिमार्ष्टीति परिमृट् विश्वस्य वसुराटोर्दीर्घः विश्वशब्दस्य दीर्घः स्यात् वसुशब्दे राट् शब्दे च परे विश्वं वसु द्रव्यं यस्य स विश्वावसुः राडिति ड
शब्दस्य स्वरूपोपलक्षणम विवक्षितं षत्वं विश्वास्मिन् राजते इति विश्वाराट् स्कोराद्योश्च आदिशब्दस्याऽवयववाचित्वेन संबंधित्वादवयव्याकां
क्षायां नाम्नो धातोश्चेति संबध्यते संयोगांतलोपापवादः झसे त्वपूर्वो विधिः झसे भ्रष्टापदांते अवाभ्रट् आद्योः किं धक्ष्यति नक्ष्यतीति भृज्जतीति क्वि
प् ग्रहामिति संप्रसारणं सो परत्वात् षत्वे स्कोरिति सलोपे च सिलोपः भृट् सस्य चुत्वेन शः शस्य झबे जबा इति जः भृज्जौ वृक्षं वृश्चतीति क्विपि ग्रहा-
मिति संप्रसारणं छशषेति षत्वं स्कोरिति सलोपः जबत्वचपत्वे वृक्षवृट् वृक्षवृड् सुपि टनादिति धुट् ततश्च षत्वं वृक्षवृट्सु चांतेषु वक्तु सुचितः

स्कोराद्योश्च संयोगाद्योः सकारककारयोर्लोपो भवति धातोर्झसे नाम्नश्च रसे पदांते च भृट् भृड् भृज्जौ भृज्जः वृक्षवृट्
वृक्षवृड् वृक्षवृश्चौ विभ्राट् विभ्राड् विभ्राजौ विभ्राड्भ्याम् विभ्राट्सु ऋत्विक् ऋत्विग् ऋत्विजौ ऋत्विक्षु ऊर्क् ऊर्ग्
ऊर्जौ ऊर्क्षु तः त्यदादेस्तस्य सत्वं भवति सौ परे स्यः त्यौ त्ये सः तौ ते परमसः संज्ञायां गौणत्वे चात्वसत्वे न त्यत् त्यद् त्यदौ
अतित्यत् अतित्यद् अतित्यदौ यः यौ ये एषः एतौ एते ॥ ॥

विशेषेण भ्राजते इति विभ्राट् ष
त्वविधौ राजिसाहचर्यात् भ्राजृ दीप्ताविति फणादिरेव गृह्यते यस्तु राजृ भ्राजृ दीप्ताविति तस्य कुत्वमेव विभ्राक् विभ्राग् विभ्राग्भ्यामित्यादि
ऋतौ यजतीति ऋतावुपपदे यजेः क्विप् यजादित्वात्संप्रसारणं कुत्वं ऋत्विक् ऊर्ज बलप्राणनयोः अस्माच्चुरादिर्ण्यंतात् क्विपि णिलोपः ऊर्ज्जयती
ति सामिन्नस्येति नियमात् न संयोगांतलोपः ऊर्क् इति जांताः ॥ तः त्यदादेरित्यतः त्यदादेरिति सौ स इत्यतः स इति साविति चानुवृत्तं त्यदादेः कि
मूतातः प्राधान्ये परमसः संज्ञायां गौणत्वे चात्वसत्वेन अत्वसत्वयोः सर्वाद्यंतर्गणकार्यत्वादत्वं सत्वं च संज्ञायां गौणे च न प्रवर्तते संज्ञायां न तृ त्यदौ
गौणे त्यमतिक्रांतोऽतित्यद् ॥ छ छ छ छ छ
छ छ छ छ छ

इदमे तदोरित्यन्वादेशो एनदादेशः एनमित्यादि इतिदांताः अग्निं मंथतीति क्विपि नलोपइति नलोपः अग्निमत् इतियांताः प्रत्यंचतीत्यत्रांचेः
क्विपि कृते नोलोपः हसांतस्येति किम् नीयतेउपधाभूतस्येति किम् हन्यते पूजार्थांचेतेर्न पूजार्थवाचिनोंऽचतेरुपधाभूतस्य नस्य लोपो न भवति कि
ति डिःतिच निरुपपदात् कुंचेःक्विपि न निर्गतउपपदेभ्यः निरुपपदस्तस्मात् उपपदरहितस्य कुंचे रुपधाभूतस्य नस्य लोपो नभवति क्विपि क्रुंचकौदिल्या
ल्पीभावयोः अंचेः पुंसि पंचसुनुम् गत्यर्थस्यांच तेर्नुमागमः स्यात् पुंसि पंचसु नलोपे पुनर्नुमि कृते प्रत्यन् च् सि इति स्थिते संयोगांतलोपे सिलोपे च नुमो
नकारस्य दिशामिति कुत्वेन ङकारः प्रत्यङ् अनुस्वारसवर्णो प्रत्यञ्चौ अचेदीर्घश्च लुप्तनकारस्यांच तेरतोलोपो भवति ईपि ईकारे च प्रतीची तद्धितयस्व

अन्वादेशे एनम् एनौ एनान् एनेन एनयोः अग्निमत् अग्निमद् अग्निमथौ अग्निमद्भ्याम् अग्निमत्सु प्रत्यञ्चतीति क्वि
पिकृते नोलोपः धातोर्हसान्तस्योपधाभूतस्य नकारस्य लोपः क्वि तिपरे पूजार्थांच तेर्न्न निरुपपदात् क्रुंचेः क्विपि क्रुङ् क्रु
ञ्चौ क्रुङ्भ्याम् क्रुङ्क्षु क्रुङ्षु क्रुङ्ख्षु अंचेः पुंसिपंचसुनुम् दिशाम् प्रत्यङ् प्रत्यञ्चौ प्रत्यञ्चः प्रत्यञ्चम् प्रत्यञ्चौ अचेर्दी
र्घश्च नलोपे च तेरकारस्य लोपः पूर्वस्य च दीर्घः शसादौ स्वरे परे तद्धितयस्वरयोरीपीकारे च प्रतीचः प्रतीचा प्रत्यग्भ्याम् प्रत्य
क्षु तिर्य्यङ् तिर्य्यञ्चौ तिर्य्यञ्चः ॥ ॥

रयोः प्रतीच्यः प्रतीचीनः अचे
रिति नायमिक् प्रत्ययः किंतूच्चारणार्थोय मिकारः नलोपि निर्देशो ज्ञापकः इकः कित्वान्नालोपे कृते ऽचेरित्यस्योक्तार्थे ज्ञापनात् ननु पूर्वस्ये-
ति कस्माल्लभ्यं उच्यते दीर्घश्रुत्यापस्थितः स्वर एवात्र स्थानी शसादौ स्वरे इति लोपदीर्घयोर्निमित्तं सप्तमी निर्देशात् पूर्वस्याऽव्यवहितस्य स्वरस्य-
दीर्घे प्राप्ते येन नाव्यवधानं तेन व्यवहिते ऽपीति वचनप्रामाण्यात् चकारेण व्यवहितस्याप्यत्र दीर्घः अचेरिति लोपस्य ऽविषये ऽतरंगोपीयमितिय
कारोन अकृतव्यूहा इति परिभाषया प्रतीचः तिरोऽचतीति सहादेरिति तिरसस्तिरिः तिर्यङ् ॥ ॥ छ छ

तिरश्चादयः सिद्धरूपनिर्देशो निपातनं एते निपात्यंते ईपि ईकारेच तिरश्ची तद्धितस्यस्वरे यकारेच तिरश्चीनः उदीच्यः तिरश्चादिरितिसूत्रणीयम्
आदिशब्दादुदीच इतिबहुवचनं तु व्यर्थं तृतीयस्याभावात् पदादयः षोडशादेशाः नतु पृथक् शब्दाइतिपक्षाश्रयणे तुवचनस्य सार्थक्यं बोध्यम्
उदंचतीतिउदङ् ऋतोदीर्घोन ऋकारस्यदीर्घोनभवति लुप्ताकारनकारेंचतौ परे पित्रचः सहांचतीतिसहादेरितिसहस्यसध्रिः सध्र्यङ् समंच
तीति सहादेरितिसमः समिः सम्यङ् प्रकर्षेणांचतीति प्राङ् पूजार्थस्यांचतेस्तुप्रत्यंचति पूजयतीति क्विपि पूजार्थांचतेरिति नलोपाभावः अतए
वनुम् नप्रत्यङ् शसिनलोपाभावादकारलोपो नप्रत्यंचः सुपिप्रत्यंच्सु इति स्थिते दिशामितिकुत्वात् प्राक् संयोगांतस्येति चलोपो नस्य कुत्वेन-

तिरश्चादयः तिरश्चादयोनिपात्यन्ते शसादौस्वरे तद्धितयस्वरयोरीपीकारेच तिरश्चा तिर्यग्भ्याम् तिर्य्यक्षु उदीचः
उदग्भ्याम् उदक्षु पितरमञ्चतीतिपित्रङ् पित्रञ्चौ ऋतोदीर्घोन पितृचः पित्रग्भ्याम् पित्रग्भिः पित्रक्षु सध्र्यङ् सध्रीचः
सम्यङ् समीचः प्राङ् प्राचः पूजायान्तु प्रत्यञ्चः प्रत्यञ्चा प्रत्यङ्भ्याम् प्रत्यक्षु प्रत्यङ्षु प्रत्यङ्खषु उदञ्चः उदङ्भ्याम् ति
र्य्यञ्चः तिर्यङ्भ्याम् तिर्य्यञ्चः तिर्यङ्भ्याम् सम्यञ्चः सध्र्यंचः प्रांचः प्रांचा सहादेस्सादिः असुमुंचतीति असुमुयङ् अ-
मुमुईचः असुमुयग्भ्याम् अदमुयङ् अदद्र्यङ् पूजायांतु असुमुयंचः असुमुयङ्भ्यां अदमुयंचः अदद्र्यंचः मरुद्भ्याम् वि
तानुम् ॥

ङकारेच कृते
शसेङ्णो रितिकुक् षत्वं प्रत्यङ्क्षु शसेचषस्येति पक्षेखकारः प्रत्यङ्खषु कुगभावे प्रत्यङ्षु एवं पूजार्थे तिर्यङ्ङादयः विष्वग् देवयोश्च
टेरद्र्यंचतावप्रत्यये चाददसोग्रहणं अनयोरदसश्चटेरद्र्यादेशः स्यात् वप्रत्ययांतेंचतौ परे असुमुंचतीति विग्रहे अदस् अंच इतिस्थिते अ-
द्र्यादेशे अदद्रि अच् इति यत्वं अदसोसेर्दादुदोमः असेरितिइकारउच्चारणार्थः असकारांतस्यादसो दात्परस्य उदूतौ भवतः दस्य मश्च उ इ
ति ह्रस्वदीर्घयोः समाहरः ह्रस्वव्यंजनयोर्ह्रस्वोदीर्घस्य चदीर्घो भवति असांतस्येति किम् असुमात्मन इच्छति अदस्यति दात्परस्येति किम् अमुया
इत्यत्रांतस्यस्यमाभूत् दकाराकारयोर्दकाररकारयोश्चमुत्वे असुमुयङ् शसि अचेरित्यतोलोपे दीर्घेच असुमुईचः मुत्वस्यासिद्धत्वान्न यत्वं अंत्य-

जश्शसोरिति जश्शसोर्लुक् डत्वम् जबत्व चपत्वे षड् षट् डत्वे षड्भिः आमि ष्ण इति नुटि कृते षस्य डत्वं नस्य च ष्टुत्वं ड्णः डकारस्य च पे घनं तन्भ्रू
तत्वा द पदां तत्वाच्च नमे नमावेत्यस्याऽप्राप्तौ सत्यामारंभः आगमाय ह्रुणीभूताइति परिभाषया नुटः प्रत्ययावयवत्वात् प्रत्ययन्नमे इत्यनेन नमल
स्वीकारे व्यर्थमिदं नादिति धुटि षट्त्सु तदंते प्ययं विधिर्वाञ्छितः परमाश्च ते षट् च परमषट् तेषां परमषण्णां षडर्थ प्राधान्ये एव लुग्नुटौ न तु गौणत्वे प्रियाः
प्रियाणि वा षट् येषां ते प्रियषषः तेषां प्रियषषां दोषांरः जबचपविसर्गाणामपवादः बहुवचनमाद्यर्थं दाम्यतीति दोः दमेर्डोसिति डोस् प्रत्ययः डित्वाट्टि
लोपः भुजबाहू प्रवष्टो दोरित्यमरः पाददंतेति वा दोषन्नादेशः शसादौ अल्लोप इत्युपधालोपः णत्वं दोष्णाः विसर्ग नुम् स्थानिका नुस्वार व्यवधानेपि किलास

जश्शसोर्लुक् षट् षड् ड्णः डकारस्य णो भवति नामि परे षण्णाम् षट्सु षट्त्सु परमषट् परमषड् परमषण्णाम् गौणत्वे तु प्रिय
षट् प्रियषषः प्रियषषां दोषांरः दोषादीनां रो भवति रसे पदान्ते च दोः दोषौ शसादौ वा दोषन् दोष्णाः दोर्भ्याम् दोषभ्याम् विस-
र्गनुम्स्थानिकानुस्वारव्यवधानेऽपि किलात्सरस्य सुस्य षः दोःषु दोष्षु दोषसु ख्योर्विहसे पिपठीः पिपठिषौ पिपठीर्भ्याम्-
पिपठीःषु विविट् विविड् विविक्षौ विविक्षः तट् तड् तक्षौ तक्षः गोरट् गोरड् गोरक्षौ गोरक्षः तक्षिरक्ष्योस्संयोगान्तलोप इत्येके त
क् तग् गोरक् गोरग् २ ॥ ॥

रस्य सस्य षः किलादिति पंचमी निर्देशाद्व्यवहितस्याप्राप्तौ वचनं ए
तत् व्यवधानेपि आभ्यां परस्य सस्य षत्वं सुपः सस्य तु ष्टुत्वं दोष्षु विसर्गपक्षे विसर्ग नुमिति षत्वं दोःषु नाम्नो न इति नलोपे दोषसु नुम् स्थानिकाऽनुस्वा
रेति व्याख्यानान्नेह सुहिन्सु पुंसु पिपठिषतेः क्विपि यत इत्यल्लोपे रुत्वञ्च ढिंतेति स्याद्युसन्नौ पिपठिष् सिइति स्थिते परत्वाद्रेफे रुत्वे सिलोपे च दीर्घः पिपठीः
विश् प्रवेशने अस्मात्सः नानिडिस इति गुणाभावः द्वित्वादि विवक्षते क्विप् स्कोरिति कलोपः जबत्वचपत्वे विविट् विविड् तक्ष् तनूकरणे अस्मात् क्विप् स्कोरिति
कलोपे तट् तड् गां रक्षतीति क्विप् स्कोरिति कलोपे गोरट् तक्षिरक्ष्योः संयोगांतलोप इत्येके स्कोरिति कलोपो न किंतु संयोगांत लोप इत्यर्थः





छ छ छ छ छ छ छ

कलोपेकुत्वमसिद्धं स्कोरिति कलोपे कर्तव्ये चोः कुरिति कुत्वस्यासिद्धत्वं वक्तव्यं अन्यथा स्कोरिति कलोपः स्यादित्यर्थः पक्तुमिच्छतीति पिपक्सं
योगांतलोपः वक्तुमिच्छतीति विवक् दह भस्मीकरणे दादेरिति घः आदिजबानामिति धः दग्धुमिच्छतीति दिधक् इति शांताः पिस गतौ सुष्ठु पेस-
तीति सुपीः तुस खंडने सुष्ठु तोसतीति सुतूः क्विबंतः वेत्तीति विदेर्वा वसुरिति शतृस्थाने वसुः अदादित्वाद पो लुक् अपित्तादिर्ङि दिति ङित्वान्नोपधागुणः
उदित्वान्नुम् न्सम्महत इति दीर्घः संयोगांतलोपस्यासिद्धत्वान्नलोपो न विद्वान् वसोर्वउः अच्चास्थानामित्यतः शसादावितिवादि पो रित्यतः ईई पोरिति चा
वर्ततेन तद्धितयस्वरमतुषु इति च व्याख्यानात् वसुक्वसोर्वकारउकारः स्यात् तद्धिते वैदुषः अण् वैदुष्यम् यण् मतौ विदुष्मान् ईई पोर्विदु षीस स्वरस्य वस्यो

कलोपे कुत्वमसिद्धं पिपग् पिपक् पिपक्षौ पिपक्षः पिपक्षु एवं विवक् दिधक् सुपीः सुपिसौ सुपीःषु एवं सुतूः विद्वान् वि-
द्वांसौ विद्वांसः हे विद्वन् वसोर्वउः वसोर्वकारस्य उत्वम्भवति शसादौ स्वरे तद्धितयस्वरमतुषु ईपीकारे च विदुषः विद्वद्भ्या
म् विद्वत्सु सेदिवान् वस्योत्वे इडभावः सेदुषः सेदिवद्भ्याम् ऊषिवान् ऊषुषः ऊषिवद्भ्याम् शुश्रुवान् श्रुधातोः शुश्रुवुषः शुश्रु-
वद्भ्याम् महच्छब्दसाहचर्याद्धातोर्न्सं गृह्यते नेह न सुहिन् सुहिन्सौ सुहिन्भ्यां सुहिन्सु ध्वत् ध्वंसौ वसौ रसे ध्वद्भ्यां एवं स्नत् पु
सोः सुङ् पुंसोः सुङादेशः पुंसि पंचसु शौ च पुमान् पुमांसौ पुमांसः हे पुमन् पुंसः पुंभ्याम् पुंसु वेधाः वेधसौ हे वेधः वेधोभ्यां
उशनसाम् उशनस्सु पुरुदंसस अनेहसां सेरधेर्डा उशना उशनसौ उशनसः ॥ ॥

त्वं यवराणामिति पृथक् निर्देशात् वसा
मिति दत्वं विद्वद्भ्यां ससादेति सदः क्वसुः द्विश्चेति द्वित्वं पूर्वस्येति हसादिः शेषः लोपः पचामित्येत्व पूर्वलोपौ द्वित्वे सत्येकस्वरादिती इट् उदित्वान्नु-
म् न्सम्महत इति दीर्घः सेदिवान् वस्योत्वे इडभावः निमित्ताभावे नैमित्तिकस्याप्यभाव इत्युक्तत्वात् वकाराभावे इडभावः एवमुवासेति यजामिति संप्र
सारणं णवादौ पूर्वस्येति पूर्वस्य संप्रसारणं दीर्घत्वं घसादेरिति षः ऊषिवान् शुश्रुवेति शुश्रुवान् श्रुधातोरित्युक्त्वा शुश्रुवुषः सुष्ठु हिनस्तीति न्सम्महत इति
सूत्रे महत्साहचर्याद्धातोर्न्सं तस्य न दीर्घः अधातोरित्यनुवृत्तेर्वा ततश्च संयोगांतलोपस्यासिद्धत्वान्नोपधादीर्घः सुहिन् दनादिति वा ध्वद् सुहिनसु ध्वंसते

इतिध्वत् स्रंसुध्वंसु अवस्रंसनेध्वंसुगतौच आभ्यां क्विप् नोलोपइतिनलोपः वसामितिदत्वंध्वद्भ्याम् पुंसोऽसुंङ् सोनः पुंसइत्यतोमंडूकप्लुत्यापुंसइत्यनुवर्ती
तेन्सम्महतइत्यतः सिंहावलोकनन्यायेनशाविल्य पकृष्यते पुल्लिंगस्यपुमस्शब्दस्याऽसुङ् स्यात्पंचसु ङिन्त्वादंतादेशः पतेर्डुम् सुरित्यौणादिकड्डुमसुप्र
त्ययस्योदित्वात् तेनैवनुम् सिद्धे असुङ उकारउच्चारणार्थः ञ्ञौ प्रियपुमांसि अधाविल्युक्तत्वात् नसम्महतइतिनदीर्घः हेपुमन् स्कपिसंयोगांतलोपे मोनुस्वारः
नुम् स्थानिकाऽनुस्वारव्यवधानेपीत्युक्तत्वान्नषत्वंपुंसु विधाञ्ञोवेधचेत्यसुप्रत्ययः अत्वसोरितिदीर्घः वेधाः विश्वसृट् उशनसां बहुवचनमाद्यर्थेसेर्डादेरित्यनुव
र्ततेउशनाभार्गवः कविरित्यमरः धानांतादंतत्वसांतत्वेनरूपत्रयंभवतिउक्तंचसंबोधनइत्यादि सांतंसस्य नकारादेशेनांतं सस्यलोपेऽदंतंइगंतेइदंतंउदंतेऋदंते
चक्लीबेधीगुणमितिपुरुबहुदंशतोतिपुरुदंशा इंद्रः नभिहनएहन्चेत्यसुप्रत्ययेअनेहाः कालः सौसः मत्वापवादः सेरौ अदसः परस्यसेरौः स्यात् असा अत्र

उशनसोधौनान्तताअदन्तताचावाच्याहे उशनन् हेउशन हेउशनः उशनोभ्याम् उशनस्सु सौसः अदसोदस्यसस्सौसेरौः
अदसस्सेरौ र्भवति असौदस्यमः मादू अदसोमासरस्य उश्चऊश्च भवति अमू जसि एरीबहुत्वे अदस एकारस्येर्भवति
बहुत्वेसति अमी अमुं अमू अमून् अमुना अमूभ्याम् अमीभिः अमुष्मै अमुष्मात् अमुष्य अमुयोः अमीषाम् अमु
ष्मिन् अमुयोः अमीषु इतिहसांताः पुल्लिंगाः ॥ ॥

वाशब्दमनुवर्त्य व्यवस्थित विकल्पआश्रयणीयस्तेनअकसहितस्याद
सः सेर्वौत्वमौत्वाभावेसातरस्य उत्वंचवक्तव्यं असुकौ असुकइति स्त्रियां असुकौ औत्वाभावे असुका असुकइति असुकी इतिचप्रयोगोअसाधु
रेव अथ कथमसुकगोत्रस्याऽसुकशर्मणइति अपभ्रंशएवायमितिप्रांचः असुकशब्दोऽस्युत्पन्नंनामवृत्ति विषयेएवप्रयुज्यतेइत्यन्ये मादू उश्चऊश्चान-
योः समाहारऊसंज्ञापूर्वकत्वान्नह्रस्वः एरीबहुत्वे अदसः किं अमून् बहुत्वे किं अमुयोः इतिहसांताः पुल्लिंगाः ॥ ७ ॥ ॥ ॥

७ ७ ७ ७ ७ ७

नहोधः ढस्यापवादः होढइत्यतोहस्येत्यनुवर्त्तते उपपूर्वान्नहेः क्विप् नहिवृतीति पूर्वपदस्यदीर्घः उपनह्यते इति उपानत् उत्पूर्वात् ष्णिह प्रीतावि
त्यस्मात् क्विप् निपातनान्नलोपषत्वे दिशामितिहस्यधः जबत्वचपत्वे उष्णिक् उष्णिग् दिव औ इत्यौत्वे द्यौः उरसे इत्युत्वे द्युभ्यां गॄ निगरणेऽस्मात्
गॄ शब्दे इत्यस्माद्वाक्विप् ऋतइतीर् र्वोर्विहसेइतिदीर्घः गीः एवं पॄ पालनपूरणयोः पोरुरित्युर् पूः धुर्वी हिंसायां क्विपि वयोरितिवलोपः धूः त्रि
चतुरोरितिचतस्रादेशः नतिसृचतस्रोरितिनदीर्घः चतसृणां प्रियाश्चत्वारो यस्याः सेतियदा स्त्रियामुख्याविद्युक्तत्वान्नचतस्रादेशः चतुरा

नहोधः नहोहस्यधोभवति धातोर्झसेपरे नाम्नश्चरसे पदान्तेच उपानत् उपानद् उपानदौ उपानद्भ्यां उपानत्सु उष्णिक् उष्णिग्
उष्णिहौ उष्णिहः उष्णिग्भ्याम् उष्णिक्षु द्यौः दिवौ द्युभ्यां द्युषु गीः गिरौ गीर्भ्याम् गीर्षु एवं पुर् धुरादयः चतस्रः प्रियचत्वाः
प्रियचत्वारौ प्रियचत्वारः हे प्रियचत्वः इयं स्त्रियाम् इदमः स्त्रियामियं सौ इयम् इमे इमाः अनया आभ्याम् आभिः अ-
स्यै अस्याः अनयोः आसाम् अस्याम् आसु अन्वादेशे एनाम् एने एनाः एनया एनयोः स्रक् स्रग् स्रजौ स्रग्भ्याम् स्र-
क्षु समित् समिद् समिधौ समिधः समिद्भ्याम् समित्सु स्या त्येत्साः एवं तद् यद् एतद् किं वाक् वाचौ वाग्भ्याम् वाक्षु
ककुप् ककुब् ककुभौ ककुब्भ्याम् ककुप्सु त्वक् त्वग् त्वचौ त्वचः त्वचम् त्वग्भ्याम् ऋक् ऋग् ऋचौ ऋचः ऋचम् ऋग्भ्या
म् ऋक्षु अप् शब्दो नित्यं बहुवचनान्तः आपः अपः ॥ ॥

मित्याम् प्रियचत्वाः धावमित्य म् हे प्रियचत्वः इ
यं स्त्रियाम् इदमोयमित्यतः इदम् इत्यनुवर्त्तते सौस इत्यतः साविति च त्यदाद्यत्वे आप् मत्वं औरितीत्वं इमे अनटौसोरित्यनादेशः टौ-
सोरित्येत्वं अनयास्यइत्यत्वं आभ्यां अन्वादेशे इदमे तदो रित्येनत् शेषं सर्ववत् सृजेः क्विप् अमागमश्चनिपातितः दिशामिति कुत्वं स्र
क् स्रग् इध्म मेधः समित् स्त्रिया मित्यमरः त्यदाद्यत्वे आप् तइतिसः स्यावचे : क्विपि वचीति क्विपि परे दीर्घो संप्रसारणं च चोः कुरिति कः वाक्
आप्नोतेर्ह्रस्वश्चेति ह्रस्वश्चात् क्विप् नम्महत् इति दीर्घः आपः ॥ ॥ ७ ७ ७

भिदपाम् अपामिति बहुवचनं चिंत्यं अप्तनः ञेरितिवदेकवचनमेव युक्तं दिशेः क्विप् दिशामितिकुत्वं दिक् दिग् त्विषृदीप्तावित्यस्मात् क्वि
पृषोड इतिडत्वं त्विट् दशेः क्विश्दिशामितिकुत्वं दृक् जुषी प्रीतिसेवनयोरित्यस्मात् दोषामितिरः र्वोरितिदीर्घः सजूर्मित्रम् शासेवतिवासः
विसर्गनुम् स्थानिकेतिषत्वंसजूः षुष्टुत्वं सजूष्षु आशासः क्वावित्युपधाइत्वं घसादेरितिषः आशीः त्यदाद्यत्वेभाप्सौस इतिदस्यसः सेराइत्यौ

भिदपाम् अप्शब्दस्यदत्वंभवतिभकारादौ विभक्तौ आद्भिः अद्भ्यः अपाम् अप्सु दिक् दिग् दिशौ दिशः दिग्भ्याम् दि
क्षु त्विट् त्विड् त्विषौ त्विपः दृक् दृग् दृशौ दृशः सहजुषतइतिसजूः सजुषौ सजुषः सजूर्भ्याम् सजूःषु आशीः आशिषौ आ
शीर्भ्याम् आशीःषु असौ अमू अमूः अमूम् अमू अमूः अमुया अमूभ्याम् अमूभिः अमुष्यै अमुष्याः अमूषाम् अमुष्याम्
अमूषु इतिहसान्तास्त्रीलिंगाः ॥ स्वनडुत् स्वनडुद् स्वनडुही स्वनड्वांहिपुनस्तद्वत् शेषंपुंवत् वाः वारी वारि वार्भ्याम् वार्षु
ऊरसे विमलद्यु विमलदिवी विमल दिवि किम् के कानि इदम् इमे इमानि अन्वादेशे एनत् एने एनानि ब्रह्म ब्रह्मणी ब्रह्माणि
हेब्रह्मन् हेब्रह्म अन्हः अहन्शब्दस्यसोभवति रसे पदांतेच अहः अन्ही अहनी अहानि अन्हा अहोभ्याम् कर्म्म कर्म्म
णी कर्माणि एवंचर्म्मन् वर्म्मन् धन्वन्नादयः दण्डि दण्डिनी दण्डीनि स्त्रग्वि स्रग्विणी स्रग्वीणि वाग्मि वाग्मिनी वाग्मी
नि बहुवृत्रह बहुवृत्रघ्नी बहुवृत्रहणी बहुवृत्रहाणि बहुपूष बहुपूष्णी बहुपूषणी बहुपूषाणि बह्वर्य्यम बह्वर्य्यम्णी बह्वर्य्य
मणी बह्वर्य्यमाणि असृक् असृजी असृंजि शसादौ वाऽसन् असानि अस्ना असभ्याम् ऊर्क् ऊर्जी ऊर्ज्जि बहूर्ज्जोनुम्प्रति
षेधः ॥ ॥ त्वं असौदस्यमइतिमत्वं औइतीत्वम् एत्वंमादू इत्यूत्वं अमू इतिहसान्ताः स्त्रीलिंगाः ॥५॥ सुष्ठुअनड्वान् यस्मिन् तत् व-
सामिति दत्वं स्वनडुत् ञौ अनडुहश्चेत्याम् नुमयम इतिनुम् स्वनड्वांहि यदोपुंवद्रूपं यमांतत्वान्नुम् वारि विमला द्यौर्यस्मिन् तद्विमलद्यु औपरतोंत
र्वर्तिनीं विभक्तिमाश्रित्यपूर्वपदस्येवोत्तरखंडस्यापिपदसंज्ञायांप्राप्तायामाहउत्तरपदत्वेचापदादिविधौ प्रत्ययलक्षणंनेतिउत्तरशब्देनोत्तरपदमुच्यतेउत्तरप

दस्यपदत्वव्यपदेशोकर्तव्येप्रत्ययलक्षणं नभवतीत्यर्थः पदादिविधौतु प्रत्ययलक्षणंभवतिपदत्वाभावादुत्वंन विमलदिवी लुकिनेतित्यदाद्यत्वं न किम् एवमिद
मृ इदमेनदोरित्येनदादेशे एनत् वेड्योरित्यल्लोपोन वकारमकारांतसंयोगादुत्तरस्यनेति निषेधात् ब्रह्मणी धौनपुंसकानामिति वानस्यलोपः हे ब्रह्मन् हे
ब्रह्म अन्हः नस्यविसर्गविधानं युक्तं सस्यापि विसर्गविधानावश्यकत्वात् तदंतेपीष्टंसत्वंदीर्घाणि अहानि यस्मिन् सदीर्घाहाः निदाघः दीर्घाहन् सिइ
त्यत्र हस्सेपइतिसिलोपे नोपधायाइतिदीर्घेच कृतेततः सकारः वेड्योरितिवाऽल्लोपः अन्ही अह नी अल्लोपः स्वरे इत्यल्लोपः अन्हाभ्यामिसत्वे कृते विसर्गः
हवे इत्युत्वं ओत्वं च अहोभ्यांदंडोस्यास्तीति मांतोपधादितीन् नाम्नोन इतिनलोपः दंडि इनामितिदीर्घः दण्डिनी स्रगस्यास्तीति विन् स्रग्वि वागस्या-

अन्त्यात्पूर्वोवानुम् बहूर्ज्जि बहूर्ञ्जि त्यत् त्ये त्यानि तत् ते तानि यत् ये यानि एतत् एते एतानि अन्वादेशे एनत् एने ए-
नानि बेभित् बेभिदी बेभिदि सयङन्तस्य शौनुम्न चेच्छित् चेच्छिदी चेच्छिदि गवाक् शब्दस्य रूपाणि क्लीबे ऽर्चागतिभेद-
तः असन्ध्यगागमाल्लोपैर्नवाधिकशतम्मतं तस्य सुप्सु नवषड्भादौ षट्के स्युस्त्रीणि जश्शसोः चत्वारि शेषे दशके रू-
पाणीति विभावय गवाक् गवाग् गोअक् गोअग् गोक् गोग् गवाङ् गोअङ् गोङ् गोची गवाञ्ची ञ्ची — गोञ्ची गवाञ्चि
गोअञ्चि गोञ्चि गवाक्षु गोअक्षु गोक्षु गवाङ्क्षु गोअङ्क्षु गोङ्क्षु गवाङ्खषु गोअङ्खषु गोङ्खषु ॥ ॥ ॥

स्तीति ग्मिन् वाग्मि बहवो वृत्रहणो यस्मिन् तत् नाम्नोन इति नलोपः बहुवृत्रह वेड्योरित्युपधालोपे हनोघइतिघः बहुवृत्रघ्नी अल्लोपाभावे बहुवृत्र
हणी इनामितिदीर्घः बहुवृत्रहाणि बहवः पूषाणो यस्मिन् तत् बहुपूष बहवो ऽर्यम्णो यस्मिन् तत् बह्वर्यम अस्यते रौणादिके ऋजन्प्रत्यये असृज् चोः
कुरिति कुत्वं असृक् पाददंतेत्यसन् अल्लोपः स्वरे इत्यल्लोपे असा असृजा ऊर्जतीति ऊर्क् शौ ऊर्न्र्जि नरजानां संयोगः बहव ऊर्जो यस्मिन् तत् बहूर्क् बहूर्जोनु
म् प्रतिषेधः अन्त्यात्पूर्वो वानुम् बहूर्ज् शब्दस्य भाष्यमते नुम् एतदोरित्येनदादेशः एनत् बेभिद्यते इति बेभित् यङः नात् क्विप् सयङः तस्य शौनुम्
न सश्च यङ् च सयङौ सयङावंते यस्य स सयङः तस्तस्य सयङः तस्य नाम्नो नुम् न शौ परे बेभिदि चेच्छिद्यते इति चेच्छित् शौ चेच्छिदि सप्रत्ययां तः

स्यशौ पिपगिपि जायंते नवसौ तथाः मिच नवभ्याम् भिस् भ्यसां संगमे षट्संख्यानि नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि चत्वार्यत्यवचत् सुक
स्याविबुधाः शब्दस्य रूपाणि तज्ज्ञानं तु प्रतिभास्ति चेन्निगदितुं षाण्मासिको त्रावधिः ॥ १ ॥ राजसभायामिति श्लोकः केनचित् कविनोक्तस्तदा क
श्चित्पंडितः श्लोकद्वयेन तस्योत्तरमाह श्लोकः गवाक् शब्दस्य रूपाणि क्लीबे ऽर्चागतिभेदतः असंध्यगागमाल्लोपैर्नवाधिकशतं मतं ॥ १ ॥ व्याख्या ग
वाक् शब्दस्य रूपाणि अर्चागतिभेदतः पूजागत्यर्थभेदेन नवाधिकशतं बोध्यानि विंशत्याद्याः सदैकत्वे संख्याः संख्येय संख्ययोः इत्युक्तत्वादेक
त्वं शतेऽंचेर्गतौ नस्य लोपः पूजायां तु नेत्याशयः कीदृशं असंध्यगागमाल्लोपैर्मतं गोरवेत्यगागमेन गोर्वेति प्रकृतिभावाल्लोपाभ्यां वाचार्याणां मनन
विषयीभूतं उक्तसंख्यामाह प्रत्येकं स्यम् सुप्सु नवरूपाणि स्युः भादौ षट्के षट् जश् शसोस्त्रीणि शेषे दशके प्रत्येकं चत्वारि इति नवाधिकशतं रू
पाणि त्वं विभावय जानीहि शसेन्चपस्येति वार्तिकमनाश्रित्योक्तमन्यथा त्रीणि रूपाणि वर्द्धंते इत्यर्थः ॥ ३ ॥ गामंचतीति विग्रहे क्विप् गतौ नलोपइ
ति नलोपः गो अच् सि इति स्थिते अगागमे चोः कुरिति कुत्वम् गवाक् १ गवाग् २ प्रकृतिभावे गोअक् ३ गोअग् ४ अल्लोपे गोक् ५ गोग् ६ पूजायां न
स्य कुत्वेन ङः गवाङ् ७ प्रकृतिभावे गोअङ् ८ लोपे गोङ् ९ अम्यप्येतानि रूपाणि औपरतः अचेरित्यल्लोपे गोची १ पूजायां तु गवांची २ गोअंची ३
गोंची ४ शौ नुमयम इति नुम् गति पूजनयोस्त्रीण्येव सादृश्यात् गवांचि १ गोअंचि २ गोंचि ३ टापरतः अचेइत्यल्लोपः गोचा १ पूजायां गवांचा २ गो
अंचा ३ गोंचा ४ भ्यामि गवाग्भ्याम् १ ओ अग्भ्यां २ गोग्भ्याम् ३ पूजायां गवाङ्भ्याम् ४ गोअङ्भ्याम् ५ गोङ्भ्याम् ६ भिसि परे गवाग्भिः १
गोअग्भिः २ गोग्भिः ३ पूजायां गवाङ्भिः ४ गोअङ्भिः ५ गोङ्भिः ६ ङेपरतः अचेरित्यल्लोपः गोचे १ पूजायां गवांचे २ गोअंचे ३ गोंचे ४ भ्या
मि प्राग्वत् भ्यसि गवाग्भ्यः १ गो अग्भ्यः २ गोग्भ्यः ३ पूजायां गवाङ्भ्यः ४ गोअङ्भ्यः ५ गोङ्भ्यः ६ ङसौ गोचः १ पूजायां ग
वांचः २ गोअंचः ३ गोंचः ४ भ्यामि भ्यसि च प्राग्वत् ङस्परतो ङसिवत् ओसि गोचोः १ पूजायां गवांचोः २ गोअंचोः ३ गोंचोः ४ आ
मि गोचाम् १ पूजायाम् गवांचाम् २ गोअंचाम् ३ गोंचाम् ४ ङौ गोचि १ पूजायां गवांचि २ गोअंचि ३ गोंचि ४ ओसि च गोचोः १ पू
जायाम् गवांचोः २ गोअंचोः ३ गोंचोः ४ सुपि गवाक्षु १ गोअक्षु २ गोक्षु ३ पूजायां शसे ङ्णनोरिति ङां तानां कुक् पक्षे गवाङ्क्षु ४ गोअ

-ङ्क्षु ५ गोङ्क्षु ६ कुगभावेगवाङ्षु ७ गोऽङ्षु ८ गो अङ्षु ९ एवंनवाधिकशतं रूपाणि कुक् पक्षे शसे चपस्येति ककारस्य खकारेण त्रया-
णामाधिक्यंज्ञेयम् अन्यत्र तु कुत्वस्यासिद्धत्वान्न खकारः एवं द्वादशाधिकम् तिरोंचतीति नो लोपइतिनलोपः चोः कुरितिकुः तिर्यक् सहादित्वात्तिरिः
औपरतः तिरस्यादय इति तिरश्चः तिरश्ची शौनुमयमइनिनुम् तिर्यचि पूजायां तिर्यङ् यकृत्कालखंडंशकृत् पुरीषंशसादौ पाददंतेति यकन् शकन्ना
देशौवाददर्दिति पुल्लिंगे उक्त एव द्विरुक्तानां जक्षादीनां चेतिवानुम् ददंति ददातिवादीपोः शतुर्वा आत् ईपोरिति पदच्छेदः आदितिपंचमी न तु तपरत्वं ई
श्वईपईपो नयोरीपोः शतुरित्यवयवषष्ठी नङ्तुद तीइत्यत्र शितिचतुर्वदित्यनेनकृतस्य तुदादेश्त्यिः प्रत्ययस्यादेत्यने नांतरंगत्वाल्लोपे कृतेः वर्णासरत्वाभावा

तिर्य्यक् तिरश्ची तिर्य्यञ्चि तिर्य्यङ् तिर्य्यञ्ची तिर्य्यञ्चि यकृत् यकृती यकृंति यकानि यक्नायकृता यकभ्यां यकृद्भ्यां एवंशकृत् ददत् ददती ददति ददन्ति एवं जाग्रदादयः तुदत् दीपोश शतुर्वा अवर्णा तासरस्य शतुर्वा नु मीकारे ईपिच तुद-
ती तुदन्ती तुदन्ति भात् भाती भान्ती भाति अप्ययोरान्नित्यं अप् प्रत्ययप्रत्ययसंबन्धिनोः वर्णासरस्य शतुर्नुम् नित्यमीका
रे ईपि च पचत् पचन्ती पचंति दीव्यत् दीव्यन्ती दीव्यन्ति स्वप् स्वब् स्वपी न्सम्महतइतिदीर्घः स्वांपि दीर्घो नेत्येके स्वंपि स्वपा
भिदपामूस्व दूभ्यांस्वद्भिः जगत् जगती जगन्ति महत् महती महान्ति धनुः धनुषी॥ ॥

नुम् नस्यात उच्यते प्रत्ययलक्षणे ननसरत्व मस्त्येव नचैवं घ्नंती त्यादावपिप्रसंगः लुकिनतन्निमित्तमित्यनेन प्रत्ययलक्षणप्रतिषेधात् भातीतिभा
त् भादीतौ शन्तृप्रत्ययेशित्वादप् अदादित्वादपोलुक् अप्ययोरान्नित्यं अवादीपो श्यिनईपोरित्यनुवृत्तंविकल्पेप्राप्ते नित्यविधानार्थमिदं अप् च यश्चाप्यौ
तयोरासरस्य शतुर्नित्यंनुम् भवति ईईपोः ननु अप्ययोरित्यत्रचपाअवेइति जवत्वं वक्तुंयुक्तम् उच्यते ज्ञापनार्थमेवंनिर्देशः प्रत्ययेपरतः कश्चिसदत्व वेतितेनतडि
त्वानित्यादिसिद्धम् पचतीति पचत् अप्कर्तरीत्यप् अदेइत्यल्लोपः दीव्यतीतिदीव्यत् दिवादेरितियः सुष्ठु आपोयस्मिन् सरसितत् स्वप् ऋक्पूरित्यप्रत्ययो नन
पूजनेइतिनिषेधात् शौनित्यत्वात् नुमः भाकृदीर्घः स्वांपितदेतेदीर्घो ऽस्यनेत्येके स्वंपि अर्तिपृवपियर्जितनिधनितयिभ्यउसित्यौणादिकः धनेरुस् धनुः शौ

न्सम्महतइतिदीर्घः विसर्गनुमितिषत्वं॥ ६७ ॥ न्सपूर्वस्यशौदीर्घः न्सम्महत् इत्यस्यैवप्रपंचः धनूंषि धनुर्भ्यामत्र य्वोर्विहसेइतिनदीर्घो धातुत्वात् अ
न्विशक्त्विहुस्रृपीत्यादिनाजुहोतेरिस् हविः पिपठिषतेः क्विप् य्वोर्विहसेइत्यनेनदीर्घत्वं पिपठीः सुष्ठुपुमांसोयस्मिन् तत् सुपुम् शौपुंसोऽसुङित्यसुङ
नुमयम इति नुम् न्सम्महतइतिदीर्घः सुपुमांसि त्यदाद्यत्वं विभक्तिकार्य्येमत्वोत्वे अमूशौ नुम्दीर्घौ अमूनि शेषंपुंवत् इतिहसांतानपुंसकलिं
गाः ॥ ६८ ॥ समासेयंषट्लिंगव्याख्या त्वमहंसिना युष्मदस्मदोः स्थानेत्वमहमित्येतौ यथाक्रमंस्तः सिनेति सहादियोगे तृतीयासिप्रत्ययेन सहि
तयोरित्यर्थः ननुत्वमहमोर्हसांतत्वादेवसिलोपे सिद्धेसाविति वाच्यंव्यर्थं सिनेतिउच्यते मांतत्वस्यतथा तकारोच्चारणस्यगौणेत्वतित्वमित्यादौ च-
रितार्थत्वात् सिलोपासत्त्वात्त्यदादेरित्यत्वं तत आम् स्यादितिसात्वं तइतितकारस्यसत्वंचस्यात् अतः सिनेत्युक्तं इह तदंतविधिरपिइष्टोस्ति पर

न्सपूर्वस्यशौदीर्घः धनूंषि हविः हविषी हवींषि पयः पयसी पयांसि तेजः तेजसी तेजांसि वचः वचसी वचांसि पिपठीः पि
पठिषी सयङन्तस्यशौनुम्न पिपठिषि सुपुम् सुपुंसी सुपुमांसि अदः अमू अमूनि शेषंपुंवत् इतिहसांतानपुंसकलिंगाः समासे
यंषड्लिंगव्याख्या त्वमहंसिना सिनासहितयोर्युष्मदस्मदोस्त्वमहमित्येतावादेशौभवतोयथासंख्येनत्वम् अहम् युवा
वौद्विवचने द्व्यर्थवाचिनोर्युष्मदस्मदोर्युवावावादेशौभवतो विभक्तौ आमो युष्मदस्मद्भ्यांपरऔरामभवति युवां आवाम्

मत्वं परमाह गौणत्वेतु त्वां मां युवामावां युष्मान् अस्मान् वा ऽतिक्रांतइत्यत्रापि अतित्वमत्यहमित्येव इह युष्मदस्मदोर्नांति संख्यावाचिनांवालिंगत्व
मेव अलिंगे युष्मदस्मदीइत्युक्तत्वात् अतएव त्रिषु लिंगेष्वेषांसमानं रूपंलिंगानिमित्तम् विंशत्यादिकमनयोर्नालिंगत्वात् त्वंब्राह्मणः त्वंब्राह्मणी अहंब्रा
ह्मणी त्वंब्राह्मणकुलम् अहंब्राह्मणकुलमिति युवावौद्विवचने द्वयोरर्थोद्व्यर्थं वक्तइतिद्व्यर्थवाचिनौतयोर्युष्मदस्मदोर्युवावौस्तः स्यादौ विभक्तौत्यदादेरि
त्यतः स्यादावित्यपकृष्यते द्वौवक्तइति द्विवचनेकर्तरियुट् किंच द्विवचनेइतिप्रत्ययाविशेषणेकृतेपि युवावौसिद्ध्यतः तथापि युवां मति क्रांतान् अ-
तियुवा नित्यादौ युवावयोरप्रसंगवारणाय प्रकृत्यर्थविशेषणं कृतं आमो आभ्यामौ आम् स्यात् अत्र योगविभागादिसामर्थ्येनं विपरीतनिर्देशो बोध्यः विप



र्यासमइतिमधुसूदनप्रवक्तारइतिकेचित् ११५

गौणत्वे ऽपि युष्मदस्मदोस्त्यदाद्यत्वं भवति ॥ १ ॥ ८

रीतनिर्देशात् इत्येतदर्थं व्याख्यानांतरं क्रियते अत्र अ अम् औ इति छेदः अ इति योगविभागः कर्तव्यः लोपः अतः युष्मदस्मदोरिति पदद्वयं चानुवर्तनीयं यु
ष्मदस्मदोरकारांतादेशो ऽकारात्परस्याकारस्य लोपश्च स्यादित्येको योगः युष्मदस्म द्भ्यां पर औकारो ऽम् स्यादिति द्वितीयः औकारस्यामि कृते आम्
स्मा वित्यात्वं यद्वा सवर्णदीर्घः न चामूशसोरिति लोपः अकारोच्चारणसामर्थ्यात् इति लघुभाष्ये युवां आवां तदंते परमयुवां परमावां गौणत्वे तु त्यदादेरित्यत्वं न
भवति संज्ञोपसर्जनयोर्नात्वमित्युक्तत्वात् किं तर्हि आमावित्यत्र योगविभागेना ऽनयोरंतस्याकारो ऽतो लोपश्च औकारस्य अमि कृते आम् त्वास्मावित्यात्वं भम्
तित्वां अतिमां अतियुवां अत्यावां अतियुष्मां अत्यस्मान् ॥ ७ ॥ यूयंवयं जसा तदंते परमयूयं परमवयम् गौणत्वे तियूयं अतिवयम् त्वन्मदेकत्वे एकत्वे गम्ये
एकस्याभावः एकत्वं तस्मिन् गम्यमाने ज्ञायमाने सति युष्मदस्मदोस्त्वन्मदावादेशौ स्तः स्यादावित्यत्र न संबध्यते तेन तव पुत्र इति त्वत्पुत्रः तवापत्यमिति त्वा

यूयंवयं जसा जसासहितयोर्युष्मदस्मदोर्यूयंवयंभवतः यथासंख्यं त्वन्मदेकत्वे युष्मदस्मदोस्त्वन्मदौ भवत एकत्वे गम्य
माने आम्स्मौ युष्मदस्मदोष्टेरात्वं भवति अमि सकारे भिसि च परे त्वां मां युवां आवां त्यदाद्यत्वे ऽसीति दीर्घः ॥

दः त्वं पुत्रो यस्य सः त्वत्पुत्र इत्यादौ विभक्त्यभावे ऽपि त्वन्मदौ भवतः नन्वांतर्वर्तिनीं विभक्तिमाश्रित्याप्येतौ स्यातामिति वाच्यं युवयोः पुत्र इति युष्मत्पुत्र-
इत्यादौ युवावयोरपि प्रसंगात् लुकि न तन्निमित्तमिति निषेधाच्च दांतादेशावेतौ तेन त्वादयति मादयति त्वदीयं मदीयमित्यादि रूपसिद्धि सूत्रे चावसाने इति पा
क्षिक तकारे कृते अमे ऽन्मावितिवत् भमत्वं कश्चिज्जबस्यापि भमोज्ञाप्यते तेनेति वा बोध्यं सिडे ङस्सूक्त वक्ष्यमाणाविधयस्त्वन्मदौ बाधंते परत्वात्
तदंते परमत्वां परममाम् गौणत्वे तु अतित्वां अतिमाम् आम्स्मौ आ अम् इति छेदः युष्मदस्मदोष्टेरात्वं स्यादमि सकारे भिसि च अम् च स् च भिश्च ते
षां समाहारो म्स्भि तस्मिन् आगमजस्यानित्यत्वान्नुम् भावः भीत्येकदेशद्वारा समुदाया ऽनुकरणं अत्र माधव आह टेरिति नानुवर्तनीयं प्रयो-
जनाभावात् षष्ठीनिर्दिष्टत्वादंत्यस्यात्वे सवर्णदीर्घे च त्वां मामिति रूपसिद्धेः युष्मदस्मदो र्व्यंतयोः क्विपि युष्म् अस्मिति रूपं आभ्याममि शसि च यु
ष्मां अस्मां युष्मान् अस्मानित्यत्र स्यमकारस्यात्वे सिध्यति अन्यथा न सत्य अतियुष्माभ्यामित्यादावात्वं केन भवति गौणत्वे त्यदाद्यत्वाभावात् उच्यते

आमावित्यत्र योगविभागे नात्वे कृते रूपसिद्धिरिति तदा युष्मास्मोरपि योगविभागेनाऽत्वे कृते पश्चाट्टेरात्वे चामि शसि च युष्माम् असामिति सि
श्यत्येव किं माधवोक्तमेति शसो नो वक्तव्यः सो नः पुंस इत्यत्र सो न इति विभागेनाऽयमर्थो लभ्यते इत्यर्थः एटाङ्योः अत्र टेरित्यनुवृत्तं स्यात् टाश्च ङिश्च टा
डी तयोः परतः इदंतत्वात् ङेः पूर्वनिपाते प्राप्ते तस्यानित्यत्वज्ञापनार्थं परनिपातः किंच परत्वान्त्यदादेरित्यत्वे प्राप्तेपि आदौ एटाङ्योरित्येत्वप्रवृत्तिरेवन्या
य्या कृताकृतप्रसंगित्वेन तस्यानित्यत्वात् टेरेत्वे कृते अयादेशे च त्वया मयेति अत्र हि युष्मदस्मदोर्भ्यं तयोः क्विपि युष्म् अस्म् इति टाङिओस्सु परतः यु
ष्मा अस्मा युष्मि अस्मि युष्मोः अस्मोरिति रूपाणि तत्सिद्ध्यर्थं व्याख्यानांतरं क्रियते अत्रैकारात् परो यवयो वंसे हकारे चेत्यनेन लुप्तो यकारो ज्ञात
व्यः तेनायमर्थः अदंतयोरनयोरेत्वं हसंतयोर्यत्वं च न भवति एटाङ्योरिति टाङीओसां लुप्तसप्तमीको निर्देशः एषु परत इति तुभ्यं मह्यं ङ्या तदंते परम

शसो नो वक्तव्यः युष्मान् अस्मान् त्वन्मदादेशे कृते एटाङ्योः युष्मदस्मदोष्टेरेत्वम्भवति टाङ्योः त्वया मया युवाभ्या
म् आवाभ्याम् युष्माभिः अस्माभिः तुभ्य मह्यं ङ्या ङेसहितयोर्युष्मदस्मदोस्तुभ्यं मह्यमेतौ भवतः तुभ्यं मह्यं भ्यश्शभ्यम्
युष्मदस्मद्भ्यां परो भ्यश्शभ्यं भवति शकारो भकारादित्वव्यावृत्त्यर्थः तेनात्वैत्वे न भवतः युष्मभ्यम् अस्मभ्यम् ङसिभ्यसोः
श्शतुः ङसिसाहचर्यात्संचम्या भ्यस् गृह्यते त्वत् मत् युवाभ्याम् आवाभ्याम् युष्मत् अस्मत्॥ ॥ तुभ्यं परममह्यं गौणत्वे तु

अति तुभ्य अतिमह्यम् भ्यश्शभ्यम् अत्र भ्यस् चतुर्थीबहुवचनं आभ्यां भ्यसश्शभ्यं स्यात् शकारो न सर्वादेशार्थः भ्यमोर्गुर्वादेशत्वात् तर्हि किमर्थः भ
कारादित्ववारणार्थः स तिद्धाकारे भकारस्यादित्वाऽभावात् भादिनिमित्तमेस्मीत्यत्वे अद्धीत्यात्वं च न आदेर्भाव आदित्वं भकारस्यादित्वं भकारादित्वं
भकारादित्वस्य व्यावृत्तिर्निषेधः भकारादित्वव्यावृत्तिः भकारादित्वव्यावृत्तिरर्थः प्रयोजनं यस्य सः ङसिभ्यसोः श्शतुः युष्मदस्मद्भ्यां परयोर्ङसिभ्य
सोः श्शतुरादेशः स्यात् शित्वात्सर्वादेशः उकार उच्चारणार्थः अत्र ङसिसाहचर्यात्संचम्या एव भ्यस् गृह्यते किंच अत्र माधवः ङः सि भ्यसः अः श्शतु-
रिति पदच्छेदः कर्तव्यः ततश्च युष्मदस्मद्भ्यां ङसिभ्यसोः श्शतुर्भवति युष्मदस्मदोरंत्यस्याकारादेशो भवति तेन भ्यंतयोर्युष्मास्मोर्युषत् असत् अय

मेवा कारोभ्यस् ३भ्यम् सामाकमित्यत्राप्यनुवर्तते तेनयुषभ्यं असभ्यं युषाकं असाकमिति सिध्यतीति वदंति आमावित्यत्र योगविभागे नात्वे-
युषदस्मदित्यादि सिध्यत्येव किं तत्प्रयासेन ॥ छ ॥ तवममङ्सातदंतेपरम तव परम मम गौणत्वे अतितव अतिमम सामाकं अत्र तंत्रैकशेषाः ३ वृ-
त्तिभिः सामितिद्वयं बोध्यं सकृदुच्चरितः शब्दोनेकार्थगमको भवतीति तंत्रं सरूपाणामित्येकशेषः द्विरुच्चारणमावृत्तिः एकस्य स्कृदा सह आम् साम्
द्वितीयस्य तु आमा सह साम् इत्यर्थः ततः सुट् सहित आम् केवल आम् च आकं युष्मदस्मदोरंत्यस्याकारश्च भवतीत्यर्थः तेनातियुष्माकमत्यस्मा
कमित्यादि सिध्यतीति लघुभाष्यकर्तुरपि प्रयासो व्यर्थ एव योगविभागे नात्वे कृते स्कडाम इति स्कटोपि सर्वादिकार्यत्वाद्गौणे ३ प्रवृत्तेः तंत्रादिनास।

तवममङ्साङ्सास्सहितयोर्युष्मदस्मदोस्तवममौ भवतः तवमम युवयोः आवयोः स्कडामः सामाकम् युष्मदस्मद्भ्यां
परस्सामाकस्भवति युष्माकं अस्माकं त्वयि मयि युवयोः आवयोः युष्मासु समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी स
मासार्थो३न्यसङ्ख्यश्चेद्युवावौ त्वन्मदावपि ॥ १ ॥ ॥

मित्यस्य द्विरुच्चारणात् केवलस्याप्याम् आकमिच विहिते रूपसिद्धेः समस्यमाने द्व्येकत्व वाचिनी युष्मदस्मदी समासार्थोन्यसंख्यश्चे
द्युवावौ त्वन्मदावपि ॥ १ ॥ युवावौ द्विवचने त्वन्मदेकत्वे इति सूत्रद्वये द्विवचनैकत्वशब्दौ प्रकृत्यर्थपरौ नतु प्रत्ययपराविति व्याख्यातं तत्फलं जाति-
लिंगव्यक्तिसंख्याकारकात्मकः पंचको नामार्थ इति पक्षाभिप्रायेण दर्शयति चेद्यदि युष्मच्चास्मच्च युष्मदस्मदी शब्दरूपे समस्येते इति समस्यमाने-
समासविषयौ क्रियमाणे द्वौ च एकश्च द्व्येकौ द्व्येकयोर्भावो द्व्येकत्वं वक्त इति द्व्येकत्ववाचिनी स्तः समासस्यार्थः ससमासार्थः विग्रहः अन्यसंख्यो३
न्यस्य पदार्थस्य संख्या यस्मिन्सोन्यसंख्यो युष्मदस्मदर्थगतसंख्येतरसंख्यायुक्तो भवतीत्यर्थः तदा युष्मदस्मदोः स्थाने युवावौ त्वन्मदावप्या
देशौ भवतः द्विवचनैकत्वयोः प्रत्ययविशेषणत्वे तु नस्यातामित्यव्याप्तिः स्यादिति भावः ॥ १ ॥ छ छ छ
छ छ छ छ छ छ

सिजसङेङस्सु परतः आदेशाः स्युः सदैवते त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥ २ ॥ नन्वेवं सिजसङेङस्स्व पियुष्मदस्मदोर्द्व्यर्थत्वे युवावौ स्यातामेकार्थत्वेतु त्वन्मदावित्याशंकायामाह एतासु विभक्तिषु परतो युष्मदस्मदोः स्थानेनते आदेशास्सदैवस्युः केते आदेशाइत्यत आह त्वाहौ यूयवयावित्यादि ॥ २ ॥ एतेपरत्वाद्बाधंते युवावौ विषये स्वके त्वन्मदावपिबाधंते पूर्ववद्विषयेस्वतः ॥ ३ ॥ एते त्वमहं यूयं वयं तुभ्यंमह्यं तवममेत्यादेशाः स्वके विषये स्वे आत्मीये स्थाने युवावौ बाधंते कस्मात्परत्वाद्विप्रतिषेधे परं कार्यमितिन्यायात् उभयोस्तुल्यबल विरोधे सतिसूत्रापेक्षया त्वमादयः परेत एव भवंतीत्यर्थः एते त्वमादयः स्वतो विषये त्वन्मदावपिबाधंते पूर्ववत् उक्तन्यायेन स्वत इत्यत्रसप्तम्यर्थे तस् ॥ ३ ॥ द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी तयोरद्व्येकतार्थत्वान्न युवावौ त्वन्मदौ नच यदा युष्मदस्मदौ बह्वर्थे बहूनामर्थोययोस्ते बह्वर्थे भवतः स

सिजस्ङेङस्सु परतआदेशाः स्युस्सदैवते त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥ २ ॥ एतेपरत्वाद्बाधंते युवावौ विषयेस्वके त्वन्मदावपिबाधन्ते पूर्ववद्विषयेस्वतः ॥ ३ ॥ द्व्येकसंख्यस्समासार्थो बह्वर्थे युष्मदस्मदी तयोरद्व्येकतार्थत्वान्न युवावौ त्वन्मदौ नच ॥ ४ ॥ त्वांमावा ऽतिक्रांतइतिविग्रहे अतित्वम् अत्यहम् गौणत्वे युष्मदस्मदोस्त्यदाद्यत्वं भवति अतित्वाम् अतिमाम् अतियूयं अतिवयं अतित्वांअतिमाम् त्वन्मदेकत्वे आम्स्भौ ॥ ॥

मासार्थो विग्रहः द्वौच एकश्चद्व्येकौ द्व्येकयोः संख्या यस्मिन् द्व्येकसंख्यो भवति तदा युष्मदस्मदोः स्थाने युवावौ त्वन्मदावपिनस्तः तस्मात् तयोर्युष्मदस्मदोः द्वौच एकश्च द्व्येकौ द्व्येकयोर्भावः द्व्येकता द्व्येकताया अर्थः द्व्येकतार्थः द्व्येकतार्थस्य भावो द्व्येकतार्थत्वम् द्व्येकतार्थत्वम द्व्येकतार्थत्वं तस्माद्द्व्येकतार्थत्वस्याऽभावात् ४ त्वांमां वातिक्रांत इति विग्रहे अपवादो अतित्वं अत्यहं त्वां मां वाऽतिक्रांतावितिविग्रहे उत्सर्गतः त्वन्मदादेशे कृते गौणत्वेपि युष्मदस्मदोस्त्यदाद्यत्वं भवति आमावित्यत्र योगविभागेन यद्व्याख्यानांतरं कृतं तस्यायं निष्कर्षोस्ति गौणत्वेप्यनयोस्त्यदाद्यत्वं भवतीत्यर्थः इत्यनेनात्वे तल्लोपे औ विभक्तेरसि च कृते सवर्णे दीर्घः अतित्वां अतिमांत्वां मांवातिक्रांताइतिविग्रहे अपवादो अतियूयमतिवयं एवमग्रेप्यूह्यम् १ अत्वेआम् स्मावित्यात्वेच अमूशसोरि

रित्यल्लोपः अतित्वां अतिमां शसि अत्वे कृते अमृशसोरित्यल्लोपः शसीतिदीर्घः शसोनइतिनत्वं अतित्वान् अतिमान् २ अत्वे कृते एटाङ्यो
रित्ययादेशे च अतित्वया अतिमया अत्वे अङ्गीत्यात्वे च अतित्वाभ्यां अतिमाभ्यां आमृस्मावित्यात्वं अतित्वाभिः अतिमाभिः ३ अपवादो
अतितुभ्यम् अतिमह्यं अतित्वाभ्यां अतिमाभ्यां अत्वे शभ्यसि च अतित्वभ्यम् अतिमभ्यम् ४ अत्वे त्तु आदेशे च अतित्वत् अतिमत् अतित्वा
भ्यां अतिमाभ्यां अतित्वत् अतिमत् ५ अपवादो अतितव अतिमम अत्वे ओसील्येत्वे च अतित्वयोः अतिमयोः अत्वे सुडभावेपि प्रागुक्तरीत्या न
आकमिच अतित्वाकम् अतिमाकम् ६ अत्वे कृते एटाङ्योरित्येत्वे अयादेशः अतित्वयि अतिमयि अतित्वयोः अतिमयोः अत्वे आत्वे च अतित्वा
सु अतिमासु ७ गुणीभूतयोर्युष्मदस्मदोरेकार्थत्वे उदाहरणान्युक्त्वा संप्रतिद्व्यर्थवाचित्वे उदाहरंति युवामावां वा ऽतिक्रांतः अतिक्रांतौ अतिक्रां

अतित्वां अतिमां अतित्वान् अतिमान् अतित्वया अतिमया अतित्वाभ्यां अतिमाभ्यां अतित्वाभिः अतिमाभिः अति-
तुभ्यं अतिमह्यं अतित्वाभ्यां अतिमाभ्यां अतित्वभ्यं अतिमभ्यं अतित्वत् अतिमत् अतितव अतिमम अतित्वयोः अतिमयोः अति
त्वाकं अतिमाकं अतित्वयि अतिमयि अतित्वासु अतिमासु युवामावां वा ऽतिक्रांत इति विग्रहे सिजस्ङेङस्सु प्राग्वत्
अन्यत्र युवावो अतित्वम् अत्यहम् अतियुवां अत्यावाम् अतियूयं अतिवयं अतियुवा अत्यावा अतियुवान् अत्यावान् अतियु
वया अत्यावया अतितुभ्यं अतिमह्यं अतियुवाभ्यां अत्यावाभ्यां अतियुवभ्यं अत्यावभ्यं अतियुवत् अत्यावत्॥ ॥

तावा इति विग्र
हे अतित्वम् अत्यहम् अतियुवामत्यावाम् अतियूयमतिवयं १ अतियुवां अत्यावाम् अतियुवां अत्यावाम् अतियुवान् अत्यावान् २ अतियुव-
या अत्यावया अतियुवाभ्यां अत्यावाभ्यां अतियुवाभिः अत्यावाभिः ३ अतितुभ्यम् अतिमह्यं अतियुवाभ्याम् अत्यावाभ्याम् अतियुवभ्यंम् अत्या
वभ्यम् ४ अतियुवत् अत्यावत् अतियुवाभ्यां अत्यावाभ्याम् अतियुवत् अत्यावत् ५ अतितव अतिमम अतियुवयोः अत्यावयोः अतियुवाकं अत्यावा
कम् ६ अतियुवयि अत्यावयि अतियुवयोः अत्यावयोः अतियुवासु अत्यावासु ७ बह्वर्थयोस्तूदाहरति युष्मानस्मान्वा ऽतिक्रांतः अतिक्रांतौ अ

तिक्रांता वेति विग्रहे अतित्वं अत्यहं अतियुष्माम् अत्यस्माम् अतियूयं अतिवयम् १ अतियुष्मां अत्यस्मां अतियुष्मान् अत्यस्मान् २ अतियुष्म
या अत्यस्मया अतियुष्माभ्यां अत्यस्माभ्यां अतियुष्माभिः अत्यस्माभिः ३ अतितुभ्यं अतिमह्यं अतियुष्माभ्याम् अत्यस्माभ्याम् अतियुष्म-
भ्यं अत्यस्मभ्यं ४ अतियुष्मत् अत्यस्मत् अतियुष्माभ्यां अत्यस्माभ्यां अतियुष्मद् अत्यस्मत् ५ अतितव अतिमम अतियुवयोः अत्यावयोः
अतियुष्माकं अत्यस्माकं ६ अतियुष्मयि अत्यस्मयि अतियुष्मयोः अत्यस्मयोः अतियुष्मासु अत्यस्मासु ७ पुनर्गौणे रूपांतरं युष्मानस्मा
न्वाकरोतीति औयुष्मयति अस्मयति ततः क्विप् ओरिति त्रिलोपे कृते युष्म् अस्मिति जातं स्यादिषु युष्म स्मोरपि त्वमहमादय आदेशा भवंति एक

अतियुवाभ्यां अत्यावाभ्यां अतियुवत् अत्यावत् अतितव अतिमम अतियुवयोः अत्यावयोः अतियुवाकं अत्यावाकं अ-
तियुवयि अत्यावयि अतियुवासु अत्यावासु युष्मानस्मान्वा ६ तिक्रांत इति विग्रहे अतित्वं अत्यहं अतियुष्मां अत्यस्मां अ
तियूयं अतिवयं सिजम् ङे ङ स्सु प्राग्वत् अतियुष्मां अत्यस्मां अतियुष्मां अत्यस्मां अतियुष्मान् अत्यस्मान् अतियुष्मया अत्यस्म
या अतियुष्माभ्यां अत्यस्माभ्यां अतियुष्माभिः अत्यस्माभिः अतितुभ्यं अतिमह्यं अतियुष्मत् अत्यस्मत् अतियुष्माभ्यां अत्य
स्माभ्यां अतियुष्मत् अत्यस्मत् अति तव अतिमम अतियुष्माकं अत्यस्माकं अतियुष्मयि अत्यस्मयि अतियुष्मासु अत्य-
स्मासु ॥ ॥ देशविकृतमनन्यवदित्युक्तत्वात् त्वं अहं औ विभक्त्यादिषु गौणत्वेपि टाङि ङोस् विभक्तीर्वर्ज्जयित्वा सर्वत्रात्वे कृते
आत्वम् युषाम् असाम् यूयं वयं १ युषां असां युषान् असान् २ एटाङ्योरित्यस्य व्याख्यानांतरेणां तस्य यत्वं युष्या अस्या युषाभ्यां असाभ्यां युषा
भिः असाभिः ३ तुभ्यं मह्यं युषाभ्याम् असाभ्यां युषभ्यम् असभ्यं ४ युषत् असत् युषाभ्यां असाभ्यां युषत् असत् ५ तव मम अंतस्य य
त्वे युष्योः अस्योः युषाकं असाकं ६ यत्वे युष्यि अस्यि युष्योः अस्योः युषासु असासु ॥ ॥ छ

छ छ छ छ छ छ

युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमेवांनौवस्नसौ षष्ठीचचतुर्थीच द्वितीयाच षष्ठी चतुर्थीद्वितीयास्ताभिस्ता अल्पस्वरत्वात् षष्ठीत्यस्य पूर्वनिपा
तः सहयोगेतृतीया तथा साहित्यं बोध्यते तत् किं साहित्यं श्रूयमाणविभक्तिकयोरेवादेशाभवंतिनलुप्तविभक्तिकयोरिति तेनसमासेयुष्माकं पुत्रइति
युष्मत्पुत्रोब्रवीति अस्माकंपुत्र इत्यस्मत्पुत्रोब्रवीतीत्यत्र प्रत्ययलक्षणेन षष्ठ्यंतयोर्युष्मदस्मदोर्वस्नसौन त्वामामा तेमयोरपवादोयं षष्ठीबहुवचनस्या
मोः अग्रहणंनव्याख्यानात् व्याख्यानतोविशेषप्रतिपत्तिर्नहिसंदेहादलक्षणमिति भावः श्रीशस्त्वावतु मापीह दत्तात्ते मेपिशर्मसः स्वामीते मेपिसह
रिः पातुवामपिनौ विभुः १ सुखंवांनौददात्वीशः पतिर्वामपि नौहरिः सोव्याद्वोनः शिवंवोनोदद्यात्सेव्योत्रवः सनः २ उक्तानादेशान् वचनक्रमेणोदाहर
ति द्वितीयैकवचने तथा श्रियईशः श्रीशो हरिरिह जगतित्वामपि मामपि अवतु रक्षतात् चतुर्थ्येकवचने यथा सहरिस्ते तुभ्यमपि मे मह्यमपि शर्म सुखं

युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयाभिस्तेमेवांनौवस्नसौ युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयासहितयोर्यथासंख्येना
मीआदेशाभवन्ति तत्रैकवचनेनसहतेमे द्विवचनेनवांनौ बहुवचनेनवस्नसौ त्वामामाअमासहितयोर्युष्मदस्मदोस्त्वामाए
तौभवतः श्रीशस्त्वावतुमापीहदत्तात्तेमेऽपिशर्म्मसः स्वामीतेमेऽपिसहहरिः पातुवामपिनौविभुः ॥१॥ सुखंवांनौददात्वीशः
पतिर्वामपिनौहरिः सोऽव्याद्वोनाश्शिवंवोनोदद्यात्सेव्योत्रवस्सनः ॥२॥ एकवाक्ये युष्मदस्मदादेशावक्तव्याः ॥ ॥

दत्तात् दान
पात्रे चतुर्थीषष्ठ्येकवचने यथा सहरिस्तेनव मेममापि स्वामी वर्तते स्वाम्यादियोगे इति षष्ठी सप्तम्यर्थविधानात् द्वितीयाद्विवचने यथा विभुर्विष्णुर्वां युवांनाव
पि आवामपि पातु रक्षतु चतुर्थीद्विवचने यथा ईशः शंभुर्वां युवाभ्यां नो आवाभ्यां सुखंददातु षष्ठीद्विवचने यथा हरिर्वां युवयोः नावपि आवयोरपि पातिरक्षती
ति पतिः द्वितीयाबहुवचने यथा सहरिर्वो युष्मान् नोऽस्मानव्यात् रक्षतु चतुर्थीबहुवचने यथा सवो युष्मभ्यं नो अस्मभ्यं शिवं कल्याणं दद्यात् षष्ठीबहु-
वचने यथा सहरिर्वो युष्माकं नोऽस्माकमत्र लोके सेवितुमर्हः सेव्यः ऋहलोर्ण्यदिति कर्मणि ण्यत् कृत्यानांकर्तरि वेति षष्ठी एकवाक्ये युष्मदस्मदादेशाव
क्तव्याः एकवाक्ये एकाख्याते ऽनयोः स्थाने उक्ता आदेशा भवंति एकमाख्यातं यत्रतदिति बहुव्रीहिः ॥ ॥ ६८ ६८

एकाख्यातं वाक्यमुच्यते ननु पश्य मृगो धावति इत्यादावेकवाक्यत्वव्यवहारो न स्यात् सत्यं एकाख्यातमित्यत्राख्यातं विशेष्यसमर्पकं विवक्षितं
ततश्च पश्य मृगो धावतीत्यत्राख्याद्वये सत्यपि पश्येत्यस्यैव विशेषसमर्पकत्वान्नोक्तदोषः तथा च वार्तिककारः आख्यातं सविशेषणं वाक्यमित्याह
त्वमोदनं पच न वभविष्यति अत्र तेइत्यादेशो न वाक्यद्वयत्वात् एकवाक्ये यथा अहं ते तुभ्यमोदनं दास्यामि एते अन्वादेशे वा वक्तव्याः एते तेमयादय आ
देशाः युष्मदस्मदोः स्थानेऽनन्वादेशेऽर्थे एते आदेशा विकल्पेन भवंति अन्वादेशे नित्यं युष्मदस्मदोः स्थानेऽन्वादेशेऽर्थे एते आदेशा नित्यं स्युः अनन्वादेशे,
र्थे धाता ब्रह्मा ते भक्तस्तव भक्तोस्तीति वा अन्वादेशे तस्मै पूर्वोक्ताय ते तुभ्यं विष्णवे नमोस्तु नादौ वाक्यादौ माभूत् यथा त्वां पातु पादादावपि माभूत्

एकाख्यातं वाक्यम् तेनेह न ओदनं पच तव भविष्यति इह तु स्यादेव शालीनामोदनं ते दास्यामि एते अनन्वादेशे वा धा
ता ते तव भक्तोस्ति अन्वादेशे नित्यं तस्मै ते नमः नादौ वाक्यादौ पादादौ च वर्तमानयोर्युष्मदस्मदो नैते त्वां पातु वेदैरशेषैस्सं
वेद्योऽस्मान् कृष्णस्सर्व्वदाव तु विशेष्यपूर्वसंबोधने तरपूर्वसम्बोधनं च हित्वाऽन्यस्मात्सम्बोधनात्परयो नैते देवास्मान् पाहि नृ
हरे विष्णोस्मान् रक्ष सर्व्वदा विशेष्यपूर्वान्तु हरे कृपालो नः पाहि सर्व्वदा रक्ष देव नः॥ ॥ ॥ यथा कृष्णोऽस्मान् सर्वदा सर्व

स्मिन् कालेऽवतु पातु कीदृशः अशेषैः समस्तैः वेदैः कृत्वा संवेद्यो ज्ञायमानः संवेत्तुं योग्यः संवेद्यः कर्मणि घ्यण् विशेष्यपूर्वं संबोधनं च हित्वान्यस्मा
त्संबोधनात्परयोर्नैते संबोधनात्परयोर्युष्मदस्मदोः स्थाने एते आदेशा न भवंति किं कृत्वा विशेष्यं पूर्वं यस्य तत् एतादृशं विशेषणात्मकं संबोधनं त्यक्त्वा च
पुनः संबोधनादितरत्पदं पूर्वं यस्य तत् एतादृशं संबोधनं त्यक्त्वा विशेष्यपूर्वात्संबोधनेतरपूर्वाच्च संबोधनात्परयोर्युष्मदस्मदोः स्थाने एते आदेशा भवंतीत्य
र्थः हे देव त्वमस्मान् पाहि रक्षेत्यर्थः हे नरसिंहावतार हे विष्णो त्वमस्मान् रक्ष पालयेत्यत्र संबोधनात्परस्यास्मानित्यस्य नसादेशो न जातः विशेष्यपूर्वात्सं
बोधनात्तु स्युरेव यथा हे हरे कृपास्यास्ति कृपालुस्तस्य संबोधनं हे कृपालो त्वं नोऽस्मान्पाहि हरे इति विशेष्यं कृपालो इति विशेषणं संबोधनेतरपूर्वात्संबोध
नात्तु यथा हे देव त्वं नोऽस्मान् सर्वस्मिन्काले रक्षेत्यत्र देवेति संबोधनस्य सत्त्वेपि ततः प्राचीनं रक्षेत्याश्रित्यादेशः॥ ॥ ६९ ६९

तरपूर्वसंबोधनं

५५

६३

चादिभिश्च चादिगणस्थाः पंचैवचादयोग्राह्यानत्वधिकाः लक्ष्यानुरोधात् सहयोगे तृतीया तयासाक्षात्संबंधोगृह्यतेनतुपरंपरासंबंधः यत्रयुष्मद
स्मदर्थंगतान्समुच्चयादीन् चादयो द्योतयंतितदाचादिभिः सहार्थद्वारायुष्मदस्मदोः साक्षात्संबंधस्तत्रायंनिषेधइत्यर्थः यथाआवयोर्ह्वे योर्युवयोर्ह्व
योश्चसमुच्चयेहरिरीशः स्वामीत्यर्थः वाविकल्पेप्रसिद्धौ अहपूजायां एवावधारणे परंपरासंबंधेतु स्युरेवयथा हरो हरिश्च मेस्वामीत्यत्र चशब्दोहरहरि
गतं समुच्चयंवक्ति हरिहराभ्यांसहास्मदः संबंधोनतुसमुच्चयेनकिंतु परंपरासंबंधोस्ति लक्षणं तुसमुच्चीयमानादर्थांतरसंबंधः परंपरासंबंधः अचाक्षु
षज्ञानार्थ धातुभिर्योगेचनअचाक्षुषज्ञानमर्थोयेषांते अचाक्षुषज्ञानार्थाअचाक्षुषज्ञानार्थाश्चते धातवश्च अचाक्षुषज्ञानार्थधातवस्तै र्योगे नैतेआ

चादिभिश्च च वा ह अह एव एभिर्योगे नैते आवयोर्युवयोश्चेशो हरिर्मामेव रक्षतु अचाक्षुषज्ञानार्थधातुभिर्योगे चन चे
तसात्वांसमीक्षते भक्तस्तवरूपं ध्यायति चाक्षुषज्ञाने तु भक्तस्त्वा पश्यति चक्षुषा विद्यमानपूर्व्वात्प्रथमान्तात्परयोरन्वादेशे
ऽप्येतेवा भक्तस्त्वमप्यहन्ते नहरिस्त्वां त्रायते समां त्वा मेतिवा चादिर्न्निपातः च वा ह अह एव एवम् नूनम् पृथक् शश्वत् युगप
त् भूयस् नह हन्त विना नानास्वस्ति अस्ति दोषा नक्तं मृषा मिथ्या मिथस् ॥ ॥ देशाभवंति यथासभक्तः चेतसा चित्तसंबधिध्या
नेन त्वांसमीक्षते पश्यतीत्यर्थः परंपरासंबंधेऽपिनिषेधः यथाभक्तस्तवरूपंध्यायति विद्यमानपूर्वात्प्रथमांतात्परयोरन्वादेशेप्येतेवा विद्यमानंपदं
पूर्वंयस्यसविद्यमानपूर्वस्तस्मात् प्रथमान्तात्परयोर्युष्मदस्मदोरन्वादेशे अर्थेपि वादेशाभवंति अन्वादेशेनित्यमित्यऽविशेषोक्त्या नित्यत्वे प्राप्ते
विकल्पार्थमिदं वचनंयथात्वंभक्तोऽहमपिभक्तस्तेन हरिस्त्वांमां त्रायतेपालयतीत्यर्थः अत्र तेनेति पूर्वं विद्यमानं पदं ततो हरिरिति प्रथमांतं ततः परस्य
युष्मच्छब्दस्यत्वादेशउत्तरत्र त्रायते इति विद्यमानंपदंततः सइतिप्रथमांतं ततः परस्यास्मच्छब्दस्य मादेशोबोध्यः इतियुष्मदस्मन्निरूपणम्
चादिर्निपातः ॥ ॥ छ छ छ छ छ

च आदिर्यस्यस चादिः निश्चयेन पतत्यने केष्वर्थेषु द्योतकत्वादिति निपातः पत्लृ पतने अस्मा ज्ज्वलादेर्ण इति ण प्रत्ययः असत्ववाचिनामेवचा-
दीनां निपात संज्ञा अव्ययसंज्ञा च भवति स्वरादीनां तु सत्ववाचिना मसत्ववाचिनां चाऽव्ययसंज्ञैव निपातसंज्ञा अव्ययसंज्ञा च भवति स्वरादीनां तु सत्व
वाचिनामसत्ववाचिनां चाऽव्ययसंज्ञैव न निपातसंज्ञा स्वस्ति वाचयति स्वः पश्यति स्वः पतती त्यादौ कर्मादिकारकयोगेन सत्व वाचकत्वं स्वरादीनां ह्रस्वे
व एकस्वराणां निपातानां संधिर्न भवतीति निपातसंज्ञा फलम् एकस्वराणां स्वरादीनां तु संधिर्भवत्येव तेषां निपा तसंज्ञाभावात् चेति समुच्चयान्वाचये त
रेतरयोगसमाहारेषु वा स्या द्विकल्पोपमयोरिवार्थेऽपि समुच्चये हेति प्रसिद्धौ अहेति पूजायां एवेत्यवधारणे अनव क्लृप्तौ च एवमित्युक्त परामर्शे नूनमि
ति निश्चये वितर्के च पृथगिति भिन्नार्थे शश्वदिति पौनःपुन्ये नित्ये सहार्थे च युगपदित्येक काले भूयसिति पुनरर्थे आधिक्ये च नहेति प्रत्यारंभे हंतेति हर्षे वि
षादे अनुकंपायां वाक्यारंभे च विनेति वर्जने नानेत्यनेक विनार्थयोः स्वस्तीति मंगले अस्तीति सत्तार्थे दोषेति रात्रौ वृथेति व्यर्थे मृषेति वितथे नक्तमिति रात्रौ मिथ्ये

अथ अथो अहो ह्यस् श्वस् उच्चैस् शनैस् ऋधक् ऋते आरात् दिवा रात्रौ सायं चिरम् मनाक् ईषत् जोषं तूष्णीम् बहिस् अव
स् समया निकषा अद्धा इद्धा वत् उपधा सामि सना सनत् सनात् तिरस् अन्तरा अन्तरेण सहसा ॥ ॥

ति वितथे मिथसि
ति रहस्सहार्थयोः अथेति मंगलानंतराऽऽरंभप्रश्नकार्त्स्न्याऽधिकारप्रतिज्ञासमुच्चयेषु अथो इत्यथवत् अहो इति विकल्पे चेदर्थेऽपि ह्यसिति अतीतेऽन्हि श्व
सिति अनागते दिने उच्चैसिति महति नीचैसिति अल्पेऽर्थे शनैसिति क्रियामांद्ये ऋधगिति सत्ये वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये ऋते वर्जने आरादिति दूर
समीपयोः दिवेति दिवसे रात्राविति निशि सायमिति निशामुखे चिरमिति बहुकाले मनाक् ईषत् इमावल्पे जोषमिति सुखे मौने च तूष्णीमिति मौने बहिस् अ
वस् इमौ बाह्ये समयेति समीपे मध्ये च निकषेति समीपे अद्धेति स्फुटावधारणयोः तत्त्वातिशययोरित्यन्ये इद्धेति प्राकाश्ये वत् वत्तुल्ये इत्यादिना विहितो यो
वत्प्रत्ययः स इह गृह्यते प्रत्ययमात्रस्य संज्ञाप्रयोजनाऽभावात् प्रत्ययांतं गृहीतव्यं यथा ब्राह्मणवत् क्षत्रियवत् उपधेति भेदे सामीत्यर्धे जुगुप्सितयोः सनासन
त् सनात् एते त्रयो नित्ये तिरसिति अंतर्द्धौ तिर्यगर्थे परिभवे च अंतरेति मध्ये विनार्थे च अंतरेणेति वर्जने सहसेति आकस्मिकाविमर्शयोः ॥ ॥ ७

अलमिति भूषणपर्याप्तिशक्तिवारणनिषेधेषु व षडिति हविर्दाने क्षमेति क्षांतौ विहायसेति विपदर्थे सुधेति व्यर्थे पुरेति अविरते चिरातीते भविष्य दासन्ने च मिथो इति रहस्सहार्थयोः प्रायसिति बाहुल्ये मुहुसिति पुनरर्थे साकंसार्धमेतौ सहार्थे नमसिति नतौ हिरुगिति वर्जने धिगिति निंदाभर्त्स नयोः मामाङ् एतौ निषेधाशंकयोः अमिति शैघ्र्ये ऽल्पे च आमिति अंगीकारे नेदिति शंकायां प्रतिषेधविचारसमुच्चयेषु चेदिति यद्यर्थे कच्चि दिती ष्टप्रश्ने च उञिति संनर्कसंबोधनपूरणेषु यदीति पक्षांतरे सत्यमिति प्रश्नप्रतिषेधसत्येषु जात्विति कदाचिदर्थे कमिति वारि मूर्द्ध निंदा सुखेषु शमिति सुखे ज्योगि- ति कालभूयस्त्वे प्रश्ने शीघ्रार्थे संप्रत्यर्थे च रहसिति एकांते अभीक्ष्णमिति पौनः पुन्ये अनेहा इति विस्मयविषाद शोक जुगुप्सासु तेषु आइति भयाश्चर्य्ययोः आदिति शंकायां त्वे विशेषवितर्कयोः है वितर्के दाने अनादरे च रै करोति ददातीत्यर्थः रै त्वं किं वदसीति किमिति पृच्छाजुगुप्सेषदर्थातिशयेषु यदिति यत्कारणे

तु अलम् वषट् क्षमा विहायसा सुधा पुरा मिथो प्रायस् मुहुस् सार्द्धं साकम् नमस् हिरुक् धिक् मा माङ् अम् आम् नेत् चेत् कच्चि त् उञ् यत् सत्यं जातु कं शं ज्योक् रहसि अभीक्ष्णं अनेहा आ आत् त्वै है रै किं यत् तत् इति एव हं हो स्वर् अन्तर् प्रातर् पुनर् सनुतर् यावत् तावत् स्वाहा स्वधा तथा हि खलु किल सुष्ठु दुष्ठु आदह उपसर्गस्वरविभक्तिप्रतिरूपकाश्च ॥ ॥

तदिति हेतौ इतीति हेतु प्रकारन कर्षेवमर्थव्यवस्थास्वरूपविवक्षानियमसमाप्ति प्रकृतवक्ष्यमाणपरामर्शमतेषु एवे त्युपमायां हं हो इति विचारे स्वरिति स्वर्गे परलोके च अंतरिति मध्ये प्रातरिति प्रत्यूषे पुनरित्य प्रथमे विशेषे च सनुतरित्यंतर्द्धाने स्वराद्याः पंच [illegible]अंताः यावत्तावदेतौ साकल्यावधिमानावधारणेषु साकल्ये यावत्कार्य्यं ता वत्कृतं अवधौ यावद्गंतव्यं तावत्तिष्ठामि माने यावद्दत्तं तावद्भुक्तं अवधारणे यावदमत्रं तावद् ब्राह्मणानामंत्रयस्वेति स्वाहेति देवताभ्यो दाने तथा हीति निदर्शने खल्विति निषेधवाक्यालंकारनिश्चयेषु किलेति वार्तायामलीके च ननु वितर्के ननु इति प्रश्नावधारणानुज्ञेच्छामंत्रेषु वाक्यारंभादावपि सुष्ठु प्र शंसायां दुष्ठु निकृष्टार्थे आदहेत्युपक्रमहिंसाकुत्सनेषु उपसर्गस्वरविभक्तिप्रतिरूपकश्च उपसर्गप्रतिरूपको यथा ॥ ६२

६२ ६२ ६२ ६२ ६२ ६२

अवदत्तमिति दोदत्तीतिदथादेशः इह अवस्यानुपसर्गत्वात्स्वरांतो वेति तकारो न भवति स्वरप्रतिरूपको यथा अ आ इत्यादि विभक्तिप्रतिरूपको य
था अहंयुः अहमिति सिबंतप्रतिरूपकमहंकारे वर्तते ऊर्णाहंशुभंभ्यो युसिति युः यदाऽस्मच्छब्दान्निष्पन्नो यो हंशब्दस्तस्मात् प्रत्ययः क्रियेत त
र्हि समासप्रत्यययोरिति लुकि सति अस्मद्युइति स्थिते मदाय इत्यत्रेव मदादेशे मद्युरिति स्यादिति भावः हे ताविति निमित्ते स्वयमित्यात्मनेत्यर्थे उ
तेति विकल्पे नञिति निषेधे पदार्थाविक्षयेषु तदन्यतद्विरुद्धतदभावेषु च स्वधेति पितृभ्यो दाने स्मेत्यतीते पादपूरणे च अस्मीत्यहमित्यर्थे वै पादपूर
णे विशेषेऽपि शंबडित्यंतःकरणे आभिमुख्ये च नो निषेधे दिष्ट्याइत्यानंदे सद्धजनदर्शन प्रातिलोम्ये घिगित्यन्ये अइति संबोधनेऽधिक्षेपे निषेधे च आइति
वाक्यस्मरणयोः इइति संबोधनजुगुप्साविस्मयेषु ईभर्त्सने उऊदुःखवितर्कयोः ऋॠऌॡगानसमूहे ए संबोधने ऐ आश्चर्ये ओ संबोधने औ अं

अवदत्तम् अहंयुः हेतौ अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ पशु शुकं यथा कथा च पाट् प्याट् अंग है हे भोः अये
द्य विषु रे अरे एकपदे द्राक् मंक्षु युत् आतः श्रौषट् वौषट् इत्यादि तत्रादिर्विभक्त्यर्थे निपात्यते तस्मिन्निति तत्र अ
स्मिन्निति अत्र यस्मिन्निति यत्र ॥ ॥

गीकारे पशु सम्यगर्थे शुकं शैघ्र्ये यथा कथा चेत्यनादरे पाट् प्याट् अंग है हे भोः अयि एते
सतसंबोधने अद्येति हिंसाप्रातिलोम्यपादपूरणेषु विषुइति नानार्थे रे अरे एतौ नीचामंत्रणे एकपदे इत्यकस्मादित्यर्थे द्राक् मंक्षु एतौ शैघ्र्ये युत्
इति कुत्सायां आतइतीतो पीत्यर्थे श्रौषट् वौषट् एतौ हविर्दाने अन्येऽपि संति तथाहि कामं स्वाच्छंदो प्रकाममित्यतिशये सांप्रतमिति न्याय्ये परमिति
किंत्वर्थे साक्षादिति प्रत्यक्षे साचीति तिर्यगर्थे संवदिति वर्षे अवश्यमिति निश्चये उषेति रात्रौ ओमिति अंगीकारे ब्रह्मणि च भूरिति पृथिव्यां भुव इत्यं
तरिक्षे कुकुत्सिते पदार्थयोः अंजसेति सत्वशीघ्रार्थयोः मिथु इति द्वावित्यर्थे अस्तमिति विनाशे स्थाने इति युक्ते वरमिति ईषदुत्कर्षे सुदीति शुक्लप
क्षे बदीति कृष्णपक्षे तुर्मिति तुंकारे आहेति उवाचेत्यर्थे आसेति बभूवेत्यर्थे आयेति प्रतिबंधे असीति त्वमित्यर्थे वाक्यालंकारयोः ब्रूहीति प्रेषाऽ
नुज्ञावसरेषु वामिति युवामित्यर्थे चटु चाटु एतौ प्रियवाक्ये एवमन्येऽप्यूह्याः तत्रादिर्विभक्त्यर्थे आदिशब्दः प्रकारे वर्तते गणाभावात् विभक्तिनाम

र्थो ऽभिधेयो य उपादानादिस्तस्मिन्नर्थे तत्रादिर्निपात्यते नत्र आदिर्यस्य स तत्रादिः शब्दसमूह इत्यर्थः तस्मिन्निति तत्र अस्मिन्नेतस्मिन्नित्यत्र यस्मिन्नि
ति यत्र कस्मिन्निति कुत्र क्व तेन प्रकारेण तथा सर्वेण प्रकारेणेति सर्वथा केन प्रकारेणेति कथम् अनेन प्रकारेण एतेन प्रकारेण वेतीत्थं तस्मात्तस्या वेति त
तः यस्मात् यस्या वेति यतः कस्मात् कस्या वेति कुतः सर्वस्मात् सर्वस्या वेति सर्वतः बह्वोरिति बहुतः पूर्वस्मिन् देशे पूर्वस्माद्देशात्पूर्वो वा देशः परः पुरस्तात्
अधः अधस्तात् ऊर्ध्वे ऊर्ध्वात ऊर्ध्वो वेति उपरि उपरिष्टात् दक्षिणस्मिन् दक्षिणो वेति दक्षिणेन दक्षिणस्यां दिशि दूरे इति दक्षिणा दक्षिणाहि उत्तरस्मा
दुत्तरस्या वेति उत्तरतः उत्तरस्यां दिशि दूरे इति उत्तराहि उत्तरा स भवानिति ततो भवान् तत्रभवान् तं भवंतमिति ततो भवंतं तत्रभवंतं तेन भवतेति ततो भवता तत्रभव

कस्मिन्निति कुत्र क्व कुह तेन प्रकारेण तथा सर्वथा कथम् इत्थं अस्मादिति इतः एतस्मादित्येतः ततः यतः सर्वतः कु
तः बहुतः सार्वविभक्तिकस्तसित्येके आदितः मध्यतः उपरि अन्ततः पूर्वस्मिन्निति पुरः पुरस्तात् अधः अधस्तात् उपरिष्टा
त् परस्मिन्निति परेण दक्षिणेन दक्षिणा दक्षिणतः उत्तरतः दक्षिणस्यां दिशि दूरे दक्षिणा दक्षिणाहि राजाधीनं राजसात्
सर्वं भस्म भस्मसात् उरी ऊरी उररी विस्तारांगीकारयोः सद्यादिः काले समाने ह्नि सद्यः अद्य अधुना इदानीम् तस्मिन् काले तदा
यदा कदा सर्वदा एकदा अन्यदा सपदि साम्प्रतं झटिति तूर्णं ॥ ॥

तातस्मै भवते इति ततो भवते तत्रभवते तस्माद्भवत इति ततो भव
तः तत्रभवतः तस्य भवत इति ततो भवतः तत्रभवतः तस्मिन्भवतीति ततो भवति तत्रभवति सद्य आदिः काले अत्राप्यादिशब्दः प्रकारे वर्तते पूर्वदेशकाला
दिविशेषो विभक्त्यर्थो गृहीतः इह तु कालविशिष्ट एव विभक्त्यर्थो गृह्यते समाने ऽह्नीति समानस्य सादेशः द्यस
प्रत्ययश्च तत्काले सद्यः अस्मिन्नहनीति इदमो ऽशादेशो द्यः प्रत्ययश्च सांप्रत दिने ऽद्य अधुना इदानीमेतौ वर्तमानक्षणार्थे यस्मिन् काले यदा कस्मिन् का
ले कदा तस्मिन् काले सर्वदा एकस्मिन् काले एकदा अन्यस्मिन् काले अन्यदा सपदि सांप्रतं संप्रति एते त्रयो वर्तमानक्षणार्थे झटिति तूर्णम् ॥ ॥

६७ ६७ ६७ ६७ ६७ ६७ ६७

आशुशीघ्रमेते शैघ्र्ये पूर्वस्मिन्नहनीति पूर्वेद्युः परस्मिन्नहनीति परे द्यवि अस्मिन् वर्षे इति ऐषमः पूर्वस्मिन् वर्षे परुत् पूर्वेतरे वर्षे परारि अन्यस्मिन्न ह
नीति अन्येद्युः अन्यतरस्मिन्नहनीति अन्यतरेद्युः उभयस्मिन्नहनीति उभयेद्युः तस्मिन् काले तर्हि कस्मिन्काले कर्हि यस्मिन्काले यर्हि एतस्मिन्काले ए
तर्हि प्रादिरुपसर्गः प्रआदिर्यस्य स प्रादिः तद्गुणसंविज्ञानो ऽयं बहुव्रीहिः प्रकर्षइति लिंगात् उपसमीपे सृज्यते उच्चार्यते क्रियावाचकस्य शब्दस्येत्युपसर्गः
कर्मणि घञ् अन्वर्थसंज्ञाबलात् क्रियासंबद्धः इति लभ्यते यदुक्तं यत् क्रियायुक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञेति उपसर्गा हि अर्थविशेषस्य द्योतका न तु वा
चकाः प्रादिकर्मणि दीर्घे शभृशसंभवतृप्तिषु वियोगशुद्धिशक्तीच्छाशांतिपूजाग्रदर्शने १ आदिकर्मणि प्रारंभकर्मणि यथा प्रयातः दीर्घे यथा प्रबला मूषिकाः
ईशे यथा प्रभुः भृशार्थे यथा प्रवदंति संभवे यथा हिमवतो गंगा प्रभवति तृप्तौ यथा प्रभुक्तमन्नं वियोगे यथा प्रोषितः शुद्धौ यथा प्रसन्नमुदकं शक्तौ यथा प्रशक्तः

आशु शीघ्रम् पूर्वेद्युः परेद्युः परेद्यवि ऐषमः परुत् परारि अन्येद्युः अन्यतरेद्युः उभयेद्युः तर्हि यर्हि कर्हि एतर्हि प्रादिरुप-
सर्गः प्र परा अप सम् अनु अव निस् निर् दुस् दुर् अभि वि अधि अति सु उद् नि प्रति अपि परि उप आङ् श्रत् अन्तर् आविर् प्रा
ग्धातोः उपसर्गा धातोः प्राक् प्रयोक्तव्याः ॥ ॥

इच्छायां यथा प्रार्थयते कन्यां शांतौ य
था प्रशांतोग्निः पूजायां यथा प्रांजलिः स्थितः अग्रे यथा प्रवालं दर्शने यथा प्रलोकयति १ वधे गतौ दर्शने च विक्रमे भिमुखे भृशे अधीनमोक्षणप्रादिर्लौम्यके
षु परा मतः २ वधे यथा पराहतः गतौ यथा परागतः दर्शने यथा परादृष्टः विक्रमे यथा पराक्रांतः अभिमुखे यथा परावृत्तः भृशे यथा पराजितः अधीने यथा पराधीनः
मोक्षणे यथा पराकृतस्त्यक्त इत्यर्थः प्रातिलोम्ये यथा पराङ्मुखः ३ अपो वियोगे विकृतौ विपरीते निदर्शने आनंदे वर्जने चौरे चारणे समुदाहृतः ३ वियोगे यथा
अपयाति निकृतौ यथा अपकृतवान् विपरीते यथा अपशब्दः निदर्शने यथा अपादिशति आनंदे यथा अपहसति वर्ज्जने यथा अपवनाद्दृष्टो देवः चौर्ये यथा
अपहरति चारणे यथा अपसरति ३ संयोगैक्ये च प्रभवे सत्यप्रत्यक्षसिद्धिषु भूषाश्लेषस्वीकरणक्रोधाभिमुखवाचि सम् ४ संयोगे यथा संगतः पुत्रेण ऐ
क्ये यथा संविदति सख्यः प्रभवे यथा काष्ठेभ्योग्निः संभवति सत्ये यथा गां संजानाति प्रत्यक्षे यथा संपश्यते सिद्धौ यथा संसिद्धिः भूषायां यथा संस्कृता कन्या

आश्लेषे यथा संधत्ते स्वीकारे यथा संगृण्हाति क्रोधे यथा संक्रुद्धः अभिमुखे यथा संयाति ४ वेदाधिष्ठानसामीप्य पश्चाद्भावानुबंधने साम्याभिमुख
हीनेषु विसर्गे लक्षणेत्वनुः ५ वेदे यथा अनुवाकमधीते अधिष्ठाने यथा अनुष्ठानं देशः सामीप्ये यथा अनु मेघं वर्षति पश्चाद्यथा अनुरथं भावानुबंधने यथा
अनुशयः साम्ये यथा अनुकृतिः अभिमुखे यथा अनुवत्सो मातरं धावति हीने यथा अन्वर्जुनं योद्धारः विसर्गे यथा अनुज्ञातः लक्षणे यथा अनुवनमसतां
गतिः ५ ज्ञानावलंबशुद्धीषदर्थे व्याप्तिपराभवे अवो ज्ञेयो वियोगे च लोकयोगानुसारतः ६ ज्ञाने यथा अवगतोर्थः अवलंबे यथा अवलंब्य यष्टिं गच्छति शु-
द्धौ यथा अवदातः ईषदर्थे यथा अवलंब्यते व्याप्तौ यथा अवकीर्णं पराभवे यथा अवघ्नंति वियोगे यथा अवयातः ६ निर्वियोगात्ययादेशातिक्रमे लाभनि-
श्चिते दुरीषदर्थे कृच्छ्रार्थे क्लेशासंपत्तिसंकटे ७ वियोगे यथा निःसंगो ब्रवीति अत्यये यथा निर्मेघं आदेशे यथा निर्दिष्टं अतिक्रमे यथा निष्क्रांतः लाभे य
था निर्दिष्टः निश्चिते यथा निश्चितं दुरईषदर्थे यथा दुर्गतिः कृच्छ्रार्थे यथा दुर्जीवः क्लेशे यथा दुर्बलः असंपत्तौ यथा दुर्गतः संकटे यथा दुर्दिनं ७ नानावि-
योगातिशये भृशमोहेशवाङ्मृधे पैशून्यास्मरणे भूषेषदर्थानाभिमुख्यके ८ अनवस्थासुख्यशौर्यदर्शने विरुदाहृतः आङिच्छाभयवाक्येषदर्थाश्ले
षादिकर्म्मणि ९ नानावियोगे यथा वियुक्तः अतिशये यथा विकीर्णः भृशे यथा वितदानघो महत्य इत्यर्थः मोहे यथा विमनस्कः ईशे यथा विभुः वाङ्मृधे
यथा विवदंते पैशून्ये यथा विगायति अस्मरणे यथा विस्मृतः भूषायां यथा विभूषितः ईषदर्थे यथा विलोपितः अनादिमुख्यके यथा विमुखः ८ अनव-
स्थायां यथा विभ्रांतः सुख्ये यथा विशिष्टः शौर्य्ये यथा विक्रांतः दर्शने यथा विलोकयति आङ् इच्छायां यथा आकांक्षति भये यथा आबिभेति वाक्ये
यथा आजानाति ईषदर्थे यथा आताम्रनखः आश्लेषे यथा आलिंगति आदिकर्मणि यथा आरभते ९ बंधनेभिविधौ शाठ्य कृच्छ्र सामीप्य संश्रये अ-
भिमंत्रनिवृत्त्याशादानानुभवविस्मये १० प्रतिष्ठादेशमर्य्यादास्पर्द्धासुख्योर्ध्वकर्मणि निराश्रयः धोः भृशादेशानित्यकौशलबंधने ११ बंधने यथा कव
चमावध्नंति अभिविधौ यथा आकुमारं यशः शाठ्ये यथा आचरति कपटेन कृच्छ्रे यथा आहतः सामीप्ये यथा आसन्नावयं संश्रये यथा आवसथः
अभिमंत्रे यथा आमंत्रणं निवृत्तौ यथा आधावति आशायां यथा आशास्ते आदाने यथा आदत्ते अनुभवे यथा आशीतं विस्मये यथा आ एवं किल त
त् १० प्रतिष्ठायां यथा आस्पदं आदेशे यथा आदिष्टः मर्यादायां यथा आमुक्तेः दुःखं स्पर्द्धायां यथा आह्वयते मल्लं मल्लः सुख्ये यथा आगच्छति ऊर्ध्वक

आपतंत्यस्मिन्नित्यापातोमार्गः पांडुरत्वादिगुणकानिमेघजालानिप्रकर्षन्मारुतोयथातथावभूवेतिशेषः ॥ ७८ ॥ कपिनाकृष्यमाणानिमहाभ्राणिचकाशिरे मारुतेनाकृष्यमाणानीवेतिशेषः ॥ ७९ ॥ ८० ॥ तत्रप्लवगे ॥ ८१ ॥ तंनहितनतापेत्यन्वयः वायुःसिषेवे श्रमापनयनायेतिभावः ॥ ८२ ॥ ८३ ॥ कपिवरंविगतक्लमंवीक्ष्यनागादयस्तुष्टुवुः ॥ ८४ ॥ इक्ष्वाकुकुलस्यस्वोत्पादकत्यमानंसत्कारमर्थयतेतथाभूतः ॥ ८५ ॥ विवक्षतांवागिंद्रियवतांप्राणिनाम् सर्ववाच्यःसर्ववाच्यंनिंदायस्मिंस्तादृशोभविष्यामि सर्वनिंदास्पदंभविष्यामीत्यर्थः ॥ ८६ ॥ उक्तमेवविवृणो

आपातेपक्षिसंघानांपक्षिराजइवव्रजन् ॥ हनूमान्मेघजालानिप्रकर्षन्मारुतोयथा ॥ ७८ ॥ पांडुरारुणवर्णानिनीलमंजिष्ठकानिच ॥ कपिनाकृष्यमाणानिमहाभ्राणिचकाशिरे ॥ ७९ ॥ प्रविशन्नभ्रजालानिनिष्पतंश्चपुनःपुनः ॥ प्रच्छन्नश्चप्रकाशश्चचंद्रमाइवदृश्यते ॥ ८० ॥ प्लवमानंतुतंदृष्ट्वाप्लवगंत्वरितंतदा ॥ ववृषुस्तत्रपुष्पाणिदेवगंधर्वदानवाः ॥ ८१ ॥ ततापनहितंसूर्यःप्लवंतंवानरेश्वरम् ॥ सिषेवेचतदावायूरामकार्यार्थसिद्धये ॥ ८२ ॥ ऋषयस्तुष्टुवुश्चैनंप्लवमानंविहायसा ॥ जगुश्चदेवगंधर्वाःप्रशंसंतोवनौकसम् ॥ ८३ ॥ नागाश्चतुष्टुवुर्यक्षारक्षांसिविविधानिच ॥ प्रेक्ष्यसर्वेकपिवरंसहसाविगतक्लमम् ॥ ८४ ॥ तस्मिन्प्लवगशार्दूलेप्लवमानेहनूमति ॥ इक्ष्वाकुकुलमानार्थीचिंतयामाससागरः ॥ ८५ ॥ साहाय्यंवानरेंद्रस्ययदिनाहंहनूमतः ॥ करिष्यामिभविष्यामिसर्ववाच्योविवक्षताम् ॥ ८६ ॥ अहमिक्ष्वाकुनाथेनसागरेणविवर्धितः ॥ इक्ष्वाकुसचिवश्चायंतन्नार्हत्यवसादितुम् ॥ ॥ ८७ ॥ तथामयाविधातव्यंविश्रमेतयथाकपिः ॥ शेषंचमयिविश्रांतःसुखीसोऽतितरिष्यति ॥ ८८ ॥ इतिकृत्वामतिंसाध्वींसमुद्रश्छन्नमंभसि ॥ हिरण्यनाभंमैनाकमुवाचगिरिसत्तमम् ॥ ८९ ॥ त्वमिहासुरसंघानांदेवराज्ञामहात्मना ॥ पातालनिलयानांहिपरिघःसन्निवेशितः ॥ ९० ॥ त्वमेषांज्ञातवीर्याणांपुनरेवोत्पतिष्यताम् ॥ पातालस्याप्रमेयस्यद्वारमावृत्यतिष्ठसि ॥ ९१ ॥

ति अहमिति तत्तस्मादेषःअवसादितुंअवसत्तुंश्रमंगंतुंनार्हति सागरेणविवर्धितइत्युक्त्याकश्चिद्देशःसगरखातस्याप्येतत्संबद्धइतिज्ञायते ॥ ८७ ॥ शेषंमार्गशेषम् ॥ ८८ ॥ अंभसित्वांभसिच्छन्नंहिरण्यनाभंहिरण्यप्रधानंतन्मयमितियावत् नाभिःप्रधानेकस्तूर्यामिति ॥ ८९ ॥ परिघइति पक्षच्छेदभयात्समुद्रप्रवेशानंतरंपातालस्थराक्षसनिरोधार्थंद्वारनिरोधकपरिघवन्मैनाकःस्थापितइत्यर्थः ॥ ९० ॥ ज्ञातवीर्याणांदेवराजेनेतिशेषः एषामसुराणाम् ॥ ९१ ॥

उपरिष्टात्स्वेगच्छतास्वशरीरेणाधःसागरेवगाढयास्वस्यच्छायया प्रतिबिंबेनलक्षितःसःसागरेमारुताविष्टानौरिवासीत् नौश्चोपरिविद्यमानपदार्थेनसहसागरेवायुवशाद्वेगेनचंचलागच्छतीतित दुपमा ॥ ६५ ॥ सोन्मादइवसापस्मारइव घूर्णनफेनवमनविक्रोशनादिविकारसाम्यात् ॥ ६६ ॥ ऊर्मिजालानामभिघ्नन् कर्मणःशेषत्वविवक्षयाषष्ठी तान्यभिघ्नन्नितियावत् शैलसदृशेन अनेनसागरोर्मीणामत्युन्नतत्वंसूचितम् ॥ ६७ ॥ कपिवातःकपिनोत्थापितोवातः मेघवातोमेघमंडलगोवातः ॥ ६८ ॥ रोदसीद्यावापृथिव्यौविकिरन्निवपृथक्कुक्षिपन्निव ॥ ६९ ॥ अतीत्या

उपरिष्टाच्छरीरेणच्छाययाचावगाढया ॥ सागरेमारुताविष्टानौरिवासीत्तदाकपिः ॥ ६५ ॥ यंयंदेशंसमुद्रस्यजगामसमहाकपिः ॥ सतुतस्यांगवेगेनसोन्मादइवलक्ष्यते ॥ ६६ ॥ सागरस्योर्मिजालानामुरसाशैलवर्ष्मणा ॥ अभिघ्नंस्तुमहावेगःपुप्लुवेसमहाकपिः ॥ ६७ ॥ कपिवातश्चबलवान्मेघवातश्चनिर्गतः ॥ सागरंभीमनिर्ह्रादंकंपयामासतुर्भृशम् ॥ ६८ ॥ विकर्षन्नूर्मिजालानिबृहंतिलवणांभसि ॥ पुप्लुवेकपिशार्दूलोविकिरन्निवरोदसी ॥ ६९ ॥ मेरुमंदरसंकाशानुद्धतान्सुमहार्णवे ॥ अत्यक्रामन्महावेगस्तरंगान्गणयन्निव ॥ ७० ॥ तस्यवेगसमुद्धूष्टंजलंसजलदंतदा ॥ अंबरस्थंविबभ्राजेशरदभ्रमिवाततम् ॥ ७१ ॥ तिमिनक्रझषाःकूर्मादृश्यंतेविवृतास्तदा ॥ वस्त्रापकर्षणेनेवशरीराणिशरीरिणाम् ॥ ७२ ॥ क्रममाणंसमीक्ष्याथभुजगाःसागरंगमाः ॥ व्योम्नितंकपिशार्दूलंसुपर्णमिवमेनिरे ॥ ७३ ॥ दशयोजनविस्तीर्णात्रिंशद्योजनमायता ॥ छायावानरसिंहस्यजवेचारुतराऽभवत् ॥ ७४ ॥ श्वेताभ्रघनराजीववायुपुत्रानुगामिनी ॥ तस्यसाशुशुभेछायापतितालवणांभसि ॥ ७५ ॥ शुशुभेसमहातेजामहाकायोमहाकपिः ॥ वायुमार्गेनिरालंबेपक्षवानिवपर्वतः ॥ ७६ ॥ येनासौयातिबलवान्वेगेनकपिकुंजरः ॥ तेनमार्गेणसहसाद्रोणीकृतइवार्णवः ॥ ७७ ॥

तीत्यगमनाद्गिणयन्निवेत्युत्प्रेक्षा ॥ ७० ॥ तस्यवेगेनसमुद्धूष्टंऊर्ध्वंक्षिप्तंअतएवसजलदंजलदसहचरंमेघमंडलपर्यंतमूर्ध्वंगतमंबरस्थंजलमाततंविततंशरदभ्रमिवशरन्मेघइवबभौ शुक्लत्वादिति भावः ॥ ७१ ॥ विवृताःवेगाज्जलोत्सारणेनव्यक्तदेहाः वस्त्रापकर्षणेनवस्त्रापहारेण शरीराणिअवयवाः ॥ ७२ ॥ ७३ ॥ छायाप्रमाणवर्णनेनतच्छरीरप्रमाणमपिवर्णितप्रायम् इयंमाध्याह्निकीच्छाया ॥ ७४ ॥ श्वेताभ्रघनराजीवश्वेताभ्रयुक्तमेघपंक्तिवत्तस्यच्छायाशुशुभे शुक्लदंष्ट्रादिनानावर्णत्वादुक्तोपमानिर्वाहः ॥ ७५ ॥ ७६ ॥ द्रोणीहर्म्यादौजलनिर्गमकाष्ठयंत्रंतज्जलधारायुक्तइवकृतोद्रोणीकृतः मेघेषुनदाघातेनतेभ्योजलस्रवणादितिभावः ॥ ७७ ॥

अपतदितिच्छेदः ॥ यदपतत्तल्लघुत्वेनोपपन्नंउपपत्तिमत् ॥ ५१ ॥ सर्ववर्णानांविद्युत्सुसत्त्वान्नानावर्णपुष्पोघानवद्धस्यसविद्युद्गणमेघोपमा ॥ ५२ ॥ रामाभिःरमणीयाभिः ॥ ५३ ॥ ५४ ॥
विवृतवक्त्रत्वात्पिबन्निवेति अधोवक्त्रत्वेइयमुत्प्रेक्षा ऊर्ध्ववक्त्रत्वेआकाशंपिपासुरिवेति ॥ ५५॥ विप्रकाशेतेविशेषेणप्रकाशेतेस्म अनलौदावानलौ ॥ ५६ ॥ पिंगेपिंगलवर्णेपरिमंडलेपरि
तोबद्धप्रभामंडलेस्थितौचंद्रसूर्याविवएकगिरौउदयेपिंगलमंडलतयाऽवस्थितौचंद्रसूर्याविवेत्यर्थः ॥ ५७ ॥ नासिकयायुक्तमितिशेषः संध्याकालिकंसूर्यमंडलंयथातथावभाविल्यर्थः ॥

लघुत्वेनोपपन्नंतद्विचित्रंसागरेऽपतत् ॥ द्रुमाणांविविधंपुष्पंकपिवायुसमीरितम् ॥ ५१ ॥ पुष्पौघेणसुगंधेननानावर्णेनवानरः ॥ बभौमेघइवोद्यन्वैविद्युद्गणविभूषितः ॥ ५२ ॥ तस्यवेगसमुद्भूतैःपुष्पैस्तोयमदृश्यत ॥ ताराभिरिवरामाभिरुदिताभिरिवांबरम् ॥ ५३ ॥ तस्यांबरगतौबाहूददृशातेप्रसारितौ ॥ पर्वताग्राद्विनिष्क्रांतौपंचास्याविवपन्नगौ ॥ ५४ ॥ पिबन्निवबभौचापिसोर्मिजालंमहार्णवम् ॥ पिपासुरिवचाकाशंददृशेसमहाकपिः ॥ ५५ ॥ तस्यविद्युत्प्रभाकारेवायुमार्गानुसारिणः ॥ नयनेविप्रकाशेतेपर्वतस्थाविवानलौ ॥ ५६ ॥ पिंगेपिंगाक्षमुख्यस्यबृहतीपरिमंडले ॥ चक्षुषीसंप्रकाशेतेचंद्रसूर्याविवस्थितौ ॥ ५७ ॥ मुखंनासिकयातस्यताम्रयाताम्रमाबभौ ॥ संध्ययासमभिस्पृष्टंयथास्यात्सूर्यमंडलम् ॥ ५८ ॥ लांगूलंचसमाविद्धंप्लवमानस्यशोभते ॥ अंबरेवायुपुत्रस्यशक्रध्वजइवोच्छ्रितम् ॥ ५९ ॥ लांगूलचक्रोहनुमान्शुक्लदंष्ट्रोऽनिलात्मजः ॥ व्यरोचतमहाप्राज्ञःपरिवेषीवभास्करः ॥ ६० ॥ स्फिग्देशेनातिताम्रेणरराजसमहाकपिः ॥ महतादारितेनेवगिरिर्गैरिकधातुना ॥ ६१ ॥ तस्यवानरसिंहस्यप्लवमानस्यसागरम् ॥ कक्षांतरगतोवायुर्जीमूतइवगर्जति ॥ ६२ ॥ खेयथानिपतत्युल्काउत्तरांताद्विनिःसृता ॥ दृश्यतेसानुबंधाचतथासकपिकुंजरः ॥ ६३ ॥ पतत्पतंगसंकाशोव्यायतःशुशुभेकपिः ॥ प्रवृद्धइवमातंगःकक्ष्ययाबध्यमानया ॥ ६४ ॥

॥ ५८ ॥ ५९ ॥ शुक्लदंष्ट्रत्वंस्वरूपकथनमात्रंनतुपरिवेषिभास्करोपमोपयोगि ॥ ६० ॥ स्फिग्देशेनकटिप्रदेशेन तन्मात्रस्यातिताम्रत्ववर्णनादन्यत्राल्पवद्वर्णत्वम् अतएवदारितगैरिकधातुयुक्तगिर्युपमा ॥ ६१ ॥ जीमूतेइतिसप्तम्यंतमितिकतकः गर्जतिजगर्ज ॥ ६२ ॥ उत्तरांतादुत्तरोर्ध्वदिग्भागात् सानुबंधासूक्ष्मोल्कांतरानुबद्धा इदंविशेषणंपुच्छसाहित्यात् ॥ ६३ ॥
पतत्पतंगसंकाशःगच्छत्सूर्यसंकाशःव्यायतोदीर्घःकपिर्वस्त्रेणबध्यमानयाकक्ष्ययागजमध्यबंधनरज्ज्वायुक्तःप्रवृद्धोमातंगइवबभौ कक्ष्याप्रकोष्ठेहर्म्यादेःकांच्यांमध्येभबंधनेइति ॥ ६४ ॥

कृताःकंठेगुणाःस्रजोयैस्ते क्षीबामत्ताः पुष्करंपद्मम् ॥ २५ ॥ पारिहार्यशब्दःश्रेष्ठवाचीतिकतकः पारिहार्योवलयइतितीर्थः एतदग्रेश्लोकद्वयंप्रक्षिप्तंकचिदितिकतकः ॥ २६ ॥ २७ ॥
॥ २८ ॥ तपांतपस्विनामाकाशचारितपस्विनांवाचःएषपर्वतसंकाशइत्यादिश्लोकद्वयरूपाःश्रुत्वाविद्याधरास्तमप्रमेयंददृशुः तद्वाकूश्रवणात्पूर्वंतुभूतैरयंगिरिर्भिद्यतइतिज्ञातवंतः ॥ २९ ॥
दुधुवेचसहनुमान् ॥ ३० ॥ आनुपूर्व्याद्वृत्तंत्रिवलयंलांगूलंविचिक्षेपेत्यन्वयः ॥ ३१ ॥ आविद्धमास्फालितंभुग्नंच ॥ ३२ ॥ बाहूसंस्तंभयामासेत्युत्प्लवनसन्नाहाभिनयः बाह्वोःसंस्तंभनंना

कृतकंठगुणाःक्षीबारक्तमाल्यानुलेपनाः ॥ रक्ताक्षाःपुष्कराक्षाश्चगगनंप्रतिपेदिरे ॥ २५ ॥ हारनूपुरकेयूरपारिहार्यधराःस्त्रियः ॥ विस्मिताःसस्मिता स्तस्थुराकाशेरमणैःसह ॥ २६ ॥ "दर्शयंतोमहाविद्यांविद्याधरमहर्षयः ॥ सहितास्तस्थुराकाशेवीक्षांचक्रुश्चपर्वतम् ॥ १ ॥ शुश्रुवुश्चतदाशब्दमृषी णांभावितात्मनाम् ॥ चारणानांचसिद्धानांस्थितानांविमलेंऽबरे ॥ २ ॥" एषपर्वतसंकाशोहनुमान्मारुतात्मजः ॥ तितीर्षतिमहावेगःसमुद्रंवरुणा लयम् ॥ २७ ॥ रामार्थंवानरार्थंचचिकीर्षन्कर्मदुष्करम् ॥ समुद्रस्यपरंपारंदुष्प्रापंप्राप्तुमिच्छति ॥ २८ ॥ इतिविद्याधरावाचःश्रुत्वातेषांतपस्विनाम् ॥ तमप्रमेयंददृशुःपर्वतेवानरर्षभम् ॥ २९ ॥ दुधुवेचसरोमाणिचकंपेचानलोपमः ॥ ननादचमहानादंसुमहानिवतोयदः ॥ ३० ॥ आनुपूर्व्याच्चवृत्तंतल्लां गूलंलोमभिश्चितम् ॥ उत्पतिष्यन्विचिक्षेपपक्षिराजइवोरगम् ॥ ३१ ॥ तस्यलांगूलमाविद्धमतिवेगस्यपृष्ठतः ॥ ददृशेगरुडेनेवह्रियमाणोमहोरगः ॥ ३२ ॥ बाहूसंस्तंभयामासमहापरिघसन्निभौ ॥ आससादकपिःकट्यांचरणौसंचुकोचच ॥ ३३ ॥ संहृत्यचभुजौश्रीमांस्तथैवचशिरोधराम् ॥ तेजः सत्त्वंतथावीर्यमाविवेशसवीर्यवान् ॥ ३४ ॥ मार्गमालोकयन्दूरादूर्ध्वंप्रणिहितेक्षणः ॥ रुरोधहृदयेप्राणानाकाशमवलोकयन् ॥ ३५ ॥ पद्भ्यांदृढ मवस्थानंकृत्वासकपिकुंजरः ॥ निकुंच्यकर्णौहनुमानुत्पतिष्यन्महाबलः ॥ ३६ ॥

मपर्वतोपरिदृढप्रतिष्ठापनम् कपिःकट्यांकटिप्रदेशेआससादकायप्रसारणात्कृशोभूत् उरःशिरसोरूर्ध्वप्रसारणेसपृष्ठचरणभागस्याधःसंकोचनेतथात्वंकटिदेशस्येतिबोध्यम् ॥ ३३ ॥ भुजौ संहृत्यअंसप्रदेशेसंकुच्य शिरोधरांग्रीवांकंठदेशेसंकुच्य तेजःपराभिभवसामर्थ्यम् सत्त्वंबलंशारीरम् वीर्यमांतरंबलम् ॥ ३४ ॥ दूरान्मार्गमालोकयन् अतएवोर्ध्वप्रणिहितेक्षणः हृदयेप्राणप्र तिष्ठास्थाने ॥ ३५ ॥ कर्णौनिकुंच्यसंकुच्य उत्पतनसन्नाहवशाद्धिकर्णसंकोचोभवति ॥ ३६ ॥

श्वसनस्यवायोरिवविक्रमोवेगोयस्यसः ॥ ३७ ॥ तद्वद्गमिष्याम्[illegible]अनेनतद्वदेवगत्वाकृतकार्यआगमिष्यामीतिसूचितम् तस्यैवप्रपंचोनहीत्यादि ॥ ३८ ॥ अनेनैवएवंविधेनैव ॥ ३९ ॥ आनयिष्यामिआनेष्यामि सीतयासह मिलित्वेतिशेषः ॥ ४० [illegible]पाट्येति ओषधिपर्वतोत्पाटनवदितिभावः ॥ ४१ ॥ अविचारयन्लंघनक्लेशलेशमप्यगणयन् तस्यैवप्रपंचनंसुपर्णमित्यादि ॥ ४२ ॥ वेगाद्धनूमतिसमुत्पततिसतितेनगरोहिणःपर्वत[illegible]सर्वान्विटपान्सर्वाःशाखाःसंहृत्यसंक्षिप्यवेगात्समुत्पेतुः ॥ ४३॥ मत्ताःकोयष्टिभायेषुतान् कोयष्टिकोयष्टिभौपर्यायौ॥४४॥

वानरान्वानरश्रेष्ठइदंवचनमब्रवीत् ॥ [illegible]राघवनिर्मुक्तःशरःश्वसनविक्रमः॥ ३७॥ गच्छेत्तद्वद्गमिष्यामिलंकांरावणपालिताम् ॥ नहिद्रक्ष्यामि यदितांलंकायांजनकात्मजाम्॥३[illegible]नवहिवेगेनगमिष्यामिसुरालयम् ॥ यदिवात्रिदिवेसीतांनद्रक्ष्यामिकृतश्रमः॥३९॥ बध्वाराक्षसराजानमानयिष्यामिरावणम् ॥ सर्वथ[illegible]कार्योहमेष्यामिसहसीतया॥ ४० ॥ आनयिष्यामिवालंकांसमुत्पाट्यसरावणाम् ॥ एवमुक्तातुहनुमान्वानरोवानरोत्तमः॥४१॥ उत्पपात[illegible]नवेगवानविचारयन्॥ सुपर्णमिवचात्मानंमेनेसकपिकुंजरः॥४२॥ समुत्पततिवेगात्तुवेगात्तेनगरोहिणः॥ संहृत्यविटपान्सर्वान्समुत्पे[illegible]ततः॥ ४३ ॥ समत्तकोयष्टिभकान्पादपान्पुष्पशालिनः॥ उद्वहन्नुरुवेगेनजगामविमलेंऽबरे॥ ४४॥ उरुवेगोत्थितावृक्षामुहूर्तंकपिमन्वयु[illegible]स्थितंदीर्घमध्वानंस्वबंधुमिवबांधवाः॥ ४५॥ तमूरुवेगोन्मथिताःसालाश्चान्येनगोत्तमाः॥ अनुजग्मुर्हनूमंतंसैन्याइवमहीपतिम्॥ ४६ [illegible]पुष्पिताग्रैर्बहुभिःपादपैरन्वितःकपिः॥ हनूमान्पर्वताकारोबभूवाद्भुतदर्शनः॥ ४७॥ सारवंतोऽथयेवृक्षान्यमज्जँल्लवणांभसि॥ भयादिवमहेंद्र[illegible]पर्वतावरुणालये ॥ ४८॥ सनानाकुसुमैःकीर्णःकपिःसांकुरकोरकैः ॥ शुशुभेमेघसंकाशःखद्योतैरिवपर्वतः॥ ४९॥ विमुक्तास्तस्यवेगेन[illegible]पुष्पाणितेद्रुमाः॥ व्यवशीर्यंतसलिलेनिवृत्ताःसुहृदोयथा॥५०॥

॥ ४५ ॥ साला[illegible]ः सैन्यशब्दोर्धर्चादिः ॥ ४६ ॥ पर्वताकारः तत्त्वंबृहत्त्वेनपुष्पितवृक्षवत्त्वेनच ॥ ४७ ॥ सारवंतोगुरुत्वातिशययुक्ताःखदिरादयस्तेगुरुत्वाल्लवणांभसिन्यमज्जन् अर्थादन्येलघव[illegible]इतिबोध्यम् महेंद्रस्यभयात्पक्षच्छेदभयात्पर्वताइवन्यमज्जन् ॥४८॥ नानाकुसुमैःस्वानुयायिद्रुमीयैः सांकुरकोरकैः कानिचित्कुसुमान्यंकुरितानिकानिचित्कोरकरूपाणिकानि[illegible]सितानीत्यर्थः ॥ ४९ ॥ तस्यहनूमतोवेगेनविमुक्तास्ततोविभक्तास्तेवृक्षाःसलिलेव्यवशीर्यंत आर्षोडभावः सुहृदोयथा बंधुप्रस्थापनार्थंगताःसुहृदोयथातान्प्रस्थाप्य निवर्तंतेतद्वत्[illegible] ॥

॥ १२ ॥ ...पुलत्वाद्रामेणाभिवाद्यप्रदक्षिणंकृतोयु... ...भौमत्वाद्राजानंप्रदक्षिणंकृत्वाप्रयातइत्यन्वयः ॥ १३ ॥ वृत्रासुरेहतेसतिविष्णुनोपेंद्रेणसहस्थितोवासवोयथा विष्णुंविसृजतितथात्वंवकयंविसृज्येत्यर्थः ॥ १४ ॥ १५॥ यस्मा... ...रतनसहरणसहायार्थमुद्योगःकृतस्तस्माद्भवतापरमाप्रीतिर्दर्शितापरमसौहृदंचदर्शितम् एवमनुवादादेवोद्योगकरणंगम्यते ॥१६॥

युधाजित्तुतथेत्याहगमनंप्रतिराघव॥ रत्नानिचधनंचैवत्वय्येवाक्षय्यमस्त्विति॥ १२॥ प्रदक्षिणंचराजानंकृत्वाकेकयवर्धनः॥ रामेणचकृतःपूर्वमभिवाद्यप्रदक्षिणम्॥ १३॥ लक्ष्मणेनसहायेनप्रयातःकेकयेश्वरः॥ हतेऽसुरेयथावृत्रेविष्णुनासहवासवः॥ १४॥ तंविसृज्यततोरामोवयस्यमकुतोभयम्॥ प्रतर्दनंकाशिपतिंपरिष्वज्येदमब्रवीत्॥ १५॥ दर्शिताभवताप्रीतिर्दर्शितंसौहृदंपरम्॥ उद्योगश्चत्वयाराजन्भरतेनकृतःसह॥ १६॥ तद्भवानद्यकाशेयपुरींवाराणसींव्रज॥ रमणीयांत्वयागुप्तांसुप्राकारांसुतोरणाम्॥ १७॥ एतावदुक्त्वाचोत्थायकाकुत्स्थःपरमासनात्॥ पर्यष्वजतधर्मात्मानिरंतरमुरोगतम्॥ १८॥ विसर्जयामासतदाकौसल्याप्रीतिवर्धनः॥ राघवेणकृतानुज्ञःकाशेयोह्यकुतोभयः॥ १९॥ वाराणसींययौतूर्णंराघवेणविसर्जितः॥ विसृज्यतंकाशिपतिंत्रिशतंपृथिवीपतीन्॥ २०॥ प्रहसन्राघवोवाक्यमुवाचमधुराक्षरम्॥ भवतांप्रीतिरव्यग्रातेजसापरिरक्षिता॥ २१॥ धर्मश्चनियतोनित्यंसत्यंचभवतांसदा॥ युष्माकंचानुभावेनतेजसाचमहात्मनाम्॥ २२॥ हतोदुरात्मादुर्बुद्धीरावणोराक्षसाधमः॥ हेतुमात्रमहंतत्रभवतांतेजसाहतः॥ २३॥ रावणःसगणोयुद्धेसपुत्रामात्यबांधवः॥ भवंतश्चसमानीताभरतेनमहात्मना॥ २४॥ श्रुत्वाजनकराजस्यकाननात्तनयांहृताम्॥ उद्युक्तानांचसर्वेषांपार्थिवानांमहात्मनाम्॥ २५॥ कालोप्यतीतःसुमहान्गमनंरोचयाम्यतः॥ प्रत्यूचुस्तंचराजानोहर्षेणमहतावृताः॥ २६॥

काशिदेशेभवःकाशेयः ढगार्षः भवान्पुरींव्रजव्रजतु ॥ १७ ॥ उरोगतंयथातथानिरंतरंगाढंपर्यष्वजत ॥ १८ ॥ तदा ततइत्यर्थः ॥ १९ ॥ २० ॥ प्रहसन्निति अनेकशतसंख्यस्वसुहृत्पृथिवीपनिदर्शनजसंतोषात्प्रहासः भवतांतेजसाअव्यग्रानिश्चलतयास्थिताप्रीतिर्विनात्पुनरागत्यानुभवयोग्यतया रिरक्षितामयिभवद्भिर्मद्गुणमालोच्यनभवतांमयिप्रीतिःकिंतुस्वीयसत्स्वभावेनैवेत्याशयः ॥ २१ ॥ उक्तमेवार्थंस्पष्टयति धर्मश्चेति ॥ २२ ॥ २३ ॥ रावणोहतइतिशेषः भवंतश्चसमानीतामेलिताः एवंचदेवाद्भवतांक्लेशानुभवोनसंपन्नइतिशेषः ॥ २४ ॥ २५ ॥ २६ ॥

॥ २७ ॥ हतशात्रवं हतशत्रुसमूहम् ॥ २८ ॥ एतत्त्वय्युपपन्नम् सकललोकमनोरमणत्वादितिभावः प्रशंसार्हसकललोकप्रशंसार्हस्वभावयुक्त ईदृशींभवदुक्तप्रशंसाजातीयांप्रशंसांवक्तुंनजानीमोतस्मात्क्षमस्वैव ॥ २९ ॥ यथासदाभवान्नोहृदिस्थःएवंवयमपित्वद्विषयया महताप्रीत्याघृतास्त्वद्धृदियथावर्तामहेतथाअस्मासुतेप्रीतिश्चभवेत्भूयात् द्वेषेणहृदयस्थतामाभूदित्येतदुक्तिः बाढमित्येवेति रामेणोक्ताइतिशेषः ॥ ३० ॥ ३१ ॥ गमिष्यामइत्यूचुरितिपूर्वेणान्वयः पूजितास्तेचेत्यादिनावृत्तक्रियानुवादः ॥ ३२ ॥ ॥ इतिश्रीरा० श्रीरामीयेरा० वा० आ० उत्तर० अष्टत्रिं

दिष्ट्यात्वंविजयीरामराज्यंचापिप्रतिष्ठितम् ॥ दिष्ट्याप्रत्याहृतासीतादिष्ट्याशत्रुःपराजितः ॥ २७ ॥ एषनःपरमःकामएषानःप्रीतिरुत्तमा ॥ यत्त्वांविजयिनंरामपश्यामोहतशात्रवम् ॥ २८ ॥ एतत्त्वय्युपपन्नंचयदस्मांस्त्वंप्रशंससे ॥ प्रशंसार्हनजानीमःप्रशंसांवक्तुमीदृशीम् ॥ २९ ॥ आपृच्छामोगमिष्यामोहृदिस्थोनःसदाभवान् ॥ वर्तामहेमहाबाहोप्रीत्यात्वमहताव्रताः ॥ ३० ॥ भवेच्चतेमहाराजप्रीतिरस्मासुनित्यदा ॥ बाढमित्येवराजानोहर्षेणपरमान्विताः ॥ ३१ ॥ ऊचुःप्रांजलयःसर्वेराघवंगमनोत्सुकाः ॥ पूजितास्तेचरामेणजग्मुर्देशान्स्वकान्स्वकान् ॥ ३२ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेअष्टत्रिंशःसर्गः ॥ ३८ ॥ ॥ ७ ॥ ॥ तेप्रयातामहात्मानःपार्थिवास्तेप्रहृष्टवत् ॥ गजवाजिसहस्रौघैःकंपयंतोवसुंधराम् ॥ १ ॥ अक्षौहिण्योहितत्रासन्राघवार्थेसमुद्यताः ॥ भरतस्याज्ञयानेकाःप्रहृष्टबलवाहनाः ॥ २ ॥ ऊचुस्तेचमहीपालाबलदर्पसमन्विताः ॥ नरामरावणंयुद्धेपश्यामःपुरतःस्थितम् ॥ ३ ॥ भरतेनवयंपश्चात्समानीतानिरर्थकम् ॥ हताहिराक्षसाःक्षिप्रंपार्थिवैःस्युर्नसंशयः ॥ ४ ॥ रामस्यबाहुवीर्येणरक्षितालक्ष्मणस्यच ॥ सुखंपारेसमुद्रस्ययुध्येमविगतज्वराः ॥ ५ ॥ एताश्चान्याश्चराजानःकथास्तत्रसहस्रशः ॥ कथयंतःस्वराज्यानिजग्मुर्हर्षसमन्विताः ॥ ६ ॥ स्वानिराज्यानिमुख्यानिऋद्धानिमुदितानिच ॥ समृद्धधनधान्यानिपूर्णानिवसुमंतिच ॥ ७ ॥

शःसर्गः ॥ ३८ ॥ ॥ ७ ॥ ॥ अथविसृज्यराजभिःस्वदेशस्थैःप्रेषितोपहारग्रहः प्रयाताइति प्रहृष्टवत्प्रहृष्टाः ॥ १ ॥ राघवार्थेराघवस्यरणसहायार्थे ॥ २ ॥ रामरावणमिति रामशत्रुं रावणमित्यर्थः मध्यमपदलोपीसमासः ॥ ३ ॥ पश्चात्रावणवधानंतरम् पार्थिवैर्हताःस्युर्यदिपूर्वंसमानीताःस्युरितिशेषः ॥ ४ ॥ ५ ॥ ६ ॥ उक्तानिस्वराज्यानिअनूद्यविशिनष्टि स्वानीत्यादि मुख्यानिप्रसिद्धानि धनंजीवाजीवरूपम् वसुमंतिमहा[illegible]ंति ॥ ७ ॥

[illegible]लिंगव्यत्ययआर्षः

यथा[illegible] यथापूर्वमक्षतशरीरतयापुराणिगत्वाप्रि[illegible] मार्थंददुः आनुयात्रिकेभ्योभरतलक्ष्मणशत्रुघ्नेभ्यइतिशेषः ॥ ८ ॥ ९ ॥ अजाविकंविशिष्टचर्मवत् ॥ १० ॥ ११ ॥१२॥

यथापुराणितेगत्वारत्नानिविविधान्यथ ॥ रामस्यप्रियकामार्थमुपहारंनृपाददुः॥८॥ अश्वान्यानानिरत्नानिहस्तिनश्चमदोत्कटान् ॥ चंदनानिचमुख्यानिदिव्यान्याभरणानिच ॥ ९ ॥ मणिमुक्ताप्रवालांस्तुदास्योरूपसमन्विताः ॥ अजाविकंचविविधंरथांस्तुविविधान्बहून् ॥ १० ॥ भरतोलक्ष्मणश्चैवशत्रुघ्नश्चमहाबलः ॥ आदायतानिरत्नानिस्वांपुरींपुनरागताः ॥ ११ ॥ आगम्यचपुरींरम्यामयोध्यांपुरुपर्षभाः ॥ तानिरत्नानिचित्राणिरामायसमुपानयन् ॥ १२ ॥ प्रतिगृह्यचतत्सर्वंरामःप्रीतिसमन्वितः ॥ सुग्रीवायददौराज्ञेमहात्माकृतकर्मणे ॥ १३ ॥ विभीषणायचददौतथान्येभ्योपिराघवः॥राक्षसेभ्यःकपिभ्यश्चयैर्वृतोजयमाप्तवान्॥१४॥ तेसर्वेरामदत्तानिरत्नानिकपिराक्षसाः॥ शिरोभिर्धारयामासुर्भुजेषुचमहाबलाः॥१५॥ हनूमंतंचनृपतिरिक्ष्वाकूणांमहारथः ॥ अंगदंचमहाबाहुमंकमारोप्यवीर्यवान् ॥ १६ ॥ रामःकमलपत्राक्षःसुग्रीवमिदमब्रवीत् ॥ अंगदस्तेसुपुत्रोयंमंत्रीचाप्यनिलात्मजः॥ १७॥ सुग्रीवमंत्रितेयुक्तौममचापिहितेरतौ ॥ अर्हतोविविधांपूजांत्वत्कृतेवैहरीश्वर ॥ १८ ॥ इत्युक्त्वाव्यपमुच्यांगाद्भूषणानिमहायशाः ॥ सबबंधमहार्हाणितदांगदहनूमतोः॥ १९ ॥ आभाष्यचमहावीर्यान्राघवोयूथपर्षभान् ॥ नीलंनलंकेसरिणंकुमुदंगंधमादनम् ॥ २० ॥ सुषेणंपनसंवीरंमैंदंद्विविदमेवच ॥ जांबवंतंगवाक्षंचविनतंधूम्रमेवच ॥ २१ ॥ बलीमुखंप्रजंघंचसन्नादंचमहाबलम् ॥ दरीमुखंदधिमुखमिंद्रजानुंचयूथपम् ॥ २२ ॥ मधुरंश्लक्ष्णयावाचानेत्राभ्यामापिबन्निव ॥ सुहृदोमेभवंतश्चशरीरंभ्रातरस्तथा ॥ २३ ॥ युष्माभिरुद्धृतश्चाहंव्यसनात्काननौकसः ॥ धन्योराजाचसुग्रीवोभवद्भिःसुहृदांवरैः ॥ २४ ॥ एवमुक्त्वाददौतेभ्योभूषणानियथार्हतः ॥ वज्राणिचमहार्हाणिसस्वजेचनरर्षभः ॥ २५ ॥

॥ १३ ॥ १४ ॥ शिरोभिःकिरीटकुंडलादीनांधारणम् अंगदादीनांभुजेषुधारणम् ॥ १५ ॥ अंकमारोप्य बालाविवेतिशेषः अनेनभगवतास्वस्यनिरतिशयबलवत्त्वेनेश्वरत्वंसूचितम ॥ १६ ॥ ॥ १७ ॥ मंत्रितेमंत्रे ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥

मांसानिचेत्यस्यमुंजनइतिशेषः ॥ २६ ॥ एवंतेषामिति वसंतेभिषिक्तेनरामेणमासानंतरंविशेषसत्कारप्राप्तौशिशिरःशिशिरर्तुसंबंधीद्वितीयोमासःसुखंगतइत्युक्त्यासंवत्सरपर्यंततेषांरामसमीपे वासउक्तइतितीर्थादयः वस्तुतोधिकमासगणनयामांतमानेनाश्विनकृष्णपक्षेयोध्याप्रवेशेनतत्रैवतदुत्तरशुक्लपक्षेवाभिषेकः सायोमासइत्यनेनकार्तिकांतास्थितिरुक्ता ततःशिशिरोद्वितीयोमासःफाल्गुनोगतइतिहेमंतशिशिरौअर्धशरच्चतत्रवासइतिपंचमासपर्यंततत्रवासइतिलभ्यतेइतिममभाति पूर्वकांडांतसंक्षेपेणोक्तस्यैवार्थस्यात्रकांडेविस्तरेणोक्तिरितिबोध्यं एवंतेषामिति भरता

तेपिवंतःसुगंधीनिमधूनिमधुपिंगलाः ॥ मांसानिचसुमृष्टानिमूलानिचफलानिच ॥ २६ ॥ एवंतेषांनिवसतांमासःसाग्रोययौतदा ॥ मुहूर्तमिवतेसर्वेरामभक्त्याचमेनिरे ॥ २७ ॥ रामोपिरेमेतैःसार्धवानरैःकामरूपिभिः ॥ राक्षसैश्चमहावीर्यैर्ऋक्षैश्चैवमहाबलैः ॥ २८ ॥ एवंतेषांययौमासोद्वितीयःशिशिरःसुखम् ॥ वानराणांप्रहृष्टानांराक्षसानांचसर्वशः ॥ २९ ॥ इक्ष्वाकुनगरेरम्येपरांप्रीतिमुपासताम् ॥ रामस्यप्रीतिकरणैःकालस्तेषांसुखंययौ ॥ ३० ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेएकोनचत्वारिंशःसर्गः ॥ ३९ ॥ तथास्मतेषांवसतामृक्षवानररक्षसाम् ॥ राघवस्तुमहातेजाःसुग्रीवमिदमब्रवीत् ॥ १ ॥ गम्यतांसौम्यकिष्किंधांदुराधर्षांसुरासुरैः ॥ पालयस्वसहामात्यैराज्यंनिहतकंटकम् ॥ २ ॥ अंगदंचमहाबाहोप्रीत्यापरमयायुतः ॥ पश्यत्वंहनुमंतंचनलंचसुमहाबलम् ॥ ३ ॥ सुषेणंश्वशुरंवीरंतारंचबलिनांवरम् ॥ कुमुदंचैवदुर्धर्षंनीलंचैवमहाबलम् ॥ ४ ॥ वीरंशतबलिंचैवमैंदंद्विविदमेवच ॥ गजंगवाक्षंगवयंशरभंचमहाबलम् ॥ ५ ॥ ऋक्षराजंचदुर्धर्षंजांबवंतंमहाबलम् ॥ पश्यप्रीतिसमायुक्तोगंधमादनमेवच ॥ ६ ॥ ऋषभंचसुविक्रांतंप्लवंगंचसुपाटलम् ॥ केसरिंशरभंशुंभंशंखचूडंमहाबलम् ॥ ७ ॥ येयेमेसुमहात्मानोमदर्थेत्यक्तजीविताः ॥ पश्यत्वंप्रीतिसंयुक्तोमाचैषांविप्रियंकृथाः ॥ ८ ॥ एवमुक्त्वाचसुग्रीवमाश्लिष्यचपुनःपुनः ॥ विभीषणमुवाचाथरामोमधुरयागिरा ॥ ९ ॥ लंकांप्रशाधिधर्मेणधर्मज्ञस्त्वंमतोमम ॥ पुरस्यराक्षसानांचभ्रातुर्वैश्रवणस्यच ॥ १० ॥

यानीतरत्नविशेषैर्विशेषसत्कारप्राप्तिपर्यंतंनिवसतांतेषांसाग्रास्तुःपंचषट्दिनाधिकामासागताः ॥ २७ ॥ २८ ॥ २९ ॥ प्रीतिकरणैःसंमाननैः ॥ ३० ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेएकोनचत्वा[illegible]सर्गः ॥ ३९ ॥ ॥ ७ ॥ ॥ अथतेषांविसर्जनं वसतांतेषामितिनिर्धारणेषष्ठी ॥ १ ॥ किष्किंधांप्रतीतिशेषः ॥ २ ॥ ॥ ३ [illegible] ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ पुरस्यपुरव[illegible]सानां वैश्रवणस्यसंमतोसीतिशेषः ॥ १० ॥

ध्रुवंचिरकालम् ॥ ११ ॥ अहंचेति अनेनरावणवत्क्रूरबुद्धिःकदापिनकार्या तथासतिसुग्रीवादयोरावणमिवत्वामपिनाशयिष्यंतीतिव्यंग्यम् ॥ १२ ॥ १३ ॥ अद्भुतंजगदाश्चर्यभूतं स्वयंभो
रिवअनंतकल्याणगुणस्यभगवतोब्रह्मणइव ॥ १४ ॥ १५ ॥ नित्यदासर्वकाले स्नेहोनामप्रियायांप्रियस्यैवसदास्थितिहेतुः भक्तिर्नामपरलोकगतित्वेनोपास्यत्वबुद्धिः नित्यदेत्यनेनजलंविनाम
त्स्यस्येवक्षणमपित्वांविनाजीवितुमशक्यत्वंसूचितं अन्यत्रभावोमागच्छतु विषयांतरेइत्यर्थः ॥ १६ ॥ तावद्वत्स्यंति त्वत्कथाश्रवणपरमामृतास्वादनबलादितिभावः ननुतदुत्तरमित्याशयः व

माचबुद्धिमधर्मेत्वंकुर्याराजन्कथंचन ॥ बुद्धिमंतोहिराजानोध्रुवमश्नंतिमेदिनीम् ॥ ११ ॥ अहंचनित्यशोराजन्सुग्रीवसहितस्त्वया ॥ स्मर्तव्यःपर
याप्रीत्यागच्छत्वंविगतज्वरः ॥ १२ ॥ रामस्यभाषितंश्रुत्वाऋक्षवानरराक्षसाः ॥ साधुसाध्वितिकाकुत्स्थंप्रशशंसुःपुनःपुनः ॥ १३ ॥ तवबुद्धिर्महा
बाहोवीर्यमद्भुतमेवच ॥ माधुर्यपरमंरामस्वयंभोरिवनित्यदा ॥ १४ ॥ तेषामेवंब्रुवाणानांवानराणांचरक्षसाम् ॥ हनूमान्प्रणतोभूत्वाराघवंवा
क्यमब्रवीत् ॥ १५ ॥ स्नेहोमेपरमोराजंस्त्वयितिष्ठतुनित्यदा ॥ भक्तिश्चनियतावीरभावोनान्यत्रगच्छतु ॥ १६ ॥ यावद्रामकथावीरचरिष्यतिमही
तले ॥ तावच्छरीरेवत्स्यंतुप्राणाममनसंशयः ॥ १७ ॥ यच्चैतच्चरितंदिव्यंकथातेरघुनंदन ॥ तन्ममाप्सरसोरामश्रावयेयुर्नरर्षभ ॥ १८ ॥ तच्छ्रुत्वाहं
ततोवीरतवचर्यामृतंप्रभो ॥ उत्कंठांतांहरिष्यामिमेघलेखामिवानिलः ॥ १९ ॥ एवंब्रुवाणंरामस्तुहनूमंतंवरासनात् ॥ उत्थायसस्वजेस्नेहाद्वाक्यमे
तदुवाचह ॥ २० ॥ एवमेतत्कपिश्रेष्ठभवितानात्रसंशयः ॥ चरिष्यतिकथायावदेषालोकेचमामिका ॥ २१ ॥ तावत्तेभविताकीर्तिःशरीरेप्यसव
स्तथा ॥ लोकाहियावत्स्थास्यंतितावत्स्थास्यंतिमेकथाः ॥ २२ ॥ एकैकस्योपकारस्यप्राणान्दास्यामितेकपे ॥ शेषस्येहोपकाराणांभवामऋणिनो
वयम् ॥ २३ ॥ मदंगेजीर्णतांयातुयत्त्वयोपकृतंकपे ॥ नरःप्रत्युपकाराणामापत्स्वायातिपात्रताम् ॥ २४ ॥ ततोस्यहारंचंद्राभंमुच्यकंठात्सराघवः ॥
वैडूर्यतरलंकंठेबबंधचहनूमतः ॥ २५ ॥

त्स्यंत्वितिपाठेवसंत्वित्यर्थः आर्षःस्यः एतेनमुक्तिमप्यनादृत्यत्वत्कथामृतपानमेवाकांक्षितमितिदर्शितम ॥ १७ ॥ तेतवकथारूपंयदेतद्दिव्यचरितंतदित्यन्वयः ॥ १८ ॥ उत्कंठांत्वद्दर्शनविषयाम्
॥ १९ ॥ २० ॥ एवमेतदितिएवंशब्दार्थःचरिष्यतिकथेत्यादि ॥ २१ ॥ एवंचहनूमतेभगवताआकारनित्यत्वंकल्पस्थायित्वरूपंदत्तमित्याभाति ॥ २२ ॥ उपकाराणांमध्येशेषस्येत्यर्थः ॥ २३ ॥
प्रत्युपकाराणांपात्रतांनरआपत्स्वायातीत्यनेनप्रत्युपकारार्थिनउपकृतावापत्प्रार्थनाभवतिसामेकदापिमाभूदितिव्यंग्यम् ॥ २४ ॥ कंठान्मुच्यस्वीयाद्विसृज्येत्यर्थः तरलोहारमध्यमणिः ॥ २५ ॥

हेमशैलेंद्रोमेरुश्शृंगेणआक्रांतमस्तकस्तादृशःपर्वतोयथाआमूलशिखरंतत्किरणैर्व्याप्तोभवतितथाहनूमांस्तद्रत्नकिरणव्याप्तोजातइत्यर्थः ॥ २६ ॥ श्रुत्वेति हनूमदुद्देश्यकमेकैकस्येत्यादिवाक्यम् ॥ २७ ॥ निरंतरमुरोगतःगाढंपरिष्वक्तः ॥ २८ ॥ बाष्पकलाःकंठस्यबाष्परुद्धत्वेनाव्यक्तभाषिणः ततएवदुःखातिशयेनसाश्रुनेत्राः विचेतसःशून्यमनसःअतःसंमूढाइवमूर्च्छिताइवबभूवुरितिशेषः ॥ २९ ॥ देहंत्यजन्देहीवरामवियोगखिन्नाअभूवन्नितिशेषः शरीरात्माभिमानिनांदेहत्यागेनेवतेषांरामविश्लेषेणखेदोभूदित्यर्थः ॥ ३० ॥ ३१ ॥ ॥ इतिश्रीरामाभि०श्रीरा०

तेनोरसिनिबद्धेनहारेणमहताकपिः ॥ रराजहेमशैलेंद्रश्शृंगेणाक्रांतमस्तकः॥ २६॥ श्रुत्वातुराघवस्यैतदुत्थायोत्थायवानराः॥ प्रणम्यशिरसापादौनिर्जग्मुस्तेमहाबलाः॥ २७॥ सुग्रीवःसचरामेणनिरंतरमुरोगतः॥ विभीषणश्चधर्मात्मासर्वेतेबाष्पविक्लवाः॥ २८॥ सर्वेचतेबाष्पकलाःसाश्रुनेत्राविचेतसः॥ संमूढाइवदुःखेनत्यजंतोराघवंतदा॥ २९॥ कृतप्रसादास्तेनैवंराघवेणमहात्मना॥ जग्मुःस्वंस्वंगृहंसर्वेदेहीदेहमिवत्यजन्॥३०॥ ततस्तुतेराक्षसऋक्षवानराःप्रणम्यरामंरघुवंशवर्धनम्॥ वियोगजाश्रुप्रतिपूर्णलोचनाःप्रतिप्रयातास्तुयथानिवासिनः॥ ३१॥ ॥इत्यार्षेश्रीम०वा०आ०उत्तरकांडेचत्वारिंशःसर्गः॥ ४०॥ ॥४१॥ ॥विसृज्यचमहाबाहुर्ऋक्षवानरराक्षसान्॥ भ्रातृभिःसहितोरामःप्रमुमोदसुखंसुखी॥ १॥ अथापराह्णसमयेभ्रातृभिःसहराघवः॥ शुश्रावमधुरांवाणीमंतरिक्षान्महाप्रभुः॥ २॥ सौम्यरामनिरीक्षस्वसौम्येनवदनेनमाम्॥ कुबेरभवनात्प्राप्तंविद्धिमांपुष्पकंप्रभो॥ ३॥ तवशासनमाज्ञायगतोस्मिभवनंप्रति॥ उपस्थातुंनरश्रेष्ठसचमांप्रत्यभाषत॥ ४॥ निर्जितस्त्वंनरेंद्रेणराघवेणमहात्मना॥ निहत्ययुधिदुर्धर्षंरावणंराक्षसेश्वरम्॥ ५॥ ममापिपरमाप्रीतिर्हतेतस्मिन्दुरात्मनि॥ रावणेसगणेचैवसपुत्रेसहबांधवे॥ ६॥ सत्वंरामेणलंकायांनिर्जितःपरमात्मना॥ वहसौम्यतमेवत्वमहमाज्ञापयामिते॥ ७॥ परमोह्येषमेकामोयत्त्वंराघवनंदनम्॥ वहेर्लोकस्यसंयानंगच्छस्वविगतज्वरः॥ ८॥ सोहंशासनमाज्ञायधनदस्यमहात्मनः॥ त्वत्सकाशमनुप्राप्तोनिर्विशंकःप्रतीच्छमाम्॥ ९॥

रा०वा०आ०उत्तरकांडेचत्वारिंशःसर्गः॥ ४०॥ ॥४१॥ ॥ अथधनदप्रेषितपुष्पकस्यसंपूज्यपुनरिच्छोपस्थापनतयाविसर्जनं विसृज्येति ॥ १ ॥ अंतरिक्षात्अंतरिक्षचरान्निःसृतामित्यर्थः ॥ २ ॥ पुष्पकंविद्धि पुष्पकाधिष्ठातृदेवतायाअयंवादः ॥ ३ ॥ ४ ॥ निर्जितःअतस्तमेववहेतिशेषः ॥ ५ ॥ ६ ॥ ७ ॥ किंचमद्वहनादपिसर्वलोकप्रियरामवहनंममपरमप्रियमित्याह परमइति लोकस्यभूराद्यशेषाभिमतलोकप्रापणस्य संयानंसमीचीनयानभूतस्त्वंराघवनंदनंवहेरितियदेषमेपरमःकामोतस्त्वंगच्छेतिसंबंधः ॥ ८ ॥ ९ ॥

॥ १० ॥ ११ ॥ वृत्तदोषःसद्व्यवहारातिक्रमदोषः ॥ १२ ॥ १३ ॥ स्मरेस्मरामि हेसौम्य सिद्धानांगतौव्योममार्गे विषादेनास्मद्वियोगदुःखेनमायोजय आत्मानमितिशेषः सुखमास्वेति तात्पर्यम् ॥ १४ ॥ १५ ॥ पुष्पकंपुष्पमिवलघ्वितिपुष्पकं संज्ञायांकन् ॥ १६ ॥ विबुधात्मनिदेवमूर्तौ ॥ १७ ॥ कानिदृश्यंतेतदाहामानुषाणीति सत्वानिपुष्पकादीनि व्याहृतानि मत्वर्थीयाजं

अपृष्यःसर्वभूतानांसर्वेषांधनदाज्ञया ॥ चराम्यहंप्रभावेणतवाज्ञांपरिपालयन् ॥ १० ॥ एवमुक्तस्तदारामःपुष्पकेणमहाबलः ॥ उवाचपुष्पकंदृष्ट्वा विमानंपुनरागतम् ॥ ११ ॥ यद्येवंस्वागतंतेस्तुविमानवरपुष्पक ॥ आनुकूल्याद्धनेशस्यवृत्तदोषोननोभवेत् ॥ १२ ॥ लाजैश्चैवतथापुष्पैर्धूपैश्चैव सुगंधिभिः ॥ पूजयित्वामहाबाहूराघवःपुष्पकंतदा ॥ १३ ॥ गम्यतामितिचोवाचआगच्छत्वंस्मरेयदा ॥ सिद्धानांचगतौसौम्यमाविषादेनयोजय ॥ १४ ॥ प्रतिघातश्चतेमाभूद्यथेष्टंगच्छतोदिशः ॥ एवमस्त्वितिरामेणपूजयित्वाविसर्जितम् ॥ १५ ॥ अभिप्रेतांदिशंतस्माप्रायात्तत्पुष्पकंतदा ॥ एवमंतर्हितेतस्मिन्पुष्पकेसुकृतात्मनि ॥ १६ ॥ भरतःप्रांजलिर्वाक्यमुवाचरघुनंदनम् ॥ विबुधात्मनिदृश्यंतेत्वयिवीरप्रशासति ॥ १७ ॥ अमानुषाणिसत्वानिव्याहृतानिमुहुर्मुहुः ॥ अनामयश्चमर्त्यानांसाग्रोमासोगतोह्ययम् ॥ १८ ॥ जीर्णानामपिसत्वानांमृत्युर्नायातिराघव ॥ अरोगप्रसवानार्योवपुष्मंतोहिमानवाः ॥ १९ ॥ हर्षश्चाभ्यधिकोराजन्जनस्यपुरवासिनः ॥ कालेवर्षतिपर्जन्यःपातयन्नमृतंपयः ॥ २० ॥ वाताश्चापिप्रवांत्येतेस्पर्शयुक्ताःसुखाःशिवाः ॥ ईदृशोनश्चिरंराजाभवेदितिनरेश्वरः ॥ २१ ॥ कथयंतिपुरेराजन्पौरजानपदास्तथा ॥ एतावाचःसुमधुराभरतेनसमीरिताः ॥ श्रुत्वारामोमुदायुक्तोबभूवनृपसत्तमः ॥ २२ ॥ ॥ इत्यार्षेश्रीम० वा० आ० उत्तरकांडेएकचत्वारिंशःसर्गः ॥ ४१ ॥ ॥ ७ ॥

सविसृज्यततोरामःपुष्पकंहेमभूषितम् ॥ प्रविवेशमहाबाहुरशोकवनिकांतदा ॥ १ ॥ चंदनागुरुचूतैश्चतुंगकालेयकैरपि ॥ देवदारुवनैश्चापिसमंतादुपशोभिताम् ॥ २ ॥

तं व्याहारवंति सायोमासइतिजातावेकवचनं मासाइत्यर्थः ॥ १८ ॥ तावन्मात्रेणैवमर्त्यानामनामयादिगुणप्रादुर्भावइत्याह जीर्णानामिति वपुष्मंतःहृष्टपुष्टवपुर्युक्ताः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेएकचत्वारिंशःसर्गः ॥ ४१ ॥ ॥ ७ ॥ ॥ सइति अशोकवनिकानाममहाप्रभूणामंतःपुरैःसहविहारयोग्यमुपवनम् ॥ १ ॥ तुंगःपुन्नागविशेषः कालेयकंरक्तचंदनम् ॥ २ ॥

असनःसर्जः ॥ ३ ॥ नीपःकदंबः अर्जुनःककुभः नागोनागकेसरः ॥ ४ ॥ कदंबोधूलीकदंबः ॥ ५ ॥ सर्वदाकुसुमैर्नित्यंकुसुमयुक्तैःदिव्यगंधरसोपेतैःदिव्यगंधरसपुष्पफलयुतैः ॥ ६ ॥ दिव्यैःशिल्पिभिःवृक्षारोपणादिशिल्पवद्भिः ॥ ७ ॥ चूतवृक्षपुष्परजोवतंसभूतंयेषांतैःपक्षिभिः ॥ ८ ॥ ९ ॥ माल्यानिपुष्पगुच्छाः ॥ १० ॥ स्फाटिकेति स्फटिकरत्ननिबद्धांतरेमध्येकुट्टिमाबद्धभूमिर्या

चंपकागुरुपुन्नागमधूकपनसासनैः ॥ शोभितांपारिजातैश्चविधूमज्वलनप्रभैः ॥ ३ ॥ लोध्रनीपार्जुनैर्नागैःसप्तपर्णातिमुक्तकैः ॥ मंदारकदलीगुल्मलताजालसमावृताम् ॥ ४ ॥ प्रियंगुभिःकदंबैश्चतथाचबकुलैरपि ॥ जंबूभिर्दाडिमैश्चैवकोविदारैश्चशोभिताम् ॥ ५ ॥ सर्वदाकुसुमैरम्यैःफलवद्भिर्मनोरमैः ॥ दिव्यगंधरसोपेतैस्तरुणांकुरपल्लवैः ॥ ६ ॥ तथैवतरुभिर्दिव्यैःशिल्पिभिःपरिकल्पितैः ॥ चारुपल्लवपुष्पाढ्यैर्मत्तभ्रमरसंकुलैः ॥ ७ ॥ कोकिलैर्भृंगराजैश्चनानावर्णैश्चपक्षिभिः ॥ शोभितांशतशश्चित्रांचूतवृक्षावतंसकैः ॥ ८ ॥ शातकुंभनिभाःकेचित्केचिदग्निशिखोपमाः ॥ नीलांजननिभाश्चान्येभांतितत्रस्मपादपाः ॥ ९ ॥ सुरभीणिचपुष्पाणिमाल्यानिविविधानिच ॥ दीर्घिकाविविधाकाराःपूर्णाःपरमवारिणा ॥ १० ॥ माणिक्यकृतसोपानाःस्फाटिकांतरकुट्टिमाः ॥ फुल्लपद्मोत्पलवनाश्चक्रवाकोपशोभिताः ॥ ११ ॥ दात्यूहशुकसंघुष्टाहंससारसनादिताः ॥ तरुभिःपुष्पशबलैस्तीरजैरुपशोभिताः ॥ १२ ॥ प्राकारैर्विविधाकारैःशोभिताश्चशिलातलैः ॥ तत्रैवचवनोद्देशेवैदूर्यमणिसन्निभैः ॥ १३ ॥ शाद्वलैःपरमोपेतांपुष्पितद्रुमकाननाम् ॥ तत्रसंघर्षजातानांवृक्षाणांपुष्पशालिनाम् ॥ १४ ॥ प्रस्तराःपुष्पशबलानभस्तारागणैरिव ॥ नंदनंहियथेंद्रस्यब्राह्मंचैत्ररथंयथा ॥ १५ ॥ तथाभूतंहिरामस्यकाननंसन्निवेशनम् ॥ बह्वासनगृहोपेतांलतासनसमावृताम् ॥ १६ ॥ अशोकवनिकांस्फीतांप्रविश्यरघुनंदनः ॥ असनेचशुभाकारेपुष्पप्रकरभूषिते ॥ १७ ॥ कुशास्तरणसंस्तीर्णेरामःसन्निषसादह ॥ सीतामादायहस्तेनमधुमैरेयकंशुचि ॥ १८ ॥ पाययामासकाकुत्स्थःशचीमिवपुरंदरः ॥ मांसानिचसुमृष्टानिफलानिविविधानिच ॥ १९ ॥

सुताः ॥ ११ ॥ १२ ॥ १३ ॥ परमोपेतामत्यंतसंयुक्तां संघर्षात्स्पर्धयाजातानांजातपुष्पाणाम् ॥ १४ ॥ प्रस्तराःपाषाणाः पुष्पैर्नानावर्णैर्वृक्षेभ्यःपतितैः शबलाःशबलवर्णाःप्रस्तरास्तारागणैर्नभइवरेजुः ब्राह्मंब्रह्मनिर्मितं चैत्ररथंकुबेरस्य ॥ १५ ॥ सन्निवेशनंसमीचीनसंस्थानोपेतं बह्वासनगृहोपेतांबहूनामवस्थानोचितगृहयुतांलतासनसमावृतांलतानामासनंपरिक्षेपोयेषुतैर्लतासनैर्लतागृहैः समावृतांउपेताम् ॥ १६ ॥ १७ ॥ कुशास्तरणंनामोपर्यास्तरणं मैरेयकंमधुमैरेयकसंज्ञकंमधुमयं मैरेयमासवोधात्रीधातकीगुडवारिभिरितिवैजयंती ॥ १८ ॥ १९ ॥

राजानमुपानृत्यन्राजसमीपेऽनृत्यन् ॥ २० ॥ दक्षिणाःकुशलाः पानवशंगताःपानजमदवशंगताः ॥ २१ ॥ २२ ॥ रमयामासतोषयामास ॥ २३ ॥ २४ ॥ २५ ॥ सीताराघवयोश्चिरमि त्यनंतरंअत्यक्रामच्छुभःकालःशैशिरोभोगदःसदेत्येवश्लोकः वानराणांगमनोत्तरंपुनश्चसंवत्सरोतीतइतिकतकव्याख्यानात् दशवर्षसहस्राणिगतानिसुमहात्मनोरितिप्रक्षिप्तमितिगम्यते मानि षादप्रतिष्ठांत्वमगमःशाश्वतीःसमाइतिवाल्मीकिशापाच्च सीतात्यागोत्तरमश्वमेधप्रवृत्त्यातदंतेदशवर्षसहस्राणिवाजिमेधानथाकरोदितिवाल्मीक्युक्तेश्च यद्वा वर्षशब्दोदिनपरःविवाहोत्तरंतावं

रामस्याभ्यवहारार्थंकिंकरास्तूर्णमाहरन् ॥ उपानृत्यंश्चराजानंनृत्यगीतविशारदाः ॥ २० ॥ अप्सरोरगसंघाश्चकिन्नरीपरिवारिताः ॥ दक्षिणा रूपवत्यश्चस्त्रियःपानवशंगताः॥ २१ ॥ उपानृत्यंतकाकुत्स्थंनृत्यगीतविशारदाः॥ मनोभिरामारामास्तारामोरमयतांवरः॥ २२ ॥ रमयामासध र्मात्मानित्यंपरमभूषिताः॥ सतयासीतयासार्धमासीनोविरराजह ॥ २३ ॥ अरुंधत्याइवासीनोवसिष्ठइवतेजसा॥ एवंरामोमुदायुक्तःसीतांसुर सुतोपमाम्॥ २४ ॥ रमयामासवैदेहीमहन्यहनिदेववत्॥ तथातयोर्विहरतोःसीताराघवयोश्चिरम् ॥ २५ ॥ अत्यक्रामच्छुभःकालःशैशिरोभोग दःसदा॥ "दशवर्षसहस्राणिगतानिसुमहात्मनोः" ॥ प्राप्तयोर्विविधान्भोगानतीतःशिशिरागमः ॥ २६ ॥ पूर्वाह्णेधर्मकार्याणिकृत्वाधर्मेणधर्म वित्॥ शेषंदिवसभागार्धमंतःपुरगतोभवत्॥ २७॥ सीतापिदेवकार्याणिकृत्वापौर्वाह्णिकानिवै॥ श्वश्रूणामकरोत्पूजांसर्वासामविशेषतः॥ २८॥ अभ्यगच्छत्ततोरामंविचित्राभरणांबरा॥ त्रिविष्टपेसहस्राक्षमुपविष्टंयथाशची॥ २९ ॥ दृष्ट्वातुराघवःपत्नींकल्याणेनसमन्विताम्॥ प्रहर्षमतुलं लेभेसाधुसाध्वितिचाब्रवीत्॥ ३० ॥ अब्रवीच्चवरारोहांसीतांसुरसुतोपमाम्॥ अपत्यलाभोवैदेहित्वय्ययंसमुपस्थितः ॥ ३१ ॥ किमिच्छसिवरा रोहेकामःकिंक्रियतांतव॥ स्मितंकृत्वातुवैदेहीरामंवाक्यमथाब्रवीत्॥ ३२ ॥ तपोवनानिपुण्यानिद्रष्टुमिच्छामिराघव॥ गंगातीरोपविष्टानामृषी णामुग्रतेजसाम् ॥ ३३ ॥

तिगतानिद्वादशादधिकमयोध्यायांचतुर्दशवनेएकंपुनरयोध्यायामित्येवंकिंचिदधिकसप्तविंशतिर्गतानीतिबोध्यं पूर्वाह्णेद्विधाभागेनेदं तदाह शेषंदिवसभागार्धमिति अवशिष्टमर्धमित्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ममापत्यलाभस्त्वयिसमुपस्थितः गर्भलक्षणंतवस्पष्टंवर्ततइत्यर्थः ॥ ३१ ॥ किंकामःकिंविषयोमनोरथः स्मितंकृत्वास्वावतारकृत्यंपूर्णमितिब्राह्मणशापस्यस त्यत्वकरणौचित्यंचहासेनसूचितम् ॥ ३२ ॥ ३३ ॥

॥ ३४ ॥ अप्येकरात्रिमित्यनेनचिरकालवासमनोरथोध्वनितः ॥ ३५ ॥ विस्रब्धाभवमहाराजोमहिर्षीमांकथमाश्रमंप्रेषयिष्यतीतिशंकांमाकुर्वित्यर्थः ॥३६॥ ॥ इतिश्रीरा॰श्रीरा॰रा॰वा॰ आ॰उत्तरकांडेद्विचत्वारिंशःसर्गः ॥ ४२ ॥ ॥७॥ ॥ अथकथाप्रसंगात्सीताप्रसंगेनस्वदोषश्रवणंरामस्य तत्रेति बहुरूपाणांकथानांप्रकथनद्वारेणहास्यकाराउपासंते ॥ १ ॥२॥ कथावार्ताः ॥ ३ ॥ विषयेषुदेशेषुइतिसामान्यतःप्रश्नः ॥४॥ विशिष्यपृच्छति मांमाश्रितानिकानिवाक्यान्याहुः ॥५ ॥ दूतमुखेनस्वदेशवृत्तांताज्ञानेराजानःसर्वजननिंदाद्वारानरकंप्राप्नुवंतीत्याशयेनाह व

फलमूलाशिनांदेवपादमूलेपुवर्तितुम् ॥ एषमेपरमःकामोयन्मूलफलभोजिनाम् ॥ ३४ ॥ अप्येकरात्रिंकाकुत्स्थनिवसेयंतपोवने ॥ तथेतिचप्रतिज्ञातंरामेणाक्लिष्टकर्मणा ॥ विस्रब्धाभववैदेहिश्वोगमिष्यस्यसंशयम् ॥ ३५ ॥ एवमुक्त्वातुकाकुत्स्थोमैथिलींजनकात्मजाम् ॥ मध्यकक्षांतरंरामोनिर्जगामसुहृद्वृतः ॥ ३६ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेद्विचत्वारिंशःसर्गः ॥ ४२ ॥ ॥ ७ ॥ ॥ तत्रोपविष्टंराजानमुपासंतेविचक्षणाः ॥ कथानांबहुरूपाणांहास्यकाराःसमंततः ॥ १ ॥ विजयोमधुमत्तश्चकाश्यपोमंगलःकुलः ॥ सुराजिःकालियोभद्रोदंतवक्रःसुमागधः ॥ २ ॥ एतेकथावहुविधाःपरिहाससमन्विताः ॥ कथयंतिस्मसंहृष्टाराघवस्यमहात्मनः ॥ ३ ॥ ततःकथायांकस्यांचिद्राघवःसमभाषत ॥ काःकथानगरेभद्रवर्ततेविषयेषुच ॥ ४ ॥ मामाश्रितानिकान्याहुःपौरजानपदाजनाः ॥ किंचसीतांसमाश्रित्यभरतंकिंचलक्ष्मणम् ॥ ५ ॥ किंनुशत्रुघ्नमुद्दिश्यकैकेयींकिन्नुमातरम् ॥ वक्तव्यतांचराजानोवनेराज्येव्रजंतिच ॥ ६ ॥ एवमुक्तेतुरामेणभद्रःप्रांजलिरब्रवीत् ॥ स्थिताःशुभाःकथाराजन्वर्ततेपुरवासिनाम् ॥ ७ ॥ अयंतुविजयंसौम्यदशग्रीववधार्जितम् ॥ भूयिष्ठंस्वपुरेपौरैःकथ्यंतेपुरुषर्षभ ॥ ८ ॥ एवमुक्तस्तुभद्रेणराघवोवाक्यमब्रवीत् ॥ कथयस्वयथातत्त्वंसर्वंनिरवशेषतः ॥ ९ ॥ शुभाशुभानिवाक्यानिकान्याहुःपुरवासिनः ॥ श्रुत्वेदानींशुभंकुर्यांनकुर्यामशुभानिच ॥ १० ॥

क्तव्यतांचेति वनेतापसाश्रमेराज्येचधर्मादिविचाररहीनाराजानोवक्तव्यतांसर्वजनकृतदुर्भाषणविषयतांव्रजंति ॥ ६ ॥ सर्वज्ञोप्यज्ञइवभृग्वाद्युक्तशापंभृग्वादिषुदययासत्यंचिकीर्षुःसीतावियोगमिच्छन्नेवदेशवृत्तांतंपृच्छति गृहीतमनुष्यरूपतयाव्यवहारानुसारेणलोकनिंद्यंसदपिकर्मत्याज्यमितिबोधनायेतिबोध्यं पुरवासिनांसंबंधितयास्थिताःकथाःशुभावर्ततइतिसंबंधः ॥ ७ ॥ विजयमिति उद्दिश्येतिशेषः कथ्यंतेवार्ताइतिशेषः ॥ ८ ॥ निरवशेषतःशुभाशुभविषयंसर्वंकथयेत्यर्थः ॥ ९ ॥ नन्वशुभश्रवणेकिंप्रयोजनंतत्राह शुभेत्यादि ॥ १० ॥

ननुराजसमक्षमशुभवाक्यकथनमशक्यमित्यतआह कथयस्वेति निर्भयंविस्रब्धोममर्माकरामोवदिष्यतीतिभयशून्यंविश्वस्तः विगतज्वरःएवमशुभंकथंवाच्यमितिमनःसंतापशून्यः पापाःपापा
नि ॥ ११ ॥ १२ ॥ १३ ॥ पूर्वकैराजभिर्देवैरपिकृतमित्यश्रुतमश्रुतपूर्वम् ॥ १४ ॥ १५ ॥ सीतामाहृत्यततोजातंसीताविषयंरावणस्पर्शजममर्षंक्रोधंपृष्ठतःकृत्वा विस्मृत्येत्यर्थः ॥ १६ ॥
कीदृशंसुखं कुत्सितमेवेत्यर्थः तत्रहेतुरंकमित्यादि ॥ १७ ॥ नकुत्स्यतिनजुगुप्सतेइत्यर्थः ॥ १८ ॥ सहनीयंभविष्यति एवंविधंकश्मलमितिभावः तत्रहेतुर्यथाहीति प्रजास्तमनुवर्ततेअनुव

कथयस्वचविस्रब्धोनिर्भयंविगतज्वरः ॥ कथयंतियथापौराःपापाजनपदेषुच ॥ ११ ॥ राघवेणैवमुक्तस्तुभद्रःसुरुचिरंवचः ॥ प्रत्युवाचमहाबाहुं
प्रांजलिःसुसमाहितः ॥ १२ ॥ शृणुराजन्यथापौराःकथयंतिशुभाशुभम् ॥ चत्वरापणरथ्यासुवनेषूपवनेषुच ॥ १३ ॥ दुष्करंकृतवान्रामःसमुद्रे
सेतुबंधनम् ॥ अश्रुतंपूर्वकैःकैश्चिद्देवैरपिसदानवैः ॥ १४ ॥ रावणश्चदुराधर्षोहतःसबलवाहनः ॥ वानराश्चवशंनीताऋक्षाश्चसहराक्षसैः ॥ १५ ॥
हत्वाचरावणंसंख्येसीतामाहृत्यराघवः ॥ अमर्षंपृष्ठतःकृत्वास्ववेश्मपुनरानयत् ॥ १६ ॥ कीदृशंहृदयेतस्यसीतासंभोगजंसुखम् ॥ अंकमारोप्य
तुपुरारावणेनबलाद्धृताम् ॥ १७ ॥ लंकामपिपुरानीतामशोकवनिकांगताम् ॥ रक्षसांवशमापन्नांकथंरामोनकुत्स्यति ॥ १८ ॥ अस्माकमपिदा
रेषुसहनीयंभविष्यति ॥ यथाहिकुरुतेराजाप्रजास्तमनुवर्तते ॥ १९ ॥ एवंबहुविधावाचोवदंतिपुरवासिनः ॥ नगरेषुचसर्वेषुराजन्जनपदेषुच
॥ २० ॥ तस्यैवंभाषितंश्रुत्वाराघवःपरमार्तवत् ॥ उवाचसुहृदःसर्वान्कथमेतद्वदंतुमाम् ॥ २१ ॥ सर्वेतुशिरसाभूमावभिवाद्यप्रणम्यच ॥ प्रत्यूचू
राघवंदीनमेवमेतन्नसंशयः ॥ २२ ॥ श्रुत्वातुवाक्यंकाकुत्स्थःसर्वेषांसमुदीरितम् ॥ विसर्जयामासतदावयस्याञ्छत्रुसूदनः ॥ २३ ॥ ॥ इत्यार्षेश्री
मद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेत्रिचत्वारिंशःसर्गः ॥ ४३ ॥ ॥ ७ ॥ ॥ विसृज्यतुसुहृद्वर्गंबुद्ध्यानिश्चित्यराघवः ॥ समीपेद्वाःस्थमा
सीनमिदंवचनमब्रवीत् ॥ १ ॥

र्तते ॥ १९ ॥ २० ॥ परमार्तवत्परमदुःखीवाकारंकृत्वा वस्तुतोभगवतिहर्षदुःखयोरभावादेवमुक्तिः सर्वान्सुहृदोभद्रव्यतिरिक्तानपि कथमेतत्भद्रोक्तमेतदयशोवाक्यंतत्त्वमतत्त्वंवेतिभवंतो
पिवदंत्वित्युवाच ॥ २१ ॥ तएवभद्रोक्तमेवंतत्त्वमेव ॥ २२ ॥ २३ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेत्रिचत्वारिंशःसर्गः ॥ ४३ ॥ अ
थस्वचिकीर्षितकथनायभ्रात्रानयनं विसृज्यत्विति निश्चित्यकर्तव्यमितिशेषः ॥ १ ॥

॥ २ ॥ ३ ॥ वर्धयित्वाजयाशिषेतिशेषः माचिरं विलंबोनकार्यइत्यर्थः ॥ ४ ॥ ५ ॥ भरतमंतिकाद्भरतसमीपंप्राप्येत्यर्थः कृतांजलिर्भरतायेतिशेषः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ शि

शीघ्रमानयसौमित्रिंलक्ष्मणंशुभलक्षणम् ॥ भरतंचमहाभागंशत्रुघ्नमपराजितम् ॥ २ ॥ रामस्यवचनंश्रुत्वाद्वाःस्थोमूर्ध्निकृतांजलिः ॥ लक्ष्मणस्यगृहं गत्वाप्रविवेशानिवारितः ॥ ३ ॥ उवाचसुमहात्मानंवर्धयित्वाकृतांजलिः ॥ द्रष्टुमिच्छतिराजात्वांगम्यतांतत्रमाचिरम् ॥ ४ ॥ बाढमित्येवसौमित्रिः कृत्वाराघवशासनम् ॥ प्राद्रवद्रथमारुह्यराघवस्यनिवेशनम् ॥ ५ ॥ प्रयांतंलक्ष्मणंदृष्ट्वाद्वाःस्थोभरतमंतिकात् ॥ उवाचभरतंतत्रवर्धयित्वाकृतां जलिः ॥ ६ ॥ विनयावनतोभूत्वाराजात्वांद्रष्टुमिच्छति ॥ भरतस्तुवचःश्रुत्वाद्वाःस्थाद्रामसमीरितम् ॥ ७ ॥ उत्पपातासनात्तूर्णपद्भ्यामेवमहाबलः ॥ दृष्ट्वाप्रयांतंभरतंत्वरमाणःकृतांजलिः ॥ ८ ॥ शत्रुघ्नभवनंगत्वाततोवाक्यमुवाचह ॥ एह्यागच्छरघुश्रेष्ठराजात्वांद्रष्टुमिच्छति ॥ ९ ॥ गतोहिलक्ष्मणः पूर्वंभरतश्चमहायशाः ॥ श्रुत्वातुवचनंतस्यशत्रुघ्नःपरमासनात् ॥ १० ॥ शिरसावंद्यधरणींप्रययौयत्रराघवः ॥ द्वाःस्थस्त्वागम्यरामायसर्वानेवकृतां जलिः ॥ ११ ॥ निवेदयामासतथाभ्रातॄन्स्वान्समुपस्थितान् ॥ कुमारानागताञ्छ्रुत्वाचिंताव्याकुलितेंद्रियः ॥ १२ ॥ अवाङ्मुखोदीनमनाद्वाःस्थंव चनमब्रवीत् ॥ प्रवेशयकुमारांस्त्वंमत्समीपंत्वरान्वितः ॥ १३ ॥ एतेषुजीवितंमह्यमेतेप्राणाःप्रियाममः ॥ आज्ञप्तास्तुनरेंद्रेणकुमाराःशुक्लवाससः ॥ १४ ॥ प्रह्वाःप्रांजलयोभूत्वाविविशुस्तेसमाहिताः ॥ तेतुदृष्ट्वामुखंतस्यसग्रहंशशिनंयथा ॥ १५ ॥ संध्यागतमिवादित्यंप्रभयापरिवर्जितम् ॥ बाष्प पूर्णेचनयनेदृष्ट्वारामस्यधीमतः ॥ हतशोभंयथापद्मंमुखंवीक्ष्यचतस्यते ॥ १६ ॥ ततोऽभिवाद्यत्वरिताःपादौरामस्यमूर्धभिः ॥ तस्थुःसमाहिताःसर्वे रामस्त्वश्रूण्यवर्तयत् ॥ १७ ॥ तान्परिष्वज्यबाहुभ्यामुत्थाप्यचमहाबलः ॥ आसनेष्वासतेत्युक्त्वाततोवाक्यंजगादह ॥ १८ ॥ भवंतोममसर्वस्वंभवं तोजीवितंमम ॥ भवद्भिश्चकृतंराज्यंपालयामिनरेश्वराः ॥ १९ ॥

रसावंद्यधरणींशिरसाधरणींप्राप्य रामायवंदित्वेत्यर्थः ॥ ११ ॥ १२ ॥ १३ ॥ मह्यंममजीवितमेतेषुस्थितमितिशेषः ॥ १४ ॥ सग्रहंसोपरागम् ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ भवद्भिःकृ तंसंपादितम् ॥ १९ ॥

कृतशास्त्रार्थाअनुष्ठितशास्त्रार्थानुष्ठानाः मदर्थोविक्ष्यमाणः अन्वेष्टव्योनुसरणीयः ॥ २० ॥ २१ ॥ ॥ इतिश्रीरा० श्री० रा० रा० वा० आ० उ० चतुश्चत्वारिंशःसर्गः ॥ ४४ ॥ ॥ ७ ॥
अथहेतुकथनपूर्वंलक्ष्मणस्यसीताविसर्जनेविनियोगः तेषामिति ॥ १ ॥ अन्यथामाकुरुध्वं मदभिप्रायाननुकूलभावंमाकुरुध्वमित्यर्थः तमेवाभिप्रायमाह पौराणामिति सीताविषयेपौराणां
यादृशीकथावर्ततेतांमत्तःशृणुतेतिसंबंधः ॥ २ ॥ तांकथामाह पौरापवादइति पौराणांमयिमद्विषयेबीभत्साकुत्सावर्ततेसामेममममर्माणिकृंतति ॥ ३ ॥ ४ ॥ ५ ॥ कथमानयेयंनकथमपि ॥ ६ ॥

भवंतःकृतशास्त्रार्थाबुद्ध्याचपरिनिष्ठिताः ॥ संभूयचमदर्थोयमन्वेष्टव्योनरेश्वराः ॥ २० ॥ तथावदतिकाकुत्स्थेअवधानपरायणाः ॥ उद्विग्नमनसः सर्वेकिन्नुराजाभिधास्यति ॥ २१ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेचतुश्चत्वारिंशःसर्गः ॥ ४४ ॥ ॥ ७ ॥ ॥ तेषां समुपविष्टानांसर्वेषांदीनचेतसाम् ॥ उवाचवाक्यंकाकुत्स्थोमुखेनपरिशुष्यता ॥ १ ॥ सर्वेशृणुतभद्रंवोमाकुरुध्वंमनोन्यथा ॥ पौराणांममसीता यांयादृशीवर्ततेकथा ॥ २ ॥ पौरापवादःसुमहांस्तथाजनपदस्यच ॥ वर्ततेमयिबीभत्सासामेमर्माणिकृंतति ॥ ३ ॥ अहंकिलकुलेजातइक्ष्वाकूणां महात्मनाम् ॥ सीतापिसत्कुलेजाताजनकानांमहात्मनाम् ॥ ४ ॥ जानासित्वंयथासौम्यदंडकेविजनेवने ॥ रावणेनहृतासीतासचविध्वंसितोमया ॥ ५ ॥ तत्रमेबुद्धिरुत्पन्नाजनकस्यसुतांप्रति ॥ अत्रोषितामिमांसीतामानयेयंकथंपुरीम् ॥ ६ ॥ प्रत्ययार्थंततःसीताविवेशज्वलनंतदा ॥ प्रत्यक्षंत वसौमित्रेदेवानांहव्यवाहनः ॥ ७ ॥ अपापांमैथिलीमाहवायुश्चाकाशगोचरः ॥ चंद्रादित्यौचशंसेतेसुराणांसन्निधौपुरा ॥ ८ ॥ ऋषीणांचैवसर्वेषा मपापांजनकात्मजाम् ॥ एवंशुद्धसमाचारादेवगंधर्वसन्निधौ ॥ ९ ॥ लंकाद्वीपेमहेंद्रेणममहस्तेनिवेदिता ॥ अंतरात्माचमेवेत्तिसीतांशुद्धांयशस्वि नीम् ॥ १० ॥ ततोगृहीत्वावैदेहीमयोध्यामहमागतः ॥ अयंतुमेमहान्वादःशोकश्चहृदिवर्तते ॥ ११ ॥ पौरापवादःसुमहांस्तथाजनपदस्यच ॥ अकी र्तिर्यस्यगीयेतलोकेभूतस्यकस्यचित् ॥ १२ ॥

सीतायाअपापत्वंप्रख्यापयतिभ्रातृभ्यः प्रत्ययार्थमिति देवानांसन्निधाविनिशेषः ॥ ७ ॥ ८ ॥ ऋषीणांचेति सन्निधावित्यर्थः ॥ ९ ॥ लंकाद्वीपेमहेंद्रेणेति लंकाद्वीपेतदाग्निनेतिपाठांतरम् ॥ १० ॥ अयंत्विति प्राक्प्रतिपादितरीत्यानत्त्वार्थेन्यस्मिन्नस्थितेपीतिशेषः महान्वादोवर्ततेनिंदावर्तते तच्छ्रवणाच्छोकश्चहृदिवर्तते ॥ ११ ॥ कोसौवादस्तत्राह पौरेति सीताविषयापौरांनदा नृतस्यप्राणिनः ॥ १२ ॥

शब्दःअकीर्तिबोधकः अधमाल्लोकान्निरयान् ॥ १३ ॥ १४ ॥ शोकसागरेअकीर्तिजे ॥ १५ ॥ भूतंउत्पन्नंअतःएतदकीर्तिजात् अतःश्वःप्रभातेत्वंरथम्।रुह्यविषयांतेस्वदेशात्परतःसीतामु त्सृज ॥ १६ ॥ कविषयांतरेतत्राह गंगायाइति परेपारेगंगोल्लंघनलभ्येपारे ॥ १७ ॥ तमसासंज्ञंनदीद्वयंअयोध्यासमीपगंगार्वाक्तत्परपारेच दिव्यसंकाशःदिव्यदेशसदृशः ॥ १८ ॥ सीतांप्र तिसीतापरित्यागमुद्दिश्य ॥ १९ ॥ मत्वंममएतत्प्रतिवारितेएतस्यप्रतिवारणेइत्यर्थः ॥ २० ॥ भुजाभ्यामितिपाठेपिपादाभ्यामित्येवार्थः येवाक्यांतरेअस्मद्वाक्यमध्येमामनुनेतुंब्रूयुस्तेमदभीष्ट

पतत्येवाधमाँल्लोकान्यावच्छब्दःप्रकीर्त्यते ॥ अकीर्तिर्निंद्यतेदेवैःकीर्तिर्लोकेपुपूज्यते ॥ १३ ॥ कीर्त्यर्थंतुसमारंभःसर्वेषांसुमहात्मनाम् ॥ अप्यहं जीवितंजह्यांयुष्मान्वापुरुषर्षभाः ॥ १४ ॥ अपवादभयाद्भीतःकिंपुनर्जनकात्मजाम् ॥ तस्माद्भवंतःपश्यंतुपतितंशोकसागरे ॥ १५ नहिपश्याम्य हंभूतंकिंचिद्दुःखमतोधिकम् ॥ श्वस्त्वंप्रभातेसौमित्रेसुमंत्राधिष्ठितंरथम् ॥ १६ ॥ आरुह्यसीतामारोप्यविषयांतेसमुत्सृज ॥ गंगायास्तुपरेपारे वाल्मीकेस्तुमहात्मनः ॥ १७ ॥ आश्रमोदिव्यसंकाशस्तमसातीरमाश्रितः ॥ तत्रैनांविजनेदेशेविसृज्यरघुनंदन ॥ १८ ॥ शीघ्रमागच्छसौमित्रेकुरु ष्ववचनंमम ॥ नचास्मिप्रतिवक्तव्यःसीतांप्रतिकथंचन ॥ १९ ॥ तस्मात्त्वंगच्छसौमित्रेनात्रकार्याविचारणा ॥ अप्रीतिर्हिपरामह्यंत्वयैतत्प्रतिवा रिते ॥ २० ॥ शापिताहिमयायूयंपादाभ्यांजीवितेनच ॥ येमांवाक्यांतरेब्रूयुरनुनेतुंकथंचन ॥ अहितानामतेनित्यंमदभीष्टविघातनात् ॥ २१ ॥ मा नयंतुभवंतोमांयदिमच्छासनेस्थिताः ॥ इतोद्यनीयतांसीताकुरुष्ववचनंमम ॥ २२ ॥ पूर्वमुक्तोहमनयागंगातीरेहमाश्रमान् ॥ पश्येयमितितस्या श्चकामःसंवर्त्यतामयम् ॥ २३ ॥ एवमुक्त्वातुकाकुत्स्थोबाष्पेणपिहितेक्षणः ॥ संविवेशसधर्मात्माभ्रातृभिःपरिवारितः ॥ शोकसंविग्नहृदयोनिश श्वासयथाद्विपः ॥ २४ ॥ ॥ इत्यार्षेश्रीम०वा०आ०उत्तरकांडेपंचचत्वारिंशःसर्गः ॥ ४५ ॥ ॥ ७ ॥ ॥ ततोरजन्यांव्युष्टायांलक्ष्मणोदीनचे तनः ॥ सुमंत्रमब्रवीद्वाक्यंमुखेनपरिशुष्यता ॥ १ ॥

विघातनान्नित्यंममाहितानामअहिताइतिप्रसिद्धम् ॥ २१ ॥ किंतर्हिकर्तव्यंतत्राह मानयंत्विति ॥ २२ ॥ ननुसीतेविसर्जनायवनंचलेतिकथंवक्तुंशक्यंतत्राह पूर्वमिति संवर्त्यतामनुष्ठीयताम् ॥ २३ ॥ भ्रातृभिःपरिवारितःप्रविवेश तान्विसृज्यस्ववेश्मेतिशेषः ॥ २४ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेपंचचत्वारिंशःसर्गः ॥ ४५ ॥ ॥ अथलक्ष्मणेनसीतानयनं ततइति ॥ १ ॥

सीतायाःशुभमासनंराजवचनादानीयस्वास्तीर्णंरथंकुरु ॥ २ ॥ किमर्थंसीतायाआसनंतत्राह सीताहीति ॥ ३ ॥ सुरुचिरप्रख्यंसुंदरशोभनम् ॥ ४ ॥ ५ ॥ ६ ॥ एवंनृपतिःरामः प्रतिज्ञातमंगी
कृतं आश्रमंप्रतिनयनमितिशेषः आज्ञप्तः आश्रमंनेतुमितिशेषः ॥ ७ ॥ शीघ्रंगत्वा गंगातीरमितिशेषः मुनीनामाश्रमान्प्रतिअवनेयाअवरोप्यप्रापणीया ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ तथेत्यु

सारथेतुरगान्शीघ्रान्योजयस्वरथोत्तमे ॥ स्वास्तीर्णंराजवचनात्सीतायाश्चासनंशुभम् ॥ २ ॥ सीताहिराजवचनादाश्रमंपुण्यकर्मणाम् ॥ मयाने
यामहर्षीणांशीघ्रमानीयतांरथः ॥ ३ ॥ सुमंत्रस्तुतथेत्युक्त्वायुक्तंपरमवाजिभिः ॥ रथंसुरुचिरप्रख्यंस्वास्तीर्णसुखशय्यया ॥ ४ ॥ आनीयोवाच
सौमित्रिंमित्राणांमानवर्धनम् ॥ रथोयंसमनुप्राप्तोयत्कार्यंक्रियतांप्रभो ॥ ५ ॥ एवमुक्तःसुमंत्रेणराजवेश्मनिलक्ष्मणः ॥ प्रविश्यसीतामासाद्य
व्याजहारनरर्षभः ॥ ६ ॥ त्वयाकिलैषनृपतिर्वरंवैयाचितःप्रभुः ॥ नृपेणचप्रतिज्ञातमाज्ञप्तश्चाश्रमंप्रति ॥ ७ ॥ गंगातीरेमयादेविऋषीणामाश्रमा
न्शुभान् ॥ शीघ्रंगत्वातुवैदेहिशासनात्पार्थिवस्यनः ॥ ८ ॥ अरण्येमुनिभिर्जुष्टेअवनेयाभविष्यसि ॥ एवमुक्तातुवैदेहीलक्ष्मणेनमहात्मना ॥ ९ ॥
प्रहर्षमतुलंलेभेगमनंचाप्यरोचयत् ॥ वासांसिचमहार्हाणिरत्नानिविविधानिच ॥ १० ॥ गृहीत्वातानिवैदेहीगमनायोपचक्रमे ॥ इमानिमुनिपत्नी
नांदास्याम्याभरणान्यहम् ॥ ११ ॥ वस्त्राणिचमहार्हाणिधनानिविविधानिच ॥ सौमित्रिस्तुतथेत्युक्त्वारथमारोप्यमैथिलीम् ॥ १२ ॥ प्रययौशीघ्र
तुरगंरामस्याज्ञामनुस्मरन् ॥ अब्रवीच्चतदासीतालक्ष्मणंलक्ष्मिवर्धनम् ॥ १३ ॥ अशुभानिबहून्येवपश्यामिरघुनंदन ॥ नयनंमेस्फुरत्यद्यगात्रोत्कं
पश्चजायते ॥ १४ ॥ हृदयंचैवसौमित्रेअस्वस्थमिवलक्षये ॥ औत्सुक्यंपरमंचापिअधृतिश्चपरामम ॥ १५ ॥ शून्यामेवचपश्यामिपृथिवींपृथुलोच
न ॥ अपिस्वस्तिभवेत्तस्यभ्रातुस्तेभ्रातृवत्सल ॥ १६ ॥ श्वश्रूणांचैवमेवीरसर्वासामविशेषतः ॥ पुरेजनपदेचैवकुशलंप्राणिनामपि ॥ १७ ॥ इत्यंज
लिकृतासीतादेवताअभ्ययाचत ॥ लक्ष्मणोर्थंततःश्रुत्वाशिरसावंद्यमैथिलीम् ॥ १८ ॥

क्त्वायथेष्टंप्रयच्छेत्युक्त्वा ॥ १२ ॥ १३ ॥ नयनंदक्षिणम् ॥ १४ ॥ हृदयंमनः औत्सुक्यंनगरविषयंरामविषयंवा ॥ १५ ॥ शून्यांसुखशून्याम् ॥ १६ ॥ १७ ॥ अंजलिकृताकृतांज
लिः अर्थंदुर्निमित्तवस्तु ॥ १८ ॥

शिवमित्यब्रवीद्धृष्टःहृष्टइव ॥ १९ ॥ २० ॥ पर्वतस्त्र्यंबकोयथेतिपाठेउपमाद्वयं त्र्यंबकइवपर्वतोहिमवानिवेतिवा अश्वान्चतुरः ॥ २१ ॥ २२ ॥ २३ ॥ जलाशयंजलप्रवाहम् ॥ २४ ॥
॥ २५ ॥ ममचिराभिलषितंजाह्नवीतीरमासाद्यकिंरुद्यतेइत्यन्वयः ॥ २६ ॥ द्विरात्रंतेनविनाकृतःशोकमागतः कच्चित् ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ॥ इतिश्रीरा

शिवमित्यब्रवीद्धृष्टोहृदयेनविशुष्यता ॥ ततोवासमुपागम्यगोमतीतीरआश्रमे ॥ १९ ॥ प्रभातेपुनरुत्थायसौमित्रिःसूतमब्रवीत् ॥ योजयस्वरथंशी
घ्रमद्यभागीरथीजलम् ॥ २० ॥ शिरसाधारयिष्यामित्र्यंबकइवौजसा ॥ सोऽश्वान्विचारयित्वातुरथेयुक्तान्मनोजवान् ॥ २१ ॥ आरोहस्वेतिवै
देहींसूतःप्रांजलिरब्रवीत् ॥ सातुसूतस्यवचनादारुरोहरथोत्तमम् ॥ २२ ॥ सीतासौमित्रिणासार्धंसुमंत्रेणचधीमता ॥ आससादविशालाक्षींगं
गांपापविनाशिनीम् ॥ २३ ॥ अथार्धदिवसंगत्वाभागीरथ्याजलाशयम् ॥ निरीक्ष्यलक्ष्मणोदीनःप्ररुरोदमहास्वनः ॥ २४ ॥ सीतातुपरमायत्ताद्द
ष्ट्वालक्ष्मणमातुरम् ॥ उवाचवाक्यंधर्मज्ञाकिमिदंरुद्यतेत्वया ॥ २५ ॥ जाह्नवीतीरमासाद्यचिराभिलषितंमम ॥ हर्षकालेकिमर्थंमांविषादयसिल
क्ष्मण ॥ २६ ॥ नित्यंत्वंरामपार्श्वेषुवर्तसेपुरुषर्षभ ॥ कच्चिद्विनाकृतस्तेनद्विरात्रंशोकमागतः ॥ २७ ॥ ममापिदयितोरामोजीवितादपिलक्ष्मण ॥ न
चाहमेवंशोचामिमैवंत्वंबालिशोभव ॥ २८ ॥ तारयस्वचमांगंगांदर्शयस्वचतापसान् ॥ ततोमुनिभ्योवासांसिदास्याम्याभरणानिच ॥ २९ ॥ ततः
कृत्वामहर्षीणांयथार्हमभिवादनम् ॥ तत्रचैकांनिशामुष्ययास्यामस्तांपुरींपुनः ॥ ३० ॥ ममापिपद्मपत्राक्षंसिंहोरस्कंकृशोदरम् ॥ त्वरतेहिमनोद्र
ष्टुंरामंरमयतांवरम् ॥ ३१ ॥ तस्यास्तद्वचनंश्रुत्वाप्रमृज्यनयनेशुभे ॥ नाविकानाह्वयामासलक्ष्मणःपरवीरहा ॥ इयंचसज्जानौश्चेतिदाशाःप्रांजल
योब्रुवन् ॥ ३२ ॥ तितीर्षुर्लक्ष्मणोगंगांशुभांनावमुपारुहत् ॥ गंगांसंतारयामासलक्ष्मणस्तांसमाहितः ॥ ३३ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मी
कीयेआदिकाव्येउत्तरकांडेषट्चत्वारिंशःसर्गः ॥ ४६ ॥ ॥ ९ ॥ ॥ अथनावंसुविस्तीर्णांनैषादींराघवानुजः ॥ आरुरोहसमायुक्तांपूर्वमारो
प्यमैथिलीम् ॥ १ ॥ सुमंत्रंचैवसरथंस्थीयतामितिलक्ष्मणः ॥ उवाचशोकसंतप्तःप्रयाहीतिचनाविकम् ॥ २ ॥

माभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेषट्चत्वारिंशःसर्गः ॥ ४६ ॥ ॥ ९ ॥ ॥ नैषादींनिषादोपनीतां गुहाख्यनिषादसंबंधिनीमितिवा समायुक्तांसज्जी
कृतां ॥ १ ॥ स्थीयतां अर्वाचीनगंगातीरएवेतिशेषः प्रयाहिपरंतीरमितिशेषः ॥ २ ॥

तीरंपरंतीरम् उवाच सीतामितिशेषः ॥३॥ वैदेहि अस्मिन्निमित्तेयस्माद्धीमताप्यार्येणलोकनिंदाहेतुभूतेक्रूरकार्येयदहंनियुक्तस्तल्लोकस्यवचनीकृतः यलोपआर्षः वचनीयोनिंद्यःकृतःअतो मेमहच्छल्यंत्वद्गतंत्हृदयंप्रविष्टम् ॥ ४ ॥ एवंमहच्छल्यंप्राप्तवतोमेयन्मरणंतत्प्रागवस्थामूर्च्छामृत्युर्मुख्यंमरणंवायद्भवेत्तत्परंश्रेयोभवेत् नचनतुईदृशेलोकनिंद्येअस्मिन्वक्ष्यमाणेकार्येऽहंनियो ज्योनियोक्तुमर्होभवामि अथापिराजनियोगस्यसर्वथाकर्तव्यत्वान्नियोगंकरोमीतिशेषः ॥ ५ ॥ यदेवमतःप्रसीदेति पापंकर्तुंदोषंज्ञातुमित्यर्थः अंजलिकृतःकृतांजलिः ॥ ६ ॥ मृत्युंकांक्षंतंप रमत्वच्छल्यवशात् ॥ ७ ॥ नावगच्छामिरोदनादिहेतुमितिशेषः महीपतेःरामस्यक्षेममपिसौख्यमपिनपश्यामि ॥ ८ ॥ यस्मात्त्वमेवंसंतापमागतस्तस्मात्त्वंनरेंद्रेणप्रत्युत्तरतयाशापपूर्वंक्रूरेकर्म

ततस्तीरमुपागम्यभागीरथ्याःसलक्ष्मणः॥ उवाचमैथिलींवाक्यंप्रांजलिर्बाष्पसंवृतः॥३॥ त्वद्गतंमेमहच्छल्यंयस्मादार्येणधीमता॥ अस्मिन्निमि त्तेवैदेहिलोकस्यवचनीकृतः॥ ४ ॥ श्रेयोहिमरणंमेद्यमृत्युर्वायत्परंभवेत्॥ नचास्मिन्नीदृशेकार्येनियोज्योलोकनिंदिते॥ ५॥ प्रसीदत्वनमेपापंकर्तु मर्हसिशोभने॥ इत्यंजलिकृतोभूमौनिपपातसलक्ष्मणः॥ ६ ॥ रुदंतंप्रांजलिंदृष्ट्वाकांक्षंतंमृत्युमात्मनः॥ मैथिलीभृशसंविग्नालक्ष्मणंवाक्यमब्रवी त्॥ ७॥ किमिदंनावगच्छामिब्रूहितत्त्वेनलक्ष्मण॥ पश्यामित्वांनचस्वस्थमपिक्षेमंमहीपतेः॥८॥ शापितोसिनरेंद्रेणयत्त्वंसंतापमागतः॥ तद्ब्रूयाः सन्निधौमत्यमहमाज्ञापयामिते॥ ९ ॥ वैदेह्याचोद्यमानस्तुलक्ष्मणोदीनचेतनः॥ अवाङ्मुखोबाष्पगलोवाक्यमेतदुवाचह ॥ १० ॥ श्रुत्वापरिष दोमध्येत्यपवादंसुदारुणम्॥ पुरेजनपदेचैवत्वत्कृतेजनकात्मजे॥ ११॥ रामःसंतप्तहृदयोमांनिवेद्यगृहंगतः॥ नतानिवचनीयानिमयादेवितवाग्र तः॥ १२॥ यानिराज्ञाहृदिन्यस्तान्यमर्षात्पृष्ठतःकृतः॥ सात्वंत्यक्तानृपतिनानिर्दोषाममसन्निधौ॥१३॥

ण्याज्ञप्तइतिमन्येइतिशेषः मह्यंममसन्निधौआज्ञापयामि तेत्वामित्यर्थः ॥ ९ ॥ १० ॥ त्वत्कृतेऽपवादंनिंदांश्रुत्वासंतप्तहृदयोगृहंगतइत्यन्वयः ॥ ११ ॥ कोसौमन्निमित्तःपौरापवादस्तत्राह न नानीति यानिवचनानिराज्ञाऽमर्षाद्धृदिन्यस्तानितानिहेदेविमयानवाच्यतोनवचनीयानिनवक्तुंशक्यानि अतएवतेषांवादोमयापृष्ठतःकृतः ॥ १२ ॥ ननुमदीयनिर्दोषत्वंराजात्वंचनजानासिकिं तत्राह निर्दोषेति यद्यपित्वंममसन्निधौअग्न्यादिभिर्निर्दोषाख्यापितातथापिपौरापवादभीतेनसानिर्दोषापित्वंत्यक्ता अन्यथावास्तवदोषबुद्ध्येतितेत्वयानप्राह्यम् यदेवमतआश्रमांतेषुआश्रम समीपेषु ॥ १३ ॥

॥ १४ ॥ दौर्हृदंचाज्ञायगर्भिण्याअभिलषितमवश्यंकार्यमितिज्ञात्वेत्यर्थः ॥ १५ ॥ पुण्यंरमणीयंतपोवनंप्राप्यमा विषादंकुरुथाः ॥ १६ ॥ परमकइत्यनुकंपायांकन् अस्यपादच्छायांपादमूलंउपागम्य एतत्पारतंत्र्यंप्राप्येत्यर्थः ॥ १७ ॥ १८ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेसप्तचत्वारिंशःसर्गः ॥ ४७ ॥ ॥ ७ ॥ ॥ अथविस्पष्टसीतासंदेशंगृहीत्वालक्ष्मणपरावृत्तिः लक्ष्मणस्येति ॥ १ ॥ बाष्पपर्याकुलेक्षणा संज्ञांप्राप्येतिशेषः २ ॥ दुःखमूर्तिःसकलदुःखसमूहः ॥ ३ ॥ सतीपतिव्रता ॥ ४ ॥ हेसौमित्रेपुरापूर्वकालेरामपा

पौरापवादभीतेनग्राह्यंदेविननेऽन्यथा ॥ आश्रमांतेपुचमयात्यक्तव्यात्वंभविष्यसि ॥ १४ ॥ राज्ञःशासनमदायतथैवकिलदौर्हृदम् ॥ तदेतज्जाह्नवीतीरेब्रह्मर्षीणांतपोवनम् ॥ १५ ॥ पुण्यंचरमणीयंचमाविषादंकुरुथाःशुभे ॥ राज्ञोदशरथस्यैवपितुर्मेमुनिपुंगवः ॥ १६ ॥ सखापरमकोविप्रोवाल्मीकिःसुमहायशाः ॥ पादच्छायामुपागम्यसुखमस्यमहात्मनः ॥ उपवासपरैकाग्रावसत्वंजनकात्मजे ॥ १७ ॥ पतिव्रतात्वमास्थायरामंकृत्वासदाहृदि ॥ श्रेयस्तेपरमंदेवितथाकृत्वाभविष्यति ॥ १८ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेसप्तचत्वारिंशःसर्गः ॥ ४७ ॥

लक्ष्मणस्यवचःश्रुत्वादारुणंजनकात्मजा ॥ परंविषादमागम्यवैदेहीनिपपातह ॥ १ ॥ सामुहूर्तमिवासंज्ञाबाष्पपर्याकुलेक्षणा ॥ लक्ष्मणंदीनयावाचाउवाचजनकात्मजा ॥ २ ॥ मामिकेयंतनुर्नूनंसृष्टादुःखायलक्ष्मण ॥ धात्रायस्यास्तथामेऽद्यदुःखमूर्तिःप्रदृश्यते ॥ ३ ॥ किन्नुपापंकृतंपूर्वंकोवादारैर्वियोजितः ॥ याहंशुद्धसमाचारात्यक्तानृपतिनासती ॥ ४ ॥ पुराहमाश्रमेवासंरामपादानुवर्तिनी ॥ अनुरुध्यापिसौमित्रेदुःखेचपरिवर्तिनी ॥ ५ ॥ साकथंत्वाश्रमेसौम्यवत्स्यामिविजनीकृता ॥ आख्यास्यामिचकस्याहंदुःखंदुःखपरायणा ॥ ६ ॥ किन्नुवक्ष्यामिमुनिपुकर्मचासत्कृतंप्रभो ॥ कस्मिन्वाकारणेत्यक्ताराघवेणमहात्मना ॥ ७ ॥

दानुवर्तिनीभूत्वादुःखेवनवासदुःखेपरिवर्तिनीवर्तमानापिअनुरुध्यतत्सोढाआश्रमेवासमरोचयमितिशेषः ॥ ५ ॥ साहमिदानींविजनीकृताइष्टजनरहिताकृताकथमाश्रमेवत्स्यामि कस्यचस्वीयंदुःखमहमाख्यास्यामि विजनवनस्थेतिशेषः ॥ ६ ॥ किन्विति महात्मनाराघवेणकेनकारणेनत्यक्ताकिंवात्यागकारणमसत्कर्मत्वयाकृतमितिप्रष्टृषुमुनिषुकिंनुवक्ष्यामि त्यागकारणपापस्यकस्याप्यकरणाद्वक्तव्यंप्रत्युत्तरंनकिमपिपश्यामीत्याशयः ॥ ७ ॥

अपिचजीवितत्यागोप्यशक्यइत्याह नखल्विति तदत्यागहेतुमाह राजवंशइति राजसंतानःपरिहास्यतेविच्छिद्यतेइत्यर्थः मयिगर्भस्यविद्यमानत्वादितिभावः ॥ ८ ॥ त्वंचराजशासनंकुर्वि त्याह यथाज्ञमिति इदंवचःमत्संदेशरूपम् ॥ ९ ॥ प्रग्रहेणप्रकृष्टांजलिग्रहणसमेतेनशिरसेत्यन्वयः चरणौवंद्यमत्पतिनिधितयेतिभावः पार्थिवंचवंदयित्वाकुशलंब्रूहि ॥ १० ॥ ११ ॥ १२ ॥ जनेऽयशोभीरुणाजननिमित्तायशोभीरुणैवत्वयात्यक्तानान्यथेतिजानामीतिशेषः वचनीयंनिंदा अपवादोऽभिशापः ॥ १३ ॥ अथप्रजाविषयेसंदेशमाह वक्तव्यश्चेति ॥ १४ ॥ १५ ॥

नखल्वद्यैवसौमित्रेजीवितंजाह्नवीजले॥ त्यजेयंराजवंशस्तुभर्तुर्मेपरिहास्यते ॥ ८ ॥ यथाज्ञंकुरुसौमित्रेत्यज्यमांदुःखभागिनीम्॥ निदेशेस्थी यतांराज्ञःशृणुचेदंवचोमम॥ ९ ॥ श्वश्रूणामविशेषेणप्रांजलिप्रग्रहेणच ॥ शिरसावंद्यचरणौकुशलंब्रूहिपार्थिवम्॥ १० ॥ शिरसाभिनतोब्रूयाः सर्वासामेवलक्ष्मण॥ वक्तव्यश्चापिनृपतिर्धर्मेषुसुसमाहितः॥ ११ ॥ जानासिचयथाशुद्धासीतातत्त्वेनराघव॥ भक्त्याचपरयायुक्ताहिताचतव नित्यशः॥ १२ ॥ अहंत्यक्ताचतेवीरअयशोभीरुणाजने॥ यच्चतेवचनीयंस्यादपवादःसमुत्थितः ॥ १३ ॥ मयाचपरिहर्तव्यंत्वंहिमेपरमागतिः॥ वक्तव्यश्चैवनृपतिर्धर्मेणसुसमाहितः ॥ १४ ॥ यथाभ्रातृषुवर्तेथास्तथापौरेषुनित्यदा॥ परमोह्येषधर्मस्तेतस्मात्कीर्तिरनुत्तमा ॥ १५ ॥ यत्तुपौ रजनेराजन्धर्मेणसमवाप्नुयात्॥ अहंतुनानुशोचामिस्वशरीरंनरर्षभ ॥ १६ ॥ यथापवादःपौराणांतथैवरघुनंदन॥ पतिर्हिदेवतानार्याःपतिर्बंधुः पतिर्गुरुः॥ १७॥ प्राणैरपिप्रियंतस्माद्भर्तुःकार्यंविशेषतः॥ इतिमद्वचनाद्रामोवक्तव्योममसंग्रहः॥ १८॥ निरीक्ष्यमाद्यगच्छत्वमृतुकालातिवर्तिनी म्॥ एवंब्रुवंत्यांसीतायांलक्ष्मणोदीनचेतनः॥ १९ ॥ शिरसावंद्यधरणींव्याहर्तुंनशशाकह॥ प्रदक्षिणंचतांकृत्वारुदन्नेवमहास्वनः॥ २० ॥ ध्यात्वा मुहूर्तंतामाहकिंमांवक्ष्यसिशोभने॥ दृष्टपूर्वंनतेरूपंपादौदृष्टौतवानघे॥ २१॥

एषधर्मःकस्तत्राह यत्तुइति धर्मेणधर्मकृतलक्षणेनयदवाप्नुयात्पुण्यंएषएवपरमोधर्मः ॥ १६ ॥ यथापौराणामपवादंपरिहृत्यस्थितिर्भवतितथैवरघुनंदनवर्तस्वेतिशेषः ॥ १७ ॥ ममसंग्रहःम यारामंप्रतिवक्तव्यसंदेशस्यसंग्रहइत्यर्थः ॥ १८ ॥ ऋतुकालातिवर्तिनींगर्भलक्षणवतींमामांनिरीक्ष्यगच्छ पुनारामादिकृतापवादप्रसक्तिनिवृत्तयेइतिभावः ॥ १९ ॥ २० ॥ किंमांवक्ष्यसिनि रीक्ष्यमांगच्छेतिकिंवदसीत्यर्थः शोकवशात्कालांतरेप्रयोगोनदोषाय तथानिरीक्षणस्यायोग्यतोपपादकंदृष्टपूर्वमिति ॥ २१ ॥

॥ २२ ॥ २३ ॥ अनाथवदनाथेवनतुवस्तुतोऽनाथा पूर्णचिद्घनस्वरूपत्वादितिभावः ॥ २४ ॥ २५ ॥ दुःखभारावनतासेव यशोधरापातिव्रत्ययशोवती ॥ २६ ॥ ॥ इतिश्रीरामाभिरामेश्री रामीयेरा०वा०आ०उ०अष्टचत्वारिंशःसर्गः ॥ ४८ ॥ ॥ ७ ॥ ॥ अथवाल्मीकिनास्वाश्रमेसीतानयनं सीतांत्विति मुनिदारकाःमुनिपुत्राः उग्रधीःउग्रतपोविषयबुद्धिः ॥ १ ॥ २ ॥

कथमत्रहिपश्यामिरामेणरहितांवने ॥ इत्युक्तातांनमस्कृत्यपुनर्नावमुपारुहत् ॥ २२ ॥ आरुरोहपुनर्नावंनाविकंचाभ्यचोदयत् ॥ सगत्वाचोत्तरंतीरंशोकभारसमन्वितः ॥ २३ ॥ संमूढइवदुःखेनरथमध्यारुहद्द्रुतम् ॥ मुहुर्मुहुःपरावृत्त्यदृष्ट्वासीतामनाथवत् ॥ २४ ॥ चेष्टंतींपरतीरस्थांलक्ष्मणःप्रययावथ ॥ दूरस्थंरथमालोक्यलक्ष्मणंचमुहुर्मुहुः ॥ निरीक्षमाणांतूद्विग्नांसीतांशोकःसमाविशत् ॥ २५ ॥ सादुःखभारावनतायशस्विनीयशोधरानाथमपश्यतीसती ॥ रुरोदसाबर्हिणनादितेवनेमहास्वनंदुःखपरायणासती ॥ २६ ॥ ॥ इत्यार्षेश्रीम०वा०आ०उ०अष्टचत्वारिंशःसर्गः ॥ ४८ ॥

सीतांतुरुदतींदृष्ट्वातेतत्रमुनिदारकाः ॥ प्राद्रवन्यत्रभगवानास्तेवाल्मीकिरुग्रधीः ॥ १ ॥ अभिवाद्यमुनेःपादौमुनिपुत्रामहर्षये ॥ सर्वेनिवेदयामासुस्तस्यास्तुरुदितस्वनम् ॥ २ ॥ अदृष्टपूर्वाभगवन्कस्याप्येषामहात्मनः ॥ पत्नीश्रीरिवसंमोहाद्विरौतिविकृतानना ॥ ३ ॥ भगवन्साधुपश्येस्त्वंदेवतामिवखाच्च्युताम् ॥ नद्यास्तुतीरेभगवन्वरस्त्रीकापिदुःखिता ॥ ४ ॥ दृष्टाऽस्माभिःप्ररुदितादृढंशोकपरायणा ॥ अनर्हादुःखशोकाभ्यामेकादीनाऽनाथवत् ॥ ५ ॥ "नह्येनांमानुषींविद्मःसत्क्रियास्याःप्रयुज्यताम् ॥ आश्रमस्याविदूरेचत्वामियंशरणंगता ॥ त्रातारमिच्छतेसाध्वीभगवंस्त्रातुमर्हसि ॥ तेषांतुवचनंश्रुत्वाबुद्ध्यानिश्चित्यधर्मवित् ॥ तपसालब्धचक्षुष्मान्प्राद्रवद्यत्रमैथिली ॥ तंप्रयांतमभिप्रेत्यशिष्याह्येनंमहामतिम् ॥ तंतुदेशमभिद्रुत्यकिंचित्पद्भ्यांमहामतिः ॥ अर्घ्यमादायरुचिरंजाह्नवीतीरमागमत् ॥ ददर्शराघवस्येष्टांसीतांपत्नीमनाथवत्" ॥ तांसीतांशोकभारार्तांवाल्मीकिर्मुनिपुंगवः ॥ उवाचमधुरांवाणींह्लादयन्निवतेजसा ॥ ६ ॥ स्नुषादशरथस्यत्वंरामस्यमहिषीप्रिया ॥ जनकस्यसुताराज्ञःस्वागतंतेपतिव्रते ॥ ७ ॥

निवेदयामासुरित्यस्यविस्तरोऽदृष्टेति ॥ ३ ॥ ४ ॥ अनर्हा दुःखस्येतिशेषः दुःखशोकाभ्यांदीनाअनाथवद्वर्ततेतामिमांसाधुपश्येःदृष्ट्वानुगृहाणच ॥ ५ ॥ एतदुत्तरंतांसीतामितिश्लोकः मध्ये श्लोकचतुष्टयमर्धाधिकंप्रक्षिप्तमितिकतकः तांसीतांमुनिपुत्रैर्दृष्ट्वानुयाप्यत्वेनोक्तांशोकयस्तांतांसीतांतत्समीपेगत्वादृष्ट्वांवाल्मीकिरुवाचेतिसोपस्कारःसंबंधः ॥ ६ ॥ ७ ॥

धर्मसमाधिनायोगजधर्मलब्धध्यानपरिपाकेन कारणंचआगमनकारणं हृदयेनोपलक्षितं ध्यानेनेतिभावः ॥ ८ ॥ तवचैवेति तत्त्वतःतत्त्वंतवतत्त्वंशुद्धभावत्वरूपंममममयाविदितं तदेवाह सर्वं चेति मह्यंमम ॥ ९ ॥ तदेवपुनराहापापामिति तेत्वांमयिवर्तसे मत्समीपेनिवसिष्यसीत्यर्थः ॥ १० ॥ आश्रमस्याविदूरेसमीपेएकांतेतपश्चरणार्थंतापस्योपिस्थिताःसंतितासांनिवासोस्ती त्यर्थः यथावत्संपुत्रमिव ॥ ११ ॥ यथास्वगृहमभ्येत्यतिष्ठसितथैवतिष्ठेतिशेषः ॥ १२ ॥ १३ ॥ वैदेह्यासहेतिशेषः मुनिपत्नयस्तापस्योमुदायुक्ताअब्रुवन्वाल्मीकिम् ॥ १४ ॥ चिरस्य

आयांतीचास्मिविज्ञातामयाधर्मसमाधिना ॥ कारणंचैवसर्वंमेहृदयेनोपलक्षितम् ॥८॥ तवचैवमहाभागेविदितंममतत्त्वतः ॥ सर्वंचविदितंमह्यं त्रैलोक्येयद्धिवर्तते ॥९॥ अपापांवेद्मिसीतेतेतपोलब्धेनचक्षुषा ॥ विस्रब्धाभववैदेहिसांप्रतंमयिवर्तसे ॥१०॥ आश्रमस्याविदूरेमेतापस्यस्तपसि स्थिताः ॥ तास्त्वांवत्सेयथावत्संपालयिष्यंतिनित्यशः ॥ ११ ॥ इदमर्घ्यंप्रतीच्छत्वंविस्रब्धाविगतज्वरा ॥ यथास्वगृहमभ्येत्यविषादंचैवमाकृथाः ॥ १२ ॥ श्रुत्वातुभाषितंसीतामुनेःपरममद्भुतम् ॥ शिरसावंद्यचरणौतथेत्याहकृतांजलिः ॥ १३ ॥ तंप्रयांतंमुनिंसीताप्रांजलिःपृष्ठतोन्वगात् ॥ तंदृ ष्ट्वामुनिमायांतंवैदेह्यामुनिपत्नयः ॥ उपाजग्मुर्मुदायुक्तावचनंचेदमब्रुवन् ॥ १४ ॥ स्वागतंतेमुनिश्रेष्ठचिरस्यागमनंचते ॥ अभिवादयामस्त्वां सर्वाउच्यतांकिंचकुर्महे ॥ १५ ॥ तासांतद्वचनंश्रुत्वावाल्मीकिरिदमब्रवीत् ॥ सीतेयंसमनुप्राप्तापत्नीरामस्यधीमतः ॥ १६ ॥ स्नुषादशरथस्यैषा जनकस्यसुतासती ॥ अपापापतिनात्यक्तापरिपाल्यामयासदा ॥ १७ ॥ इमांभवत्यःपश्यंतुस्नेहेनपरमेणहि ॥ गौरवान्ममवाक्याच्चपूज्यावोस्तु विशेषतः ॥ १८ ॥ मुहुर्मुहुश्चवैदेहींपरिदायमहायशाः ॥ स्वमाश्रमंशिष्यवृतःपुनरायान्महातपाः ॥ १९ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीये आ० उत्तरकांडएकोनपंचाशःसर्गः ॥ ४९ ॥ ॥ ५९ ॥ ॥ दृष्ट्वातुमैथिलींसीतामाश्रमेसंप्रवेशिताम् ॥ संतापमगमद्घोरंलक्ष्मणोदीनचेतनः ॥ १ ॥

तवागमनंदृष्ट्वास्थितावयमभिवादयामःअभिवादयामःकिंचकुर्महे ॥ १५ ॥ १६ ॥ सदेति पूर्वंपूर्वावतारेष्वप्येवमेवपरिपालितेत्यर्थः ॥ १७ ॥ १८ ॥ परिदायतापसीनांहस्तेदत्वा ॥ १९ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेएकोनपंचाशःसर्गः ॥ ४९ ॥ ॥ ५९ ॥ ॥ ५९ ॥ ॥ अथलक्ष्मणस्यसुमंत्रेणाश्वासनंदृष्ट्वात्वि ति उदक्कूलेस्थित्वावाल्मीकिकर्तृकसीताप्रवेशदर्शनम् ॥ १ ॥

मंत्रसारथिमंत्रसहायसूतंसारथिं सीतासंतापजंसीतावियोगजसंतापजम् ॥ २ ॥ पत्नींविसृज्ययत्स्थितः ततःविसृज्यस्थितेः ॥ ३ ॥ वैदेह्याविनाभवंवैदेहीवियोगेनावस्थानंदैवात्प्राचीनदुरदृष्टवशा दहंमन्ये यतोदैवंदुरतिक्रमम् ॥ ४ ॥ दैवंपर्युपासतेदैवमनुवर्तन्ते ननुतन्निरसितुंशक्नोतीत्यर्थः ॥ ५ ॥ यत्पुरादंडकेउषित्वादुःखमन्वभूत्तत्पितृवाक्यगौरवादुचितमितिशेषः ॥ ६ ॥ इदंतुअपरिपा ल्यवचसांपौराणांवचनंश्रुत्वाअपरिमितकालत्वाद्दुःखतरंसीताविप्रवासनंयत्कृतवांस्तन्नृशंसंक्रूरकल्पमितिभाति ॥ ७ ॥ कोन्विति हीनार्थवादिभिर्न्यायहीनार्थवादिभिः पौरैर्हेतुभिर्मैथिलींप्र तियशोहरेसाध्वींवनेविसृष्टवानित्ययशस्करेऽस्मिन्कर्मणिसीतापरित्यागकर्मण्यनुष्ठितेसतिकोनुधर्माश्रयोधर्मपरिग्रहःसंप्राप्तोरामेण धर्माणांसत्स्त्रीमूलत्वात् तत्त्यागेसर्वोऽपिधर्मोनाशितएवेत्य

अब्रवीच्चमहातेजाःसुमंत्रंमंत्रसारथिम् ॥ सीतासंतापजंदुःखंपश्यरामस्यसारथे ॥ २ ॥ ततोदुःखतरंकिन्नुराघवस्यभविष्यति ॥ पत्नींशुद्धसमा चारांविसृज्यजनकात्मजाम् ॥ ३ ॥ व्यक्तंदैवादहंमन्येराघवस्यविनाभवम् ॥ वैदेह्यासारथेनित्यंदैवंहिदुरतिक्रमम् ॥ ४ ॥ योहिदेवान्सगंधर्वानसु रान्सहराक्षसैः ॥ निहन्याद्राघवःक्रुद्धःसदैवंपर्युपासते ॥ ५ ॥ पुरारामःपितुर्वाक्याद्दंडकेविजनेवने ॥ उषित्वानववर्षाणिपंचचैवमहावने ॥ ६ ॥ ततो दुःखतरंभूयःसीतायाविप्रवासनम् ॥ पौराणांवचनंश्रुत्वानृशंसंप्रतिभातिमे ॥ ७ ॥ कोनुधर्माश्रयःसूतकर्मण्यस्मिन्यशोहरे ॥ मैथिलींसमनुप्राप्तः पौरैर्हीनार्थवादिभिः ॥ ८ ॥ एतावाचोबहुविधाःश्रुत्वालक्ष्मणभाषिताः ॥ सुमंत्रःश्रद्धयाप्राज्ञोवाक्यमेतदुवाचह ॥ ९ ॥ नसंतापस्त्वयाकार्यःसौमि त्रेमैथिलींप्रति ॥ दृष्टमेतत्पुराविप्रैःपितुस्तेलक्ष्मणाग्रतः ॥ १० ॥ भविष्यतिदृढंरामोदुःखप्रायोविसौख्यभाक् ॥ प्राप्स्यतेचमहाबाहुर्विप्रयोगंप्रियै र्द्रुतम् ॥ ११ ॥ त्वांचैवमैथिलींचैवशत्रुघ्नभरतौतथा ॥ सत्यजिष्यतिधर्मात्माकालेनमहतामहान् ॥ १२ ॥ इदंत्वयिनवक्तव्यंसौमित्रेभरतेपिवा ॥ राज्ञावोव्याहृतंवाक्यंदुर्वासायदुवाचह ॥ १३ ॥

र्थः ॥ ८ ॥ ९ ॥ दृष्टमिति पुरापूर्वस्मिन्काले तवपितुरग्रतः एतत्सीताविप्रवासनादिवक्ष्यमाणं विप्रैर्दृष्टमेव दृष्ट्वेत्यर्थः ॥ १० ॥ तदेवाह भविष्यतीति दृढंध्रुवंदुःखप्रायोदुःखबहुलः अतोवि सौख्यभाक्सौख्यवियोगभाक्चभविष्यतिइतिदृष्टमित्यन्वयः यदेवमतःप्राप्स्यतेचेत्यादि ॥ ११ ॥ प्रियैर्वियोगमित्येतदेवविवृणोति त्वांचेति दुर्वासःसंभाषणनिमित्तकेनिर्याणकालेलक्ष्मण त्यागः शत्रुघ्नभरतयोस्तुमथुराराज्यगंधर्वराज्ययोःकरणायप्रतिष्ठापनमेवत्यागः ॥ १२ ॥ राज्ञादशरथेनवोयुष्मान्प्रतिव्याहृतंएषांकथमग्रेभावीत्येवंप्रश्नवाक्यंश्रुत्वायद्दुर्वासाउवाचतदिदंत्व यित्वयासौमित्रेशत्रुघ्नेभरतेचनवाच्यम् ॥ १३ ॥

दुर्वासोवाक्यंत्वयाकथमत्रगतंतत्राह महाजनेति महांतोजनायस्यदशरथस्यतस्यममचसन्निधौ राजसमीपस्थितंमामनुःथाप्यैववसिष्ठसन्निधौचऋषिणोक्तम् एवंत्रयाणामग्रेएतदुक्तमितित्र यएतत्परिज्ञाइत्युक्तम् ॥ १४ ॥ ऋषेर्दुर्वाससःपुरुषर्षभोदशरथः एवंतेश्रुतमतिरहस्यंत्वयानकचिद्वक्तव्यमित्यर्थः ॥ १५ ॥ तस्यलोकपालस्यदशरथस्यवाक्यंनान्नृतंकार्यमितिसुसमाहितःसा वधानचित्तोभविष्यामीतिमेदर्शनंसंकल्पः ॥ १६ ॥ यदेवमतःसर्वथेति तवाग्रेनवक्तव्यम् रहस्यश्रवणेऽत्युत्कटश्रद्धारहितस्येत्यर्थः श्रद्धायांतुवक्ष्यामीत्याह यदितेइति लक्ष्मणस्यपरमाप्तत्वा द्राजपुत्रत्वाच्च जनसन्निधावेवनरेंद्रेणप्रतिषेधाच्चदुःखितदुःखनिवारणायरहस्यप्रकटनेपिनदोषइतिसुमंत्राशयः ॥ १७ ॥ पुनस्तदेवाह यद्यपीति यद्यपिनरेंद्रेणरहस्यमप्रकाश्यमित्युक्तंतथापि

महाजनसमीपेचममचैवनरर्षभ ॥ ऋषिणाव्याहृतंवाक्यंवसिष्ठस्यचसन्निधौ ॥ १४ ॥ ऋषेस्तुवचनंश्रुत्वामामाहपुरुषर्षभः ॥ सूतनकचिदेवंते वक्तव्यंजनसन्निधौ ॥ १५ ॥ तस्याहंलोकपालस्यवाक्यंतत्सुसमाहितः ॥ नैवजात्वनृतंकुर्यामितिमेसौम्यदर्शनम् ॥ १६ ॥ सर्वथैवनवक्तव्यंमया सौम्यतवाग्रतः ॥ यदितेश्रवणेश्रद्धाश्रूयतांरघुनंदन ॥ १७ ॥ यद्यप्यहंनरेंद्रेणरहस्यंश्रावितंपुरा ॥ तथाप्युदाहरिष्यामिदैवंहिदुरतिक्रमम् ॥ १८ ॥ येनेदमीदृशंप्राप्तंदुःखंशोकसमन्वितम् ॥ नत्वयाभरतस्याग्रेशत्रुघ्नस्यापिसन्निधौ ॥ १९ ॥ तच्छ्रुत्वाभाषितंतस्यगंभीरार्थपदंमहत् ॥ तथ्यंब्रूहीति सौमित्रिःसूतंतंवाक्यमब्रवीत् ॥ २० ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेपंचाशःसर्गः ॥ ५० ॥ ॥ छ ॥ ॥ तथासंचो दितःसूतोलक्ष्मणेनमहात्मना ॥ तद्वाक्यमृषिणाप्रोक्तंव्याहर्तुमुपचक्रमे ॥ १ ॥

कथनयोग्येकालेएकस्यनिकटेउदाहरिष्यामि एवंज्ञात्वादुःखंनकार्यमित्याह दैवंहीति येनदैवेनेदृशंदुःखंप्राप्तंतद्दैवंदुरतिक्रममितिज्ञात्वाशोकंत्यजेत्यर्थः दैवंहिसुमहद्भूतम् येनेदमीदृशंप्राप्यमि तिचपाठेराज्ञाऽप्रकाश्यत्वोक्तौहेतुर्दैवंहीत्यादि येनदैवेनप्राचीनकर्मणाशोकसममीदृशंदुःखंत्वयाप्राप्यंप्रापणीयंतद्दैवंहियस्मात्सुमहद्भूतंकेनापिदुःशकज्ञानमतोराज्ञाऽप्रकाश्यमुक्तं यदितुपूर्वंभव दादीनामग्रेउक्तंस्यात्तदास्यार्थस्यावश्यभावित्वज्ञानात्तेवेदृशंदुःखंनस्यादितिकतकादयः अतोनत्वयाभरतादिसन्निधौवाच्यमितिशेषः ॥ १८ ॥ १९ ॥ गंभीरार्थपदंप्रागुक्तंसत्यंतथ्यंभाषितंश्रु त्वासौमित्रिःशोकनिवृत्तयेतद्ब्रूहिविस्तरेणब्रूहीत्यब्रवीत् ॥ २० ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेपंचाशःसर्गः ॥ ५० ॥ ॥ छ ॥ ॥ अ थतत्कथनम् तथासंचोदितइति ॥ १ ॥

वार्षिक्यं वर्षासु भवं चातुर्मास्यनियममुद्दिश्योवास यतीनां वर्षाकाले भ्रमणनिषेधाद्वार्षिकमासचतुष्टयमेकत्रैव स्थितवानित्यर्थः ॥ २ ॥ ३ ॥ महामुनिं दुर्वाससं दृष्ट्वा ॥ ४ ॥ ५ ॥ ६ ॥ मध्यादित्यगते मध्यगतादित्ये ॥ ७ ॥ प्रग्रहः ऊर्ध्वबाहुः ॥ ८ ॥ किंप्रमाणेन मत्पुत्रपर्यंतं ततोप्यधिकं वा ॥ ९ ॥ १० ॥ ११ ॥ एवं रामस्य शापवशाद्दुःखोपेतं चिरायुष्यं वक्तुं पीठिकामाह शृणु राजन्निति

पुरा नाम्ना हि दुर्वासा अत्रेः पुत्रो महामुनिः ॥ वसिष्ठस्याश्रमे पुण्ये वार्षिक्यं समुवास ह ॥ २ ॥ तमाश्रमं महातेजाः पिता ते सुमहायशाः ॥ पुरोहितं महात्मानं दिदृक्षुरगमत्स्वयम् ॥ ३ ॥ स दृष्ट्वा सूर्यसंकाशं ज्वलंतमिव तेजसा ॥ उपविष्टं वसिष्ठस्य सव्यपार्श्वे महामुनिम् ॥ ४ ॥ तौ मुनी तापसश्रेष्ठौ विनीतावभ्यवादयत् ॥ स ताभ्यां पूजितो राजा स्वागतेनासनेन च ॥ ५ ॥ पाद्येन फलमूलैश्च उवास मुनिभिः सह ॥ ६ ॥ तेषां तत्रोपविष्टानां तास्ताः सुमधुराः कथाः ॥ बभूवुः परमर्षीणां मध्यादित्यगतेहनि ॥ ७ ॥ ततः कथायां कस्यांचित्प्रांजलिः प्रग्रहो नृपः ॥ उवाच तं महात्मानमत्रेः पुत्रं तपोधनम् ॥ ८ ॥ भगवन्किंप्रमाणेन मम वंशो भविष्यति ॥ किमायुश्च हि मे रामः पुत्राश्चान्ये किमायुषः ॥ ९ ॥ रामस्य च सुता ये स्युस्तेषामायुः कियद्भवेत् ॥ काम्यया भगवन्ब्रूहि वंशस्यास्य गतिं मम ॥ १० ॥ तच्छ्रुत्वा व्याहृतं वाक्यं राज्ञो दशरथस्य तु ॥ दुर्वासाः सुमहातेजा व्याहर्तुमुपचक्रमे ॥ ११ ॥ शृणु राजन्पुरा वृत्तं तदा देवासुरे युधि ॥ दैत्याः सुरैर्भर्त्स्यमाना भृगुपत्नीं समाश्रिताः ॥ तया दत्ताभयास्तत्र न्यवसन्नभयास्तदा ॥ १२ ॥ तया परिगृहीतांस्तान्दृष्ट्वा क्रुद्धः सुरेश्वरः ॥ चक्रेण शितधारेण भृगुपत्न्याः शिरोहरत् ॥ १३ ॥ ततस्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्वहः ॥ शशाप सहसा क्रुद्धो विष्णुं रिपुकुलार्दनम् ॥ १४ ॥ यस्मादवध्यां मे पत्नीमवधीः क्रोधमूर्च्छितः ॥ तस्मात्त्वं मानुषे लोके जनिष्यसि जनार्दन ॥ १५ ॥ तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिकम् ॥ शापाभिहतचेतास्तु स्वात्मना भावितोभवत् ॥ १६ ॥ अर्चयामास तं देवं भृगुः शापेन पीडितः ॥ तपसाराधितो देवो ह्यब्रवीद्भक्तवत्सलः ॥ १७ ॥

पुरा पूर्वस्मिन्काले भृगुपत्नीं स्वपुरोहितमातरम् ॥ १२ ॥ १३ ॥ १४ ॥ अवध्यां स्त्रीत्वादृषिपत्नीत्वाच्च वधानर्हाम् ॥ १५ ॥ शापाभिहतचेताः धर्मपक्षाश्रयदेवानुग्रहाय प्रवृत्त ईश्वरः स्वोपास्यो मया ह्यभिमानेन शप्तः ईश्वरत्वाद्यदि तं निरस्येत्तदा मिथ्यावचनत्वेन नरकप्राप्तिः स्यादिति पश्चात्तापपरीतचित्तः स्वात्मनांतर्यामिणा भावितः स्वशापस्वीकारार्थमीश्वरं प्रति तपश्चरणार्थं प्रेरित इत्यर्थः ॥ १६ ॥ शापेन शापस्य मोघत्वभयेन पीडितो भृगुस्तं देवमर्चयामास ॥ १७ ॥

किमत्रत्रीत्तदाह लोकानामिति लोकानांभूरादीनाम् संप्रियार्थंमभ्ययावणवधादिरूपप्रियसंपादनार्थम् तंशापंमनुष्यत्वादिप्रापकंगृह्यंअंगीकार्यमेवस्वस्योक्तवान् इतिशप्तः उक्तप्रकारेणश
प्तः पूर्वजन्मनिकश्यपपुत्ररूपोपेंद्रावतारे अत्रपूर्वजन्मनिभृगुणाशप्तइत्युक्त्यातद्वंश्यर्षिशापोभावीअत्रापिशरीरेभगवतः सूचितः सपाद्मेदर्शितः आहूयलक्ष्मणंप्राहरामोराजीवलोचनः श्रृणुमे
वचनंगुह्यंसीतासंत्यागकारणम् वाल्मीकिनाथभृगुणाशप्तोस्मिकिललक्ष्मण तस्मादेनांत्यजाम्यद्यजनेनैवात्रकारणमिति वाल्मीकेरपिप्राचेतसत्वाद्भृगुवंश्यत्वेनभृगुत्वमस्तीतिवदंति एतच्चनि

लोकानांसंप्रियार्थंतुतंशापंगृह्यमुक्तवान् ॥ इतिशप्तोमहातेजाभृगुणापूर्वजन्मनि ॥ १८ ॥ इहागतोहिपुत्रत्वंतवपार्थिवसत्तम ॥ रामइत्यभिवि
ख्यातस्त्रिपुलोकेपुमानद ॥ १९ ॥ तत्फलंप्राप्स्यतेचापिभृगुशापकृतंमहत् ॥ अयोध्यायाःपतीरामोदीर्घकालंभविष्यति ॥ २० ॥ सुखिनश्चसमृद्धा
श्चभविष्यंत्यस्ययेनुगाः ॥ दशवर्षसहस्राणिदशवर्षशतानिच ॥ २१ ॥ रामोराज्यमुपासित्वाब्रह्मलोकंगमिष्यति ॥ समृद्धैश्चाश्वमेधैश्चइष्ट्वापरम
दुर्जयः ॥ २२ ॥ राजवंशांश्चबहुशोबहूनसंस्थापयिष्यति ॥ द्वौपुत्रौतुभविष्येतेसीतायांराघवस्यतु ॥ २३ ॥ ससर्वमखिलंराज्ञोवंशस्याहगतागतम् ॥
आख्यायसुमहातेजास्तूष्णीमासीन्महामुनिः ॥ २४ ॥ तूष्णींभूतेतदातस्मिन्राजादशरथोमुनौ ॥ अभिवाद्यमहात्मानौपुनरायात्पुरोत्तमम् ॥ २५ ॥
एतद्वचोमयातत्रमुनिनाव्याहृतंपुरा ॥ श्रुतंहृदिचनिक्षिप्तंनान्यथातद्भविष्यति ॥ २६ ॥ सीतायाश्चततःपुत्रावभिषेक्ष्यतिराघवः ॥ अन्यत्रनत्वयो
ध्यायांमुनेस्तुवचनंयथा ॥ २७ ॥ एवंगतेनसंतापंकर्तुमर्हसिराघव ॥ सीतार्थेराघवार्थेवाद्दढोभवनरोत्तम ॥ २८ ॥ श्रुत्वातुव्याहृतंवाक्यंसूतस्यप
रमाद्भुतम् ॥ प्रहर्षमतुलंलेभेसाधुसाध्वितिचाब्रवीत् ॥ २९ ॥ ततःसंवदतोरेवंसूतलक्ष्मणयोःपथि ॥ अस्तमर्केगतेवासंकेशिन्यांतावथोषतुः ॥ ३० ॥
इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेएकपंचाशःसर्गः ॥ ५१ ॥ ॥ छ ॥ ॥ छ ॥

रूपितंबालकांडेविस्तरेणास्माभिर्यथोपक्रमेमानिषादेतिश्लोके ॥ १८ ॥ तच्छापवशादेवस्वेच्छयातवपुत्रत्वमागतः ॥ १९ ॥ तत्फलंपत्नीवियोगेनचिरवासलक्षणंप्राप्स्यते ॥ २० ॥ २१ ॥
ब्रह्मलोकंहिरण्यगर्भस्यलोकंवैकुंठम् तस्यापिहिरण्यगर्भलोकैकदेशत्वमितिभावः ॥ २२ ॥ बहून्राजवंशान् लक्ष्मणादिपुत्रद्वारेतिभावः एतेनरामपुत्राणामपिचिरजीवित्वमुक्तप्रायमेव सदुर्वा
साः ॥ २४ ॥ २५ ॥ नान्यथाभविष्यतिसत्यमेवभविष्यतीत्यर्थः ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ॥ इतिश्रीरामाभि० श्रीरा० रा० वा० आ० उत्तरकांडेएकपंचाशःसर्गः ॥ ५१ ॥

अथागतेनलक्ष्मणेनरामाश्वासनम् तत्रेति केशिनीकाचिन्नदीतिकतकः ॥ १ ॥ दिवसस्यार्धमर्धदिवसम् ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ अश्रुपूर्णाभ्यांनेत्राभ्यामुपलक्षितम् ॥ ६ ॥ ७ ॥ ८ ॥ उपासितुंनत्वेतिशेषः ॥ ९ ॥ माशुचःसीतावियोगेनेतिशेषः ॥ १० ॥ ययाबुद्ध्यामनस्विनोनशोचंतितांबुद्धिमाह सर्वेइति निचयारावणादेरिवमहत्तरैश्वर्याणि अवश्यंक्षयांतान्येवनाशांतान्येव समुच्छ्रयाःइंद्रजिदादेरिवशौर्यवीर्यादिजनितौन्नत्यानिपतनांतान्येव संयोगायुवयोरिवविप्रयोगांताः सर्वस्यजनिमतोजीवितंमरणांतमेव ॥ ११ ॥ यतएवंतस्मादेषुअतिप्रसंगोऽत्यासक्तिः ॥ १२ ॥ निजस्वरूपपर्यालोचनयाविशोकोनकार्यइत्याह शक्तइति विनेतुंशिक्षितुम् नियहीतुंसांसारिकदुःखाद्वारयितुमित्यर्थः आत्मनेत्यत्रअंतःकरणोपाधिर्जीवोभोक्तात्मा आत्मानमंतःकरणम् मन

तत्रतांरजनीमुष्यकेशिन्यांरघुनंदनः॥ प्रभातेपुनरुत्थायलक्ष्मणःप्रययौतदा॥ १ ॥ ततोर्धदिवसेप्राप्तेप्रविवेशमहारथः॥ अयोध्यांरत्नसंपूर्णांहृष्टपुष्टजनाकुलाम्॥ २ ॥ सौमित्रिस्तुपरंदैन्यंजगामसुमहामतिः॥ रामपादौसमासाद्यवक्ष्यामिकिमहंगतः॥ ३ ॥ तस्यैवंचिंतयानस्यभवनंशशिसन्निभम्॥ रामस्यपरमोदारंपुरस्तात्समदृश्यत॥ ४ ॥ राज्ञस्तुभवनद्वारिसोऽवतीर्यनरोत्तमः॥ अवाङ्मुखोदीनमनाःप्रविवेशानिवारितः॥ ५ ॥ सदृष्ट्वाराघवंदीनमासीनंपरमासने ॥ नेत्राभ्यामश्रुपूर्णाभ्यांददर्शाग्रजमग्रतः॥ ६ ॥ जग्राहचरणौतस्यलक्ष्मणोदीनचेतनः॥ उवाचदीनयावाचाप्रांजलिःसुसमाहितः ॥ ७ ॥ आर्यस्याज्ञांपुरस्कृत्यविसृज्यजनकात्मजाम्॥ गंगातीरेयथोद्दिष्टेवाल्मीकेराश्रमेशुभे॥ ८ ॥ तत्रतांचशुभाचाराश्रमांतेयशस्विनीम्॥ पुनरप्यागतोवीरपादमूलमुपासितुम्॥ ९ ॥ माशुचःपुरुषव्याघ्रकालस्यगतिरीदृशी॥ त्वद्विधानहिशोचंतिबुद्धिमंतोमनस्विनः॥ १० ॥ सर्वेक्षयांतानिचयाःपतनांताःसमुच्छ्रयाः ॥ संयोगाविप्रयोगांतामरणांतंचजीवितम्॥ ११ ॥ तस्मात्पुत्रेषुदारेषुमित्रेषुचधनेषुच॥ नातिप्रसंगःकर्तव्योविप्रयोगोहितैर्ध्रुवम्॥ १२ ॥ शक्तस्त्वमात्मनात्मानंविनेतुंमनसामनः॥ लोकान्सर्वांश्चकाकुत्स्थकिंपुनःशोकमात्मनः॥ १३ ॥ नेदृशेषुविमुह्यंतित्वद्विधाःपुरुषर्षभाः॥ अपवादःसकिलतेपुनरेष्यतिराघव॥ १४ ॥ यदर्थंमैथिलीत्यक्ताअपवादभयान्नृप॥ सोपवादःपुरेराजन्भविष्यतिनसंशयः॥ १५ ॥

सांतःकरणेन मनस्तद्वृत्तिविशेषरूपम् अत्रमनःशब्दोभोगोपकरणेंद्रियोपलक्षणम् हेकाकुत्स्थसर्वलोकांश्चविनेतुमंतर्यामिरूपेणशिक्षितुंसमर्थस्त्वमात्मनःशोकंनिवारयितुंसमर्थइतिकिंवक्तव्यमित्यर्थः ॥ १३ ॥ तदेवाह नेदृशेष्विति किंचैवंशोकेक्रियमाणेअज्ञप्रजानिबंधनोनर्थउभयतःपाशरज्जुरिवदुर्मोचइत्याहापवादइति ॥ १४ ॥ हेनृपअपवादभयाद्भीतेनत्वयायदर्थंयदपवादनिवृत्तयेसीतात्यक्तासोऽपवादःहेराजन्परगृहोषितांस्त्रियंत्यक्त्वासर्वदातामेवानुशोचतीतिप्रकारांतरेणसभविष्यतिनात्रसंशयः यत्तुकतकेनाग्न्यादिनाशुद्धत्वेनोक्तांस्वयंदृष्टशुद्धिंगर्भिणीमपिरामःप्राकृतवद्विसृष्टवानितिपुरेदेशादिपुरेअपवादोभविष्यतीतिव्याख्यातम् तत्तुशोकत्यागानुपपादकतयोपेक्षितम् ॥ १५ ॥

यदेवमतइमांवुद्धिशोकवुद्धिंत्यज ॥ १६ ॥ १७ ॥ प्रजापालनायमामेवंबोधयतीतिलक्ष्मणाशयंज्ञात्वातदंगीकृत्योत्तरमाह एवमेतदितिश्लोकद्वयेन हेलक्ष्मणवीरसौम्यलक्ष्मणेत्यादरेणबहु शःसंबोधनं राज्यपरिपालनंत्यक्त्वाएवंशोकोऽपवादइत्युक्तंत्वया एतदेवमेवसत्यमेवातस्त्वद्वाक्यैरनुनीतोस्मि अतोममदुःखनिवृत्तिरागताजातासंतापश्चमयानिराकृतः अतएवममकार्यानुशासनेप्रजारक्षणकार्यस्यानुष्ठानेमेमयापरितोषः प्राप्तइतिशेषः ॥ १८ ॥ १९ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेद्विपंचाशःसर्गः ॥ ५२ ॥

सत्त्वंपुरुषशार्दूल धैर्येणसुसमाहितः ॥ त्यजेमांदुर्बलांवुद्धिंसंतापंमाकुरुष्वह ॥ १६ ॥ एवमुक्तःसकाकुत्स्थोलक्ष्मणेनमहात्मना ॥ उवाचपरयाप्रीत्यासौमित्रिंमित्रवत्सलः ॥ १७ ॥ एवमेतन्नरश्रेष्ठयथावदसिलक्ष्मण ॥ परितोषश्चमेवीरममकार्यानुशासने ॥ १८ ॥ निवृत्तिश्चागतासौम्यसंतापश्चनिराकृतः ॥ भवद्वाक्यैःसुरुचिरैरनुनीतोस्मिलक्ष्मण ॥ १९ ॥ ॥ इत्यार्षेश्रीमद्रा० वा० आ० उ० द्विपंचाशःसर्गः ॥ ५२ ॥ ॥ ७९ ॥ ॥ लक्ष्मणस्यतुतद्वाक्यंनिशम्यपरमाद्भुतम् ॥ सुप्रीतश्चाभवद्रामोवाक्यमेतदुवाचह ॥ १ ॥ दुर्लभस्त्वीदृशोबंधुरस्मिन्कालेविशेषतः ॥ यादृशस्त्वंमहाबुद्धिर्ममसौम्यमनोनुगः ॥ २ ॥ यच्चमेहृदयेकिंचिद्वर्ततेशुभलक्षण ॥ तन्निशामयचश्रुत्वाकुरुष्ववचनंमम ॥ ३ ॥ चत्वारोदिवसाःसौम्यकार्यंपौरजनस्यच ॥ अकुर्वाणस्यसौमित्रेतन्मेमर्माणिकृंतति ॥ ४ ॥ आहूयंतांप्रकृतयःपुरोधामंत्रिणस्तथा ॥ कार्यार्थिनश्चपुरुषाःस्त्रियोवापुरुषर्षभ ॥ ५ ॥ पौरकार्याणियोराजानकरोतिदिनेदिने ॥ संवृतेनरकेघोरेपतितोनात्रसंशयः ॥ ६ ॥ श्रूयतेहिपुराराजानृगोनाममहायशाः ॥ बभूवपृथिवीपालोब्रह्मण्यःसत्यवाक्शुचिः ॥ ७ ॥ सकदाचिद्गवांकोटीःसवत्साःस्वर्णभूषिताः ॥ नृदेवोभूमिदेवेभ्यःपुष्करेषुददौनृपः ॥ ८ ॥ ततःसंगाद्गताधेनुःसवत्सास्पर्शिताऽनघ ॥ ब्राह्मणस्याहिताग्नेस्तुदरिद्रस्योंछवर्तिनः ॥ ९ ॥

अथरामेणलक्ष्मणोक्तस्यौचित्यप्रदर्शनायप्रजारक्षणस्यावश्यकत्वबोधनंप्रजाकृत्यावेक्षणफलकप्रजाह्वानायलक्ष्मणप्रेषणंच लक्ष्मणस्यत्विति परमाद्भुतंसर्वैक्षयांताइत्यादिवाक्यम ॥ १ ॥ २ ॥ ३ ॥ चत्वारोदिवसागताइतिशेषः तत्प्रजानुशासनम ॥ ४ ॥ स्त्रियोवा कार्यार्थिन्यइतिशेषः ॥ ५ ॥ संवृतेवायुस्पर्शहीने पतितःभवेदितिशेषः ॥ ६ ॥ ब्रह्मण्यःब्राह्मणभक्तः ॥ ७ ॥ पुष्करेषुपुष्करतीर्थेषु ॥ ८ ॥ संगाद्राजदानार्थंनीयमानबहुगोसंगात् स्पर्शिताब्राह्मणायदत्ता बहुदोहिनीतिपाठांतरं आहिताग्नेर्दरिद्रस्येत्यनेनाग्निहोत्रहविरर्थमपिधेन्वंतराभावउक्तः उंछःक्षेत्रपतितान्नस्यकणशआदानम ॥ ९ ॥

सनष्टगः ॥ १० ॥ जीर्णवत्सां संवत्सरगणान्बहूनित्युक्तेः ॥ ११ ॥ स्वकेनस्वकृतेन ॥ १२ ॥ १३ ॥ योपिनृगतोलब्धदानः तमृषिगवानुगम्यमानमृषिं कृतकर्तार्थौतु तमृषियस्यगेहेस्थितातं
त्वरन्सः कृतगवासेयोद्विजोनृगेणस्पर्शितादत्तेत्याचष्टेइत्यनुकर्षइतिव्याचख्यतुः ममनुभाति गवानुगमनादन्वेष्टृब्राह्मणीयत्वंसिद्धं नृगतोमयालब्धेतिपरेणसोभियुक्तोन्वगादित्यत्रकर्तुरेवगत्वेत्य
नकर्तृत्वप्रतीतिरक्षरस्वारस्यसिद्धत्वंचेति ॥ १४ ॥ १५ ॥ नृगशासनंराजसविधेप्रवेशनियोगे ॥ १६ ॥ १७ ॥ १८ ॥ कृकलीभूतःकृकलासीभूतः ॥ १९ ॥ एवंशापंदत्वासमनुतप्तचित्तौस्व

सनष्टांगांक्षुधार्तोवै अन्विषंस्तत्रतत्रह ॥ नापश्यत्सर्वराष्ट्रेषुसंवत्सरगणान्बहून् ॥ १० ॥ ततःकनखलंगत्वाजीर्णवत्सांनिरामयाम् ॥ ददर्शतांस्विकां
धेनुंब्राह्मणस्यनिवेशने ॥ ११ ॥ अथतांनामधेयेनस्वकेनोवाचब्राह्मणः ॥ आगच्छशबलेत्येवंसातुशुश्रावगौःस्वरम् ॥ १२ ॥ तस्यतंस्वरमाज्ञाय
क्षुधार्तस्यद्विजस्यवै ॥ अन्वगात्पृष्ठतःसागौर्गच्छंतंपावकोपमम् ॥ १३ ॥ योपिपालयतेविप्रःसोपिगामन्वगाद्द्रुतम् ॥ गत्वाचतमृषिंचष्टेममगौरि
तिसत्वरन् ॥ १४ ॥ स्पर्शितारराजसिंहेनममदत्तानृगेणह ॥ तयोर्ब्राह्मणयोर्वादोमहानासीद्विपश्चितोः ॥ १५ ॥ विवदंतौततोन्योन्यंदातारमभिज
ग्मतुः ॥ तौराजभवनद्वारिनप्राप्तौनृगशासनम् ॥ १६ ॥ अहोरात्राण्यनेकानिवसंतौक्रोधमीयतुः ॥ ऊचतुश्चमहात्मानौतावुभौद्विजसत्तमौ ॥ क्रु
द्धौपरमसंप्राप्तौवाक्यंघोराभिसंहतम् ॥ १७ ॥ अर्थिनांकार्यसिद्ध्यर्थंयस्मात्त्वंनैपिदर्शनम् ॥ अदृश्यःसर्वभूतानांकृकलासोभविष्यसि ॥ १८ ॥ बहु
वर्षसहस्राणिबहुवर्षशतानिच ॥ श्वभ्रेत्वंकृकलीभूतोदीर्घकालंनिवत्स्यसि ॥ १९ ॥ उत्पत्स्यतेहिलोकेस्मिन्यदूनांकीर्तिवर्धनः ॥ वासुदेवइतिख्यातो
विष्णुःपुरुषविग्रहः ॥ २० ॥ सतेमोक्षयिताशापाद्राजंस्तस्माद्भविष्यसि ॥ कृताचतेनकालेननिष्कृतिस्तेभविष्यति ॥ २१ ॥ भारावतरणार्थंहिनर
नारायणावुभौ ॥ उत्पत्स्येतेमहावीर्यौकलौयुगउपस्थिते ॥ २२ ॥ एवंतौशापमुत्सृज्यब्राह्मणौविगतज्वरौ ॥ तांगांहिदुर्बलांवृद्धांददतुर्ब्राह्मणायवै
॥ २३ ॥ एवंसराजातंशापमुपभुंक्तेसुदारुणम् ॥ कार्यार्थिनांविमर्दोहिराज्ञांदोषायकल्पते ॥ २४ ॥

यमेवशापावसानंचकतुरित्याहोत्पत्स्यतइति वासुदेवःवसुदेवापत्यं यद्वा सर्वभूतेषुवासाद्वासुःसचासौदेवः पुरुषविग्रहःपुरुषशरीरसदृशशरीरः ॥ २० ॥ सतेत्वांशापान्मोक्षयिता हेराजंस्तस्माच्च
त्वंत्तविष्यसिकृकलासइतिशेषः तेनकालेनकृष्णावतारावधिकालेन नाल्पेनेत्यर्थः निष्कृतिःशापमोक्षः ॥ २१ ॥ तंकालमाह भारेति कलौ यत्किंचिच्चतुर्युगीस्थेकलावित्यर्थः ॥ २२ ॥
ब्राह्मणाय अन्यस्मैइतिशेषः ॥ २३ ॥ नृगवच्छीघ्रंप्रजागुणदोषाविचारेराज्ञांदोषइत्याह कार्यार्थिनामिति विमर्दःकलहः राज्ञांप्रजानांन्यायान्यायविचारमकुर्वताम् ॥ २४ ॥

अभिवर्ततुअभिवर्तयंतु मत्संममकार्यिणःप्रजाःअधिकारिणश्च ननुनृगस्याप्येवमवस्थाचेत्‌अलंसुकृतकर्मणेतिशंकावंतंलक्ष्मणंलक्षयित्वाह सुकृतस्येति कार्यस्यकर्तव्यस्य सुकृतस्यप्रजापालनधर्मस्यफलंपार्थिवोनावैति काकुः प्राप्नोत्येवेत्यर्थः ॥ २५ ॥ कार्यवान्‌जनःकआयातितत्प्रतीक्षस्व द्वारिस्थित्वेतिशेषः ॥ २६ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेत्रिपंचाशःसर्गः ॥ ५३ ॥ ॥ ७ ॥ ॥ अथलक्ष्मणेनविशिष्यनृगवृत्तांतप्रश्नेतदुत्तरं रामस्येति ॥ १ ॥ ईदृशःशापोदत्तइतिशेषः ॥ २ ॥ पापसंयुक्तं

तच्छीघ्रंदर्शनंमत्यमभिवर्ततुकार्यिणः॥ सुकृतस्यहिकार्यस्यफलंनावैतिपार्थिवः ॥ २५ ॥ तस्माद्गच्छप्रतीक्षस्वसौमित्रेकार्यवान्‌जनः ॥ २६ ॥
इत्यार्षेश्रीम० वा० आ० उत्तरकांडेत्रिपंचाशःसर्गः॥ ५३ ॥ ॥ ७ ॥ ॥ रामस्यभाषितंश्रुत्वालक्ष्मणःपरमार्थवित्‌॥ उवाचप्रांजलिर्वाक्यंराघवंदीप्ततेजसम्‌ ॥ १ ॥ अल्पापराधेकाकुत्स्थद्विजाभ्यांशापईदृशः॥ महान्नृगस्यराजर्षेर्यमदंडइवापरः ॥ २ ॥ श्रुत्वातुपापसंयुक्तमात्मानंपुरुषर्षभ ॥ किमुवाचनृगोराजाद्विजौक्रोधसमन्वितौ ॥ ३॥ लक्ष्मणेनैवमुक्तस्तुराघवःपुनरब्रवीत्‌॥ शृणुसौम्ययथापूर्वंसराजाशापविक्षतः॥ ४ ॥ अथाध्वनिगतौविप्रौविज्ञायसनृपस्तदा॥ आहूयमंत्रिणःसर्वान्नैगमान्सपुरोधसः ॥ ५ ॥ तानुवाचनृगोराजासर्वाश्चप्रकृतीस्तथा॥ दुःखेनसुसमाविष्टःश्रूयतांमेसमाहिताः॥ ६ ॥ नारदःपर्वतश्चैवममदत्वामहद्भयम्‌॥ गतौत्रिभुवनंभद्रौवायुभूतावनिंदितौ ॥ ७॥ कुमारोयंवसुर्नामसचेहाद्याभिषिच्यताम्‌॥श्वभ्रंचयत्सुखस्पर्शंक्रियतांशिल्पिभिर्मम॥ ८ ॥ यत्राहंसंक्षयिष्यामिशापंब्राह्मणनिःसृतम्‌॥ वर्षघ्नमेकंश्वभ्रंतुहिमघ्नमपरंतथा॥ ९ ॥ ग्रीष्मघ्नंतुसुखस्पर्शमेकंकुर्वंतुशिल्पिनः॥ फलवंतश्चयेवृक्षाःपुष्पवत्यश्चयालताः ॥ १० ॥ विरोप्यंतांबहुविधाश्छायावंतश्चगुल्मिनः ॥ क्रियतांरमणीयंचश्वभ्राणांसर्वतोदिशम्‌॥ ११ ॥

शापरूपपापसंयुक्तम्‌ ॥ ३ ॥ शापविक्षतःसराजायथापूर्वमुवाचतद्वक्ष्यामिशृण्विति संबंधः ॥४॥ द्विजौप्रतिकिमुवाचेतिशंकायांतयोरदर्शनमेवाभूदित्याहाथेति ॥ अध्वनिव्योमाध्वनिगतौतौविज्ञाय ध्यानेनामुकाविति ज्ञात्वेत्यर्थः नैगमाःपौराः ॥५॥ श्रूयतांमेवचनमितिशेषः ॥६॥ नारदपर्वतौमुनीयदृच्छयासमागत्यद्विजेंद्रप्रयुक्तस्यशापस्यनिवेदनेनममहद्भयंदत्वाउत्क्रात्रिभुवनंतृतीयंभुवनंब्रह्मलोकंगतौवायुभूतौवायुवदतिवेगौ यद्वा तौब्राह्मणावेतौतत्संज्ञौ तत्प्रयुक्तशापज्ञानंचराज्ञोध्यानेनेतिबोध्यम्‌ ॥ ७ ॥ श्वभ्रंगर्तः ॥ ८ ॥ ९ ॥ १० ॥ गुल्मिनःकक्षवृक्षाः ॥ ११ ॥

अध्यर्धयोजनंपरिवार्ययथापुष्पाणिस्युस्तथाक्रियतामित्यन्वयः ॥ १२ ॥ १३ ॥ हेपुत्रधर्मनित्योभूत्वाप्रजाःक्षत्रधर्मेणपालयेत्यादेरेवमुक्त्वेत्यनेनअष्टादशश्लोकस्थप्रथमपादेनसंबंधः ॥ १४ ॥ तादृशेपिअल्पेपि ॥ १५ ॥ कृतांतःप्राचीनकर्म कुशलःसुखदुःखप्रापणप्रभुःव्यसनीव्यसनवान् प्राप्तव्यानिप्राप्नोत्येवेत्यपियोजना ॥ प्राप्तव्यानिएकत्रस्थलेएवतिष्ठतोयत्नंविनाप्राप्याणि गंतव्यानिस्वयमन्यत्रगत्वाप्राप्याणि ॥ १६ ॥ लब्धव्यानिस्थलेएवतिष्ठतोयत्नलभ्यानि पूर्वेजात्यंतरे संपादितकारणानीतिशेषः सुखानिदुःखानिप्राप्तव्यादीनिप्राप्नोतीत्यर्थः अने

सुखमत्रवसिप्यामियावत्कालस्यपर्ययः॥ पुष्पाणिचसुगंधीनिक्रियतांतेपुनित्यशः॥ १२ ॥ परिवार्ययथामेस्युरध्यर्धयोजनंतथा॥ एवंकृत्वाविधानंससन्निवेश्यवसुंतदा ॥ १३॥ धर्मनित्यःप्रजाःपुत्रक्षत्रधर्मेणपालय ॥ प्रत्यक्षंतेयथाशापोद्विजाभ्यांमयिपातितः ॥ १४ ॥ नरश्रेष्ठसरोषाभ्यामपराधेपितादृशे॥ माकृथास्त्वनुसंतापंमत्कृतेहिनरर्षभ॥ १५ ॥ कृतांतःकुशलःपुत्रयेनास्मिव्यसनीकृतः ॥ प्राप्तव्यान्येवप्राप्नोतिगंतव्यान्येवगच्छति॥१६॥ लब्धव्यान्येवलभतेदुःखानिचसुखानिच॥ पूर्वेजात्यंतरेवत्समाविपादंकुरुष्वह॥१७॥ एवमुक्त्वानृपस्तत्रसुतंराजामहायशाः॥ श्वभ्रंजगामसुकृतंवासायपुरुषर्षभ ॥ १८ ॥ एवंप्रविश्यैवनृपस्तदानींश्वभ्रंमहद्रत्नविभूषितंतत् ॥ संपादयामासतदामहात्माशापंद्विजाभ्यांहिरुषाविमुक्तम् ॥ १९ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेचतुःपंचाशःसर्गः॥ ५४ ॥ ॥७॥ ॥ एषतेनृपशापस्यविस्तरोभिहितोमया॥ यद्यस्तिश्रवणेश्रद्धाशृणुष्वेहापरांकथाम् ॥ १ ॥ एवमुक्तस्तुरामेणसौमित्रिःपुनरब्रवीत्॥ तृप्तिराश्चर्यभूतानांकथानांनास्तिमेनृप ॥ २ ॥ लक्ष्मणेनैवमुक्तस्तुरामइक्ष्वाकुनंदनः॥ कथांपरमधर्मिष्ठांव्याहर्तुमुपचक्रमे॥ ३ ॥ आसीद्राजानिमिर्नामइक्ष्वाकूणांमहात्मनाम्॥ पुत्रोद्वादशमोवीर्येधर्मेचपरिनिष्ठितः॥ ४ ॥ सराजावीर्यसंपन्नःपुरंदेवपुरोपमम्॥ निवेशयामासतदाअभ्याशेगौतमस्यतु॥ ५ ॥

नदुःखाद्यनुभवेनान्योमूलंकिंतुस्वकृतकर्मैवेत्युक्तम् ॥ १७ ॥ सुकृतंसुष्ठुकृतम् ॥ १८ ॥ संपादयामाससंपादयांचकार अनुभवतिस्मेत्यर्थः ॥ १९ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेचतुःपंचाशःसर्गः ॥ ५४ ॥ ॥७॥ ॥ अथरामेणपुनर्ब्राह्मणापराधेनशापप्राप्तिकथाभाषणं एषतेइति इहराज्ञामपराधविषये ॥१॥ कथानां श्रवणेइतिशेषः ॥ २ ॥ ३ ॥ इक्ष्वाकूणांइक्ष्वाकुपुत्राणां द्वादशमःद्वादशसंख्यापूरणःसंख्यादेरपिमडार्षः ॥ ४ ॥ गौतमस्यअभ्याशेगौतमाश्रमसमीपे ॥ ५ ॥

सुकृतंसुष्ठुकृतंनिवेशंवासंयत्रचक्रेतस्यपुरस्येत्यन्वयः ॥ ६ ॥ पितुरिक्ष्वाकोः दीर्घसत्रंबहुकालसाध्योबहुयजमानकःसत्राख्योयागः ॥ ७ ॥ पूर्वंवसिष्ठवरणंततोऽन्यादिवरणम् ॥ ८ ॥ ९ ॥
अंतरंप्रतिपालयइंद्रयागसमाप्तिपर्यंतावकाशंप्रतिपालयप्रतीक्षस्व इंद्रंयाजयित्वात्वांयाजयिष्यइतिभावः देवानामपियज्ञाधिकारःप्राङ्निरूपितः ॥ १० ॥ अनंतरंवसिष्ठगमनानंतरं गौतमः

पुरस्यसुकृतंनामवैजयंतमितिश्रुतम् ॥ निवेशंयत्रराजर्षिर्निमिश्चक्रेमहायशाः ॥ ६ ॥ तस्यबुद्धिःसमुत्पन्नानिवेश्यसुमहापुरम् ॥ यजेयंदीर्घसत्रेणपितुःप्रल्हादयन्मनः ॥ ७ ॥ ततःपितरमामंत्र्यइक्ष्वाकुंहिमनोःसुतम् ॥ वसिष्ठंवरयामासपूर्वंब्रह्मर्षिसत्तमम् ॥ ८ ॥ अनंतरंसराजर्षिर्निमिरिक्ष्वाकुनंदनः ॥ अत्रिमंगिरसंचैवभृगुंचैवतपोनिधिम् ॥ ९ ॥ तमुवाचवसिष्ठस्तुनिमिंराजर्षिसत्तमम् ॥ वृतोहंपूर्वमिंद्रेणअंतरंप्रतिपालय ॥ १० ॥ अनंतरंमहाविप्रोगौतमःप्रत्यपूरयत् ॥ वसिष्ठोपिमहातेजाइंद्रयज्ञमथाकरोत् ॥ ११ ॥ निमिस्तुराजाविप्रांस्तान्समानीयनराधिपः ॥ अयजद्धिमवत्पार्श्वेस्वपुरस्यसमीपतः ॥ १२ ॥ पंचवर्षसहस्राणिराजादीक्षामथाकरोत् ॥ इंद्रयज्ञावसानेतुवसिष्ठोभगवानृषिः ॥ १३ ॥ सकाशमागतोराज्ञोहौत्रंकर्तुमनिंदितः ॥ तदंतरमथापश्यद्गौतमेनाभिपूरितम् ॥ १४ ॥ कोपेनमहताविष्टोवसिष्ठोब्रह्मणःसुतः ॥ सराज्ञोदर्शनाकांक्षीमुहूर्तंसमुपाविशत् ॥ तस्मिन्नहनिराजर्षिर्निद्रयापहृतोभृशम् ॥ १५ ॥ ततोमन्युर्वसिष्ठस्यप्रादुरासीन्महात्मनः ॥ अदर्शनेनराजर्षेर्व्याहर्तुमुपचक्रमे ॥ १६ ॥ यस्मात्त्वमन्यंवृतवान्मामवज्ञायपार्थिव ॥ चेतनेनविनाभूतोदेहस्तेपार्थिवैष्यति ॥ १७ ॥ ततःप्रबुद्धोराजातुश्रुत्वाशापमुदाहृतम् ॥ ब्रह्मयोनिमथोवाचसराजाक्रोधमूर्छितः ॥ १८ ॥ अजानतःशयानस्यक्रोधेनकलुषीकृतः ॥ उक्तवान्ममशापाग्निंयमदंडमिवापरम् ॥ १९ ॥ तस्मात्तवापिब्रह्मर्षेचेतनेनविनाकृतः ॥ देहःसुसुचिरप्रख्योभविष्यतिनसंशयः ॥ २० ॥

प्रत्यपूरयद्वसिष्ठकर्तव्यंहौत्रार्त्विज्यं राज्ञइतिशेषः ॥ ११ ॥ तान्विप्रानत्र्यादीनित्यर्थः ॥ १२ ॥ १३ ॥ तदंतरंवसिष्ठेनप्रतीक्षणीयमित्युक्तमवकाशंगौतमेनपूरितमपश्यत् कर्तव्यमार्त्विज्यंगौतमेनक्रियमाणमपश्यदित्यर्थः ॥ १४ ॥ निद्रयापहृतःअसमानेएवसत्रेइतिभावः ॥ १५ ॥ १६ ॥ मामवज्ञायेत्यस्यस्वपिषिचेतिशेषः चेतनेनविनाभूतः मृतइत्यर्थः एष्यतिभविष्यति ॥ १७ ॥
॥ १८ ॥ १९ ॥ चेतनेनविनाकृतोमृतः सुचिराप्रख्याशोभायस्यसः ॥ २० ॥

तदितिब्रह्मनाम ब्रह्मणस्तुल्यंतुल्यतयाअधिगतःप्राप्तोयःप्रभावस्तद्वंतौ ब्रह्मतुल्यप्रभावावितियावत् ॥ २१ ॥ ॥ इतिश्रीरामाभि॰श्रीरा॰रा॰वा॰आ॰उत्तरकांडेपंचपंचाशःसर्गः ॥ ५५ ॥
अयत्यक्तदेहयोःपुनर्देहप्राप्तिप्रश्नोत्तरे रामस्येति ॥ १ ॥ देवसंमतौदेवपूजितौ ॥ २ ॥ ३ ॥ ४ ॥ अन्यस्यशरीरस्यकृतेअन्यस्थूलशरीरप्राप्तिनिमित्तम् ॥ ५ ॥ अभिवाद्य अभिवादनादिअश
रीरस्यापितपःप्रभावाल्लिंगदेहेनोपपन्नम् ॥ ६ ॥ उपागमंप्राप्तः ॥ ७ ॥ महद्दुःखस्यभविष्यत्त्वेसर्वकार्यविलोपः सर्वकार्याणिऐहिकामुष्मिकसर्वप्रयोजनानि ॥८ ॥ सद्भावेप्राप्तौ ॥ ९ ॥ मित्रा

इतिरोषवशादुभौतदानीमन्योन्यंशपितौनृपद्विजेंद्रौ ॥ सहसैवबभूवतुर्विदेहौतत्तुल्याधिगतप्रभाववंतौ ॥ २१ ॥ ॥ इत्यार्षेश्रीम॰वा॰आ॰उत्तरकांडेपंचपंचाशःसर्गः ॥ ५५ ॥ ॥ ७ ॥ ॥ रामस्यभाषितंश्रुत्वालक्ष्मणःपरवीरहा ॥ उवाचप्रांजलिर्भूत्वाराघवंदीप्ततेजसम् ॥ १ ॥ निक्षिप्यदेहौकाकुत्स्थकथंतौद्विजपार्थिवौ ॥ पुनर्देहेनसंयोगंजग्मतुर्देवसंमतौ ॥ २ ॥ लक्ष्मणेनैवमुक्तस्तुरामइक्ष्वाकुनंदनः ॥ प्रत्युवाचमहातेजालक्ष्मणंपुरुषर्षभः ॥ ३ ॥ तौपरस्परशापेनदेहमुत्सृज्यधार्मिकौ ॥ अभूतांनृपविप्रर्षीवायुभूतौतपोधनौ ॥ ४ ॥ अशरीरःशरीरस्यकृतेन्यस्यमहामुनिः ॥ वसिष्ठस्तुमहातेजाजगामपितुरंतिकम् ॥ ५ ॥ सोभिवाद्यततःपादौदेवदेवस्यधर्मवित् ॥ पितामहमथोवाचवायुभूतइदंवचः ॥ ६ ॥ भगवन्निमिशापेनविदेहत्वमुपागमम् ॥ देवदेवमहादेववायुभूतोहमंडज ॥ ७ ॥ सर्वेषांदेहहीनानांमहद्दुःखंभविष्यति ॥ लुप्यंतेसर्वकार्याणिहीनदेहस्यवैप्रभो ॥ ८ ॥ देहस्यान्यस्यसद्भावेप्रसादंकर्तुमर्हसि ॥ तमुवाचततोब्रह्मास्वयंभूरमितप्रभः ॥ ९ ॥ मित्रावरुणजंतेजआविशत्वंमहायशः ॥ अयोनिजस्त्वंभवितातत्रापिद्विजसत्तम ॥ धर्मेणमहतायुक्तःपुनरेष्यसिमेवशम् ॥ १० ॥ एवमुक्तस्तुदेवेनअभिवाद्यप्रदक्षिणम् ॥ कृत्वापितामहंतूर्णंप्रययौवरुणालयम् ॥ ११ ॥ तमेवकालंमित्रोपिवरुणत्वमकारयत् ॥ क्षीरोदेनसहोपेतःपूज्यमानःसुरेश्वरैः ॥ १२ ॥

वरुणजंतद्विसृष्टम् तत्रापिमित्रावरुणरेतःप्रवेशेपि मेवशंमत्पुत्रत्वेनपूर्ववत्प्रजापतित्वमपिप्राप्स्यसीतिभावः ॥ १० ॥ वरुणालयंसमुद्रम् ॥ ११ ॥ तमेवकालंतस्मिन्नेवकालेवसिष्ठागमनकाले
मित्रःपुषार्यमादिवत्सूर्यमंडलस्थमूर्तिभेदः सुरेश्वरैःपूज्यमानःसन्क्षीरोदेनक्षीरोदात्मकेनवरुणेनोपेतःसन्वरुणत्वंवरुणतादात्म्यमकारयद्भावयतिस्म यद्वा मित्रोपिवरुणत्वंवरुणाधिकारमकरोदि
त्यर्थः एवंचमित्रतादात्म्यापन्नेनवरुणेनविसृष्टत्वात्वरुणरेतोविसर्गस्यापिपूर्वंमित्रदृष्टतोर्वशीनिमित्तत्वाच्चवरुणरेतोपिमित्रावरुणरेतोभवतीतिमित्रावरुणजंतेजआविवेशेत्यनेननविरोधः ॥१२॥

एतस्मिन्नेवकालेवरुणात्मनामित्रावस्थानकाले ॥ १३ ॥ वरुणालयेक्षीरोदे ॥ १४ ॥ १५ ॥ १६ ॥ इदंतेजःतद्दर्शनक्षुभितवीर्यरूपं देवनिर्मितेकुंभेपुत्रोत्पत्तिसमर्थतयाब्रह्मसृष्टे ॥ १७ ॥
त्वयि त्वन्निमित्तमित्यर्थः कृतकामःकृतकामभोगः ॥ १८ ॥ १९ ॥ कामंअधिकं मेत्हृदयंचित्तंत्वयिस्थितं तुभ्यंतवचभावोधिकंमयिस्थितोऽतएतदेवंभवतुकुंभेवीर्योत्सर्गोभवतु हेप्रभोदेहस्तु

एतस्मिन्नेवकालेतुउर्वशीपरमाप्सरा ॥ यदृच्छयातमुद्देशमागतासखिभिर्वृता ॥ १३ ॥ तांदृष्ट्वारूपसंपन्नांक्रीडंतींवरुणालये ॥ तदाविशत्परोहर्षो वरुणंचोर्वशीकृते ॥ १४ ॥ सतांपद्मपलाशाक्षींपूर्णचंद्रनिभाननां ॥ वरुणोवरयामासमैथुनायाप्सरोवराम् ॥ १५ ॥ प्रत्युवाचततःसातुवरुणंप्रांजलिःस्थिता ॥ मित्रेणाहंवृतासाक्षात्पूर्वमेवसुरेश्वर ॥ १६ ॥ वरुणस्त्वब्रवीद्वाक्यंकंदर्पशरपीडितः ॥ इदंतेजःसमुत्स्रक्ष्येकुंभेऽस्मिन्देवनिर्मिते ॥ १७ ॥ एवमुत्सृज्यसुश्रोणित्वय्यहंवरवर्णिनि ॥ कृतकामोभविष्यामियदिनेच्छसिसंगमम् ॥ १८ ॥ तस्यतल्लोकनाथस्यवरुणस्यसुभाषितम् ॥ उर्वशीपरमप्रीताश्रुत्वावाक्यमुवाचह ॥ १९ ॥ काममेतद्भवत्वेवंहृदयंमेत्वयिस्थितम् ॥ भावश्चाप्यधिकंतुभ्यंदेहोमित्रस्यतुप्रभो ॥ २० ॥ उर्वश्याएवमुक्तस्तुरेतस्तन्महदद्भुतम् ॥ ज्वलदग्निसमप्रख्यंतस्मिन्कुंभेन्यवासृजत् ॥ २१ ॥ उर्वशीत्वगमत्तत्रमित्रोवैयत्रदेवता ॥ तांतुमित्रःसुसंक्रुद्धउर्वशीमिदमब्रवीत् ॥ २२ ॥ मयाऽभिमंत्रितापूर्वंकस्मात्त्वमवसर्जिता ॥ पतिमन्यंवृतवतीकिमर्थंदुष्टचारिणि ॥ २३ ॥ अनेनदुष्कृतेनत्वंमत्क्रोधकलुषीकृता ॥ मनुष्यलोकमास्थायकंचित्कालंनिवत्स्यसि ॥ २४ ॥ बुधस्यपुत्रोराजर्षिःकाशिराजःपुरूरवाः ॥ तमभ्यागच्छदुर्बुद्धेसतेभर्ताभविष्यति ॥ २५ ॥ ततःसाशापदोषेणपुरूरवसमभ्यगात् ॥ प्रतिष्ठानेपुरूरवंबुधस्यात्मजमौरसम् ॥ २६ ॥ तस्यजज्ञेततःश्रीमानायुःपुत्रोमहाबलः ॥ नहुषोयस्यपुत्रस्तुबभूवेंद्रसमद्युतिः ॥ २७ ॥ वज्रमुत्सृज्यवृत्रायश्रांतेथत्रिदिवेश्वरे ॥ शतंवर्षसहस्राणियेनेंद्रत्वंप्रशासितम् ॥ २८ ॥ सातेनशापेनजगामभूमिंतदोर्वशीचारुदतीसुनेत्रा ॥ बहूनिवर्षाण्यवसच्चसुभ्रूःशापक्षयादिंद्रसदोययौच ॥ २९ ॥ ॥ इत्यार्षेश्रीम० वा० आ० उत्तरकांडेषट्पंचाशःसर्गः ॥ ५६ ॥

ममतूर्वंदेवस्याःमित्रस्यास्तु भावेनभोगस्त्वयासहममदेहेनभोगोमित्रेणास्त्वित्युक्तंभवति ॥ २० ॥ रेतस्तद्भावसंभोगक्षुभितम् ॥ २१ ॥ २२ ॥ अवसर्जिताविसृष्टवती मामितिशेषः ॥ २३ ॥ अनेनदुष्कृतेन एकंवृतिमंगीकृत्यतत्समयेद्वितीयवरणंसाधारणस्त्रीणामपिमहद्दुष्कृतमित्यनेनबोधितं मनुष्यलोकमास्थाय अनेनदेवरूपेणैवेतिशेषः ॥ २४ ॥ २५ ॥ पुरूरवंपुरूरवसम् ॥ २६ ॥ २७ ॥
॥ २८ ॥ २९ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेषट्पंचाशःसर्गः ॥ ५६ ॥ ॥छ॥ ॥

अथतद्धितस्तदेहत्वेतः सकाशाद्देहोत्पत्तिप्रकारकथनं तामिति दिव्यसंकाशांदिव्यरूपाम् ॥ १ ॥ निक्षिप्तदेहौविसृष्टदेहौपुनर्देहसंयोगंकथंजग्मतुः ॥ २ ॥ कुंभेवरुणेनरेतोविसर्गउक्तः तावतादेहसि द्धिप्रश्नोत्तरंनलब्धमितिपुनःप्रश्नः तांकथांवसिष्ठस्यदेहोत्पत्तिविषयामवशिष्टांकथाम् ॥ ३ ॥ महात्मनोर्मित्रावरुणयोस्तेजःपूर्णः अत्रैवमाख्यायिका प्रथममुर्वशींमित्रोदृष्ट्वातामामंत्रितवान् तयाचत्वन्निवासमागच्छामीत्युक्तस्तदावरुणलोकस्थएवमित्रस्तद्दर्शनाद्धठस्खलितंनिजतेजःकुंभेउत्सृज्यस्वंनिवासंजगाम पश्चाद्वरुणोपितांदृष्ट्वास्खलितंतेजःकुंभेव्यसृजत् ततोमित्रनिवा संगतामित्रेणशप्ताचेति ॥ ४ ॥ नाहंसुतस्तवेति यद्यपिमित्रेणापिकुंभेरेतउत्सृष्टंतथापितवैकस्यपुत्रोनभवामीत्युक्त्वाऽपाक्रमत् ॥ ५ ॥ एवमुक्तौबीजमाह तद्धितेजइति अगस्त्योत्पत्तिहेतुभूतं

तांश्रुत्वादिव्यसंकाशांकथामद्भुतदर्शनाम् ॥ लक्ष्मणःपरमप्रीतोराघवंवाक्यमब्रवीत् ॥ १ ॥ निक्षिप्तदेहौकाकुत्स्थकथंतौद्विजपार्थिवौ ॥ पुनर्देहेन संयोगंजग्मतुर्देवसंमतौ ॥ २ ॥ तस्यतद्भाषितंश्रुत्वारामःसत्यपराक्रमः ॥ तांकथांकथयामासवसिष्ठस्यमहात्मनः ॥ ३ ॥ यःसकुंभोरघुश्रेष्ठतेजः पूर्णोमहात्मनोः ॥ तस्मिंस्तेजोमयौविप्रौसंभूतावृषिसत्तमौ ॥ ४ ॥ पूर्वंसमभवत्तत्रअगस्त्योभगवानृषिः ॥ नाहंसुतस्तवेत्युक्त्वामित्रंतस्मादपाक्र मत् ॥ ५ ॥ तद्धितेजस्तुमित्रस्यउर्वश्यापूर्वमाहितम् ॥ तस्मिन्समभवत्कुंभेतत्तेजोयत्रवारुणम् ॥ ६ ॥ कस्यचित्त्वथकालस्यमित्रावरुणसंभवः ॥ वसिष्ठस्तेजसायुक्तोजज्ञेइक्ष्वाकुदैवतम् ॥ ७ ॥ तमिक्ष्वाकुर्महातेजाजातमात्रमनिंदितम् ॥ वव्रेपुरोधसंसौम्यवंशस्यास्यहितायनः ॥ ८ ॥ एवं त्वपूर्वदेहस्यवसिष्ठस्यमहात्मनः ॥ कथितोनिर्गमःसौम्यनिमेःशृणुयथाभवत् ॥ ९ ॥ दृष्ट्वाविदेहंराजानमृषयःसर्वएवते ॥ तंचतेयाजयामासुर्यज्ञदी क्षांमनीषिणः ॥ १० ॥ तंचदेहंनरेंद्रस्यरक्षंतिस्मद्विजोत्तमाः ॥ गंधैर्माल्यैश्चवस्त्रैश्चपौरभृत्यसमन्विताः ॥ ११ ॥ ततोयज्ञेसमाप्तेतुभृगुस्तत्रेदमब्रवी त् ॥ आनयिष्यामितेचेतस्तुष्टोस्मितवपार्थिव ॥ १२ ॥

मित्रस्यतेजः उर्वश्याःपूर्वमुर्वशीनिमित्तवरुणवीर्यविसर्गात्पूर्वमाहितं तस्मिन्कुंभेतस्मिन्नेवकुंभेवारुणंतेजःसमभवत्संगतमभवत् यत्रकुंभेतत्तेजःमित्रस्यतेजआसीत् अतस्तेजोंतरसंगताद्उत्पत्तेर्नै कस्यतवसुतइत्युक्तमगस्त्येन अतएवमैत्रावरुणिरित्यगस्त्यनाम ॥ ६ ॥ तदनंतरंकस्यचित्कालस्यमित्रावरुणसंभवः अत्रोपपत्तिरुक्ता वसिष्ठोजज्ञे तेजसायुक्तोमित्रावरुणयोर्दिव्यतेजसायुक्तः ॥ ७ ॥ ८ ॥ अपूर्वदेहस्यनूतनदेहवतोवसिष्ठस्यनिर्गमउत्पत्तिप्रकारः कथितः यथाभवद्वृत्तांतइतिशेषः ॥ ९ ॥ १० ॥ रक्षंतिस्मतैलकटाहेइतिशेषः ॥ ११ ॥ भृगुस्तत्रयज्ञसमाप्तिकालेइत्यर्थः इदंवक्ष्यमाणं हेपार्थिवपार्थिवदेहाभिमानिप्रत्यगात्मन् तवतुष्टोस्मिअतस्तेचेतोजीवंदेहेआनयिष्यामीत्यब्रवीत् ॥ १२ ॥

तथासुप्रीताःसर्वेसुराश्चनिमेश्चेतआनयिष्यामइत्यब्रुवन् हेराजन्वरंवरय तेचेतःक्वनिरूप्यतांस्थाप्यतामितिचाब्रुवन् ॥ १३ ॥ निमेश्चेतःचेतोभिमानीप्रत्यगात्माअब्रवीत् योगवशाल्लिंगदेहेनैवेति भावः किमब्रवीत्तदाह सर्वभूतानांनेत्रेषुदेहवर्तिसर्वस्थानेभ्यःसूर्यात्मकत्वेनप्रशस्ततयास्वैवैभवाद्युगपद्वसेयम ॥ १४ ॥ वायुभूतःवायुसदृशलघुभूतलिंगदेहाश्रितइत्यर्थः ॥ १५ ॥ निमिष्यंति निमेषधर्मंप्राप्स्यंति चक्षूंषिसर्वभूतानामितिशेषः वायुभूतेनचरतात्वयाकरणेनविश्रामार्थत्वसंबंधेनजायमानस्यखेदस्यापनोदार्थमित्यर्थः ॥ १६॥ १७॥ तत्रयज्ञभूमौअरणिंनिक्षिप्यनिमेर्देह

सुप्रीताश्चसुराःसर्वेनिमेश्चेतस्तदाब्रुवन् ॥ वरंवरयराजर्षेक्वतेचेतोनिरूप्यताम् ॥ १३ ॥ एवमुक्तःसुरैःसर्वैर्निमेश्चेतस्तदाब्रवीत् ॥ नेत्रेषुसर्वभूतानां वसेयंसुरसत्तमाः ॥ १४ ॥ बाढमित्येवविबुधानिमेश्चेतस्तदाब्रुवन् ॥ नेत्रेषुसर्वभूतानांवायुभूतश्चरिष्यसि ॥ १५ ॥ त्वत्कृतेचनिमिष्यंतिचक्षूंषिपृ थिवीपते ॥ वायुभूतेनचरताविश्रामार्थमुहुर्मुहुः ॥१६॥ एवमुक्त्वातुविबुधाःसर्वेजग्मुर्यथागतम् ॥ ऋषयोपिमहात्मानोनिमेर्देहंसमाहरन् ॥ १७॥ अरणिंतत्रनिक्षिप्यमथनंचक्रुरोजसा ॥ मंत्रहोमैर्महात्मानःपुत्रहेतोर्निमेस्तदा ॥ १८॥ अरण्यांमथ्यमानायांप्रादुर्भूतोमहातपाः ॥ मथनान्मिथि रित्याहुर्जननाज्जनकोभवत् ॥ १९ ॥ यस्माद्विदेहात्संभूतोवैदेहस्तुततःस्मृतः ॥ एवंविदेहराजश्चजनकःपूर्वकोभवत् ॥ मिथिर्नाममहातेजास्तेना यंमैथिलोभवत् ॥ २० ॥ इतिसर्वमशेषतोमयाकथितंसंभवकारणंतुसौम्य ॥ नृपपुंगवशापजंद्विजस्यद्विजशापाच्चयदद्भुतंनृपस्य ॥ २१ ॥ ॥ इ त्यार्षेश्रीम० वा० आ० उत्तरकांडेसप्तपंचाशःसर्गः ॥ ५७॥ ॥ ९ ॥ ॥ एवंब्रुवतिरामेतुलक्ष्मणःपरवीरहा ॥ प्रत्युवाचमहात्मानंज्वलंतमिवते जसा ॥ १ ॥ महदद्भुतमाश्चर्यंविदेहस्यपुरातनम् ॥ निर्वृत्तंराजशार्दूलवसिष्ठस्यमुनेश्चह ॥ २ ॥ निमिस्तुक्षत्रियःशूरोविशेषेणचदीक्षितः ॥ नक्षमं कृतवान्राजावसिष्ठस्यमहात्मनः ॥ ३ ॥ एवमुक्तस्तुतेनायंरामःक्षत्रियपुंगवः ॥ उवाचलक्ष्मणंवाक्यंसर्वशास्त्रविशारदम् ॥ ४ ॥ रामोरमयतांश्रे ष्ठोभ्रातरंदीप्ततेजसम् ॥ नसर्वत्रक्षमावीरपुरुषेषुप्रदृश्यते ॥ ५ ॥

मेवारणिंकृत्वा मंत्रहोमैः पुत्रीयमंत्रपूर्वकहोमैः ॥ १८ ॥ १९ ॥ विदेहाद्विगतचेतोदेहात् अयंजनकवंशः ॥ २० ॥ २१ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकी येआदिकाव्येउत्तरकांडेसप्तपंचाशःसर्गः ॥ ५७ ॥ ॥ ९ ॥ ॥ अथलक्ष्मणस्यब्राह्मणंप्रतिशापायुक्तत्वशंकायांतादृशक्षमाशीलाअपिसंतीत्याहप्रसंगाद्रामः एवंब्रुवतीति ॥ १ ॥ महदिति मुनेर्वसिष्ठस्यमुनेःसहप्रसंगइतिशेषः ॥ २ ॥ नक्षमंकृतवान् अनुचितमेवकृतवानित्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥

सत्वानुगंसत्वगुणानुगतं मार्गमितिशेषः पुरस्कृत्यावलंब्यतंप्रकारंनिबोध ॥ ६ ॥ पौरान्वर्धयतीतिपौरवर्धनः ॥ ७ ॥ पुरस्कृतापूजिता दैतेयीदितेःपौत्री ॥ ८ ॥ अन्यातूशनसःसुताययातेःप
नीदेवयानीसातुनदयितानेष्टा ॥ ९ ॥ १० ॥ मातृकृतेनराजप्रियमातृत्वेनेतिशेषः ॥ ११ ॥ १२ ॥ १३ ॥ मामनुज्ञातुमर्हसि अग्निप्रवेशार्थमितिशेषः ॥ १४ ॥ १५ ॥ इंगितमितिपाठेसखे

सौमित्रेदुःसहोरोषोयथाक्षांतोययातिना ॥ सत्वानुगंपुरस्कृत्यतन्निबोधसमाहितः ॥ ६ ॥ नहुषस्यसुतोराजाययातिःपौरवर्धनः ॥ तस्यभार्याद्वयं सौम्यरूपेणाप्रतिमंभुवि ॥ ७ ॥ एकातुतस्यराजर्षेर्नाहुषस्यपुरस्कृता ॥ शर्मिष्ठानामदैतेयीदुहितावृषपर्वणः ॥ ८ ॥ अन्यातूशनसःपत्नीययातेःपुरुषर्षभ ॥ नतुसादयिताराज्ञोदेवयानीसुमध्यमा ॥ ९ ॥ तयोःपुत्रौतुसंभूतौरूपवंतौसमाहितौ ॥ शर्मिष्ठाऽजनयत्पूरुंदेवयानीयदुंतदा ॥ १० ॥ पूरुस्तुदयितोराज्ञोगुणैर्मातृकृतेनच ॥ ततोदुःखसमाविष्टोयदुर्मातरमब्रवीत् ॥ ११ ॥ भार्गवस्यकुलेजातादेवस्याक्लिष्टकर्मणः ॥ सहसेत्द्धृतंदुःखमवमानंचदुःसहम् ॥ १२ ॥ आवांचसहितौदेविप्रविशावहुताशनम् ॥ राजातुरमतांसार्धंदैत्यपुत्र्याबहुक्षपाः ॥ १३ ॥ यदिवासहनीयंतेमामनुज्ञातुमर्हसि ॥ क्षमत्वंनक्षमिष्येहंमरिष्यामिनसंशयः ॥ १४ ॥ पुत्रस्यभाषितंश्रुत्वापरमार्तस्यरोदतः ॥ देवयानीतुसंक्रुद्धासस्मारपितरंतदा ॥ १५ ॥ इंगितंतदभिज्ञायदुहितुर्भार्गवस्तदा ॥ आगतस्त्वरितंतत्रदेवयानीस्मयत्रसा ॥ १६ ॥ दृष्ट्वाचाप्रकृतिस्थांतामप्रहृष्टामचेतनाम् ॥ पितादुहितरंवाक्यंकिमेतदितिचाब्रवीत् ॥ १७ ॥ पृच्छंतमसकृत्तंवैभार्गवंदीप्तचेतसम् ॥ देवयानीतुसंक्रुद्धापितरंवाक्यमब्रवीत् ॥ १८ ॥ अहमग्निंविषंतीक्ष्णमपोवामुनिसत्तम ॥ भक्षयिष्येप्रवेक्ष्येवानतुशक्ष्यामिजीवितुम् ॥ १९ ॥ नमांत्वमवजानीषेदुःखितामवमानिताम् ॥ वृक्षस्यावज्ञयाब्रह्मंश्छिद्यंतेवृक्षजीविनः ॥ २० ॥ अवज्ञयाचराजर्षिःपरिभूयचभार्गव ॥ मय्यवज्ञांप्रयुंक्तेहिनचमांबहुमन्यते ॥ २१ ॥

दरोपभावमित्यर्थः ईप्सितमिंगितमितिपाठांतरम् ॥ १६ ॥ अप्रकृतिस्थामस्वस्थां अप्रहृष्टांहर्षहीनांअचेतनांक्षुभितचित्ताम् ॥ १७ ॥ १८ ॥ १९ ॥ दुःखितामपमानितांमांत्वंनजानीषेनजानासि
अवप्रयोगोधात्वर्थमात्रेआर्षः इदंचमदवमाननंराज्ञस्त्वदवगणनमूलमेवेत्यन्यापदेशेनाह वृक्षस्येति वृक्षस्यावज्ञयात्रोटनादिलक्षणयावृक्षजीविनःवृक्षाश्रितपुष्पपत्रादयश्छिद्यंतेनाश्यंते ॥ २० ॥
प्रकृतेंकितत्राह हेभार्गवराजर्षिस्त्वय्यवज्ञयाहेतुभूतयामांपरिभूयमय्यवज्ञांप्रयुंक्ते ॥ २१ ॥

तमिति वसिष्ठःभरतागमनंश्रुत्वाआगतइतिशेषः ॥ १ ॥ संयानंप्रेतनिर्हारम् ॥ २ ॥ धरणींगतःवसिष्ठंसाष्टांगंनमस्कृत्वेत्यर्थः धारणांगतइतिपाठेधैर्यंप्राप्तइत्यर्थः कारयामासतत्करणार्थंमंत्रि
णःप्रेरयामासेत्यर्थः ॥ ३ ॥ बहुदिवसतैलावस्थानोपाधिनाआपीतवर्णंवदनंयस्यतम् ॥ ४ ॥ दशरथमिति उद्दिश्येतिशेषः ॥ ५ ॥ व्यवसितंमनीषितं प्रोषितेदेशांतरगते ॥ ६ ॥ रामेणहीनमि
मंदुःखितंजनंहित्वाक्वयास्यसीत्यन्वयः ॥ ७ ॥ तेनत्वअस्मिन्पुरेअयोध्यायां योगक्षेमंप्रजानां अव्ययंपरित्यक्तदुःखपारवश्यंयथातथा स्वःस्वर्गं ॥ ८ ॥ ९ ॥ १० ॥ अविचारितंप्राचीनंवैभ

तमेवंशोकसंतप्तंभरतंकैकयीसुतम् ॥ उवाचवदतांश्रेष्ठोवसिष्ठःश्रेष्ठवागृषिः ॥ १ ॥ अलंशोकेनभद्रंतेराजपुत्रमहायशः ॥ प्राप्तकालंनरपतेःकुरुसं
यानमुत्तमम् ॥ २ ॥ वसिष्ठस्यवचःश्रुत्वाभरतोधरणींगतः ॥ प्रेतकृत्यानिसर्वाणिकारयामासधर्मवित् ॥ ३ ॥ उद्धृत्यतैलसंसेकात्सतुभूमौनिवेशित
म् ॥ आपीतवर्णवदनंप्रसुप्तमिवभूमिपम् ॥ ४ ॥ संवेश्यशयनेचाग्र्येनानारत्नपरिष्कृते ॥ ततोदशरथंपुत्रोविललापसुदुःखितः ॥ ५ ॥ किंतेव्यवसि
तंराजन्प्रोषितेमय्यनागते ॥ विवास्यरामंधर्मज्ञंलक्ष्मणंचमहाबलम् ॥ ६ ॥ क्वयास्यसेमहाराजहित्वेमंदुःखितंजनम् ॥ हीनंपुरुषसिंहेनरामेणाक्लि
ष्टकर्मणा ॥ ७ ॥ योगक्षेमंतुतेव्यग्रंकोस्मिन्कल्पयितापुरे ॥ त्वयिप्रयातेस्वस्तातरामेचवनमाश्रिते ॥ ८ ॥ विधवापृथिवीराजंस्त्वयाहीनानराजते ॥
हीनचंद्रेवरजनीनगरीप्रतिभातिमाम् ॥ ९ ॥ एवंविलपमानंतंभरतंदीनमानसम् ॥ अब्रवीद्वचनंभूयोवसिष्ठस्तुमहामुनिः ॥ १० ॥ प्रेतकार्याणियान्य
स्यकर्तव्यानिविशांपतेः ॥ तान्यव्यग्रंमहाबाहोक्रियतामविचारितम् ॥ ११ ॥ तथेतिभरतोवाक्यंवसिष्ठस्याभिपूज्यतत् ॥ ऋत्विक्पुरोहिताचार्यां
स्त्वरयामाससर्वशः ॥ १२ ॥ येत्वग्नयोनरेंद्रस्य अग्न्यगाराद्बहिष्कृताः ॥ ऋत्विग्भिर्याजकैश्चैवतेहूयंतेयथाविधि ॥ १३ ॥ शिबिकायामथारोप्यरा
जानं ॥ हतचेतनम् ॥ बाष्पकंठाविमनसस्तमूचुःपरिचारकाः ॥ १४ ॥ हिरण्यंचसुवर्णंचवासांसिविविधानिच ॥ प्रकिरंतोजनामार्गंनृपतेरग्रतोययुः
चंदनागुरुनिर्यासान्सरलंपद्मकंतथा ॥ देवदारूणिचाहृत्यक्षेपयंतितथापरे ॥ १६ ॥

मंत्रितैःशैक्ष्य यथातथा ॥ ११ ॥ के... याजककर्मणिदक्षाः पुरोहितःसर्वहितप्रवर्तकः तदुक्तम् मंत्रेचधर्मकृत्येचशांतिकर्मणिपौष्टिके अथर्वेयश्चकुशलःसस्याद्राजपुरोहितइति उपनी
...आचार्यः ॥ ... ...कृताःअंतःशवसत्त्वाद्बहिःप्रदेशेप्रतिष्ठापिताः याजकैरुपद्रष्टृभिः हूयंतेस्म ॥ १३ ॥ १४ ॥ हिरण्यं रजतं स्वर्णरजतपुष्पाणीतियावत् ॥ १५ ॥
॥ २१ ॥ देवदारुकाष्ठानि क्षेपयंतिचिताग्नावितिशेषः ॥ १६ ॥

ह्यंतदेकएवलभतामित्यर्थः प्रलंभेनवंचनयायोजयन् अप्रयच्छन्नितियावत् ॥ ५७ ॥ भक्त्याशिवविष्ण्वादिदेवताभक्त्या मार्गंतत्तदुपोद्बलकशैववैष्णवादिशास्त्रमा
सत्यायनेनेतिविवदमानेषुयत्पा मितिशेषः विवादंपश्यतःशृण्वतःपापंतेनपापेनसयुज्येतेत्यर्थः तस्यपापेनेतिपाठे तेषांयत्पापंतेनयस्यानुमतेगतस्तस्ययोगःसंबंधोभूयादित्यर्थः भावेचयु
र्नी अयंपरस्त्वयंनेतिसंरक्षार्ं॥ १ ॥शिनः यातुधानाभवंत्येवपिशाचाश्चनसंशयइतिशिवपुराणोक्तेः योब्रह्मविष्णुरुद्राणांभेदंयुक्तिनिवेशतः साधयेदुदरव्याधियुक्तोभवतिमानवइति
त्वोक्तेश्च अत्रविवदमानानांजयोपायंज्ञात्वातदकथयतःपापमितितीर्थव्याख्या द्वयोःसाम्यस्थापनपूर्वकंतेषांकलहशमनमकुर्वतःकलहप्रियस्ययत्पापमितिकतकव्याख्या॥५८॥

यिदूषकेपापंतथैवविषदायके॥ यत्तदेकःसलभतांयस्यार्योनुमतेगतः॥ ५६॥ तृषार्तंसतिपानीयेविप्रलंभेनयोजयन्॥ यत्पापंलभतेतत्स्याद्य
योनुमतेगतः॥ ५७॥ भक्त्याविवदमानेषुमार्गमाश्रित्यपश्यतः॥ तेनपापेनयुज्येतयस्यार्योनुमतेगतः॥ ५८॥ एवमाश्वासयन्नेवदुःखार्तोनुप
ातह॥ विहीनांपतिपुत्राभ्यांकौसल्यांपार्थिवात्मजः॥५९॥तदातंशपथैःकष्टैःशपमानमचेतनम्॥भरतंशोकसंतप्तंकौसल्यावाक्यमब्रवीत्॥६०॥
मदुःखमिदंपुत्रभूयःसमुपजायते॥ शपथैःशपमानोहिप्राणानुपरुणत्सिमे॥ ६१॥ दिष्ट्यानचलितोधर्मादात्मातेसहलक्ष्मणः॥ वत्ससत्यप्रतिज्ञो
हसतांल्लोकानवाप्स्यसि॥ ६२॥ इत्युक्त्वाचांकमानीयभरतंभ्रातृवत्सलम्॥ परिष्वज्यमहाबाहुंरुरोदभृशदुःखिता॥ ६३॥ एवंविलपमानस्यदुः
खार्तस्यमहात्मनः॥ मोहाच्चशोकसंरंभाद्बभूवलुलितंमनः॥ ६४॥ लालप्यमानस्यविचेतनस्यप्रनष्टबुद्धेःपतितस्यभूमौ॥ मुहुर्मुहुर्निःश्वसतश्चदी
र्घमातस्यशोकेनजगामरात्रिः॥ ६५॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येअयोध्याकांडेपंचसप्ततितमःसर्गः॥ ७५॥ ॥ ७५॥

॥ ५९ ॥ ६० ॥ भूयःअभ्यधिकंदुःखम् हियत्नुएवंकष्टैःशपथैःशपमानोमेप्राणानुपरुणत्सिपीडयसे ॥ ६१ ॥ अथविशुद्धभावंज्ञात्वानुगृह्णाति दिष्ट्येति आत्माअंतःकरणम् लक्षणैःशुभलक्ष
णैःसहितःसहलक्ष्मणस्तेआत्मेत्यर्थः हेवत्सहियदिसत्यप्रतिज्ञोभविष्यसितदासतांलोकानवाप्स्यसि कैकेय्यप्येकृतांरामानयनप्रतिज्ञांसत्यांकुर्वितिव्यंग्यम् ॥ ६२ ॥ एवमनुगृह्यपुत्रोचितकृत्ये
नाश्वासयतिइत्युक्त्वेति ॥ ६३ ॥ शोकसंरंभात्शोकाधिक्यात् ततएवमोहः विलुलितंक्षुभितम् ॥ ६४॥ दीर्घंयथाभवतितथारात्रिःरात्रिशेषः पाठांतरेघर्मंउष्णंयथाभवतितथा ॥ ६५ ॥ अत्रै
कश्लोकोधिकइतिकतकसंख्ययाज्ञायते ॥ ॥ इतिश्रीरामा०श्रीरामी०वा०आ०अयो०पंचसप्ततितमःसर्गः ॥ ७५ ॥ ॥ ७५ ॥ ॥ ७५ ॥

चीरंजीर्णमलिनवस्त्रं ब्रह्महाभवत्विति शेषः तादृशीनिषिद्धाचरणाप्रव्रज्याभवत्वितिवाभावः ॥ ४० ॥ ४१ ॥ अपात्रवर्षीअपात्रेदाता ॥ ४२ ॥ दस्युभिर्विप्रलुप्यंतां त्यागभोगविहीनानिभवं त्विति भावः ॥ ४३ ॥ उभेसंध्येव्याप्येतिशेषः ॥ ४४ ॥ ४५ ॥ देवतानामिति देवतादिशुश्रूषारहितस्ययत्पापंतत्पापंसप्रतिपद्यतामित्यर्थः ॥ ४६ ॥ सतांकीर्त्याःसद्भिःक्रियमाणश्लाघायाः भ श्यतु सामान्तस्येत्यर्थः ॥ ४७ ॥ अनर्थेस्त्रीवशत्वाद्यनर्थे ॥ ४८ ॥ समायात्प्राप्नुयात् ॥ ४९ ॥ अर्थिनामाशामितिसंबंधः आशंसमानानांस्तुवतां ऊर्ध्वचक्षुषांदातृमुखनिरीक्षकाणां ॥ ५० ॥



कपालपाणिःपृथिवीमटतांचीरसंवृतः ॥ भिक्षमाणोयथोन्मत्तोयस्यार्योनुमतेगतः ॥ ४० ॥ मद्यप्रसक्तोभवतुस्त्रीष्वक्षेषुचनित्यशः ॥ कामक्रोधा भिभूतश्चयस्यार्योनुमतेगतः ॥ ४१ ॥ मास्याधर्मेमनोभूयादधर्मंसनिषेवताम् ॥ अपात्रवर्षीभवतुयस्यार्योनुमतेगतः ॥ ४२ ॥ संचितान्यस्यवि त्तानिविविधानिसहस्रशः ॥ दस्युभिर्विप्रलुप्यंतांयस्यार्योनुमतेगतः ॥ ४३ ॥ उभेसंध्येशयानस्ययत्पापंपरिकल्प्यते ॥ तच्चपापंभवेत्तस्ययस्यार्यो नुमतेगतः ॥ ४४ ॥ यदग्निदायकेपापंयत्पापंगुरुतल्पगे ॥ मित्रद्रोहेचयत्पापंतत्पापंप्रतिपद्यताम् ॥ ४५ ॥ देवतानांपितॄणांचमातापित्रोस्तथैवच ॥ मास्मकार्षीत्सशुश्रूषांयस्यार्योनुमतेगतः ॥ ४६ ॥ सतांलोकात्सतांकीर्त्याःसज्जुष्टात्कर्मणस्तथा ॥ भ्रश्यतुक्षिप्रमद्यैवयस्यार्योनुमतेगतः ॥ ४७ ॥ अपास्यमातृशुश्रूषामनर्थेसोवतिष्ठताम् ॥ दीर्घबाहुर्महावक्षायस्यार्योनुमतेगतः ॥ ४८ ॥ बहुभृत्योदरिद्रश्चज्वररोगसमन्वितः ॥ समायात्सततं ज्यार्द्रोयस्यार्योनुमतेगतः ॥ ४९ ॥ आशामाशंसमानानांदीनानामूर्ध्वचक्षुषाम् ॥ अर्थिनांवितथांकुर्याद्यस्यार्योनुमतेगतः ॥ ५० ॥ माययारमतांनि त्यंपरुषःपिशुनोशुचिः ॥ राज्ञोभीतस्त्वधर्मात्मायस्यार्योनुमतेगतः ॥ ५१ ॥ ऋतुस्नातांसतींभार्यामृतुकालानुरोधिनीम् ॥ अतिवर्तेतदुष्टात्मायस्या र्यो॥ [illegible]मतेगतः ॥ ५२ ॥ विप्रलुप्तप्रजातस्यदुष्कृतंब्राह्मणस्ययत् ॥ तदेतत्प्रतिपद्येतयस्यार्योनुमतेगतः ॥ ५३ ॥ ब्राह्मणायोद्यतांपूजांविहंतुकलुषेंद्रियः ॥ अतिमात्रांचगांदोग्धुर्यस्यार्योनुमतेगतः ॥ ५४ ॥ धर्मदारान्परित्यज्यपरदारान्निषेवताम् ॥ त्यक्तधर्मरतिर्मूढोयस्यार्योनुमतेगतः ॥ ५५ ॥

या राज्ञोभीतइति भयका[illegible] त्वायेव ॥ ५१ ॥ ऋतुकालानुरोधिनींऋतुस्नानकालत्वात्स्वसन्निहिताम् ॥ ५२ ॥ विप्रलुप्तप्रयातस्यअन्नाद्यदानेनप्रनष्टसंतानस्य स्त्रीद्वेषाद्वा [illegible]पत्याजायायेनतस्य ॥ ५३ ॥ विहंतुविघ्नयतु बालवत्सांदोग्धुःशास्त्रोक्तदोहनाधिकंदोग्धुः ॥ ५[illegible]४ ॥ परदारान्निषेवतांयत्पापंतत्पापंप्रतिप

...शास्त्रंवेदः धीमताआचार्येणेतिशेषः ब्रह्मोज्झत्वरूपंपापंप्राप्नोत्वित्यर्थः ॥ २८ ॥ व्यूढ... बाहूअंसौचयस्यतंरामंराज्यस्थम् अतए
...हितोभवतुज्येष्ठानुवर्तनरहितोभवत्वित्यर्थः तावत्पर्यंतंजीवनंमाभूदितिवा ॥ २९ ॥ कृसरंतिलमुद्गतंडुलात्मकम् छागंछागमांसम् वृथाश्राद्धा
अश्नातु अशनजंपापंप्राप्नोतु... ॥ ३० ॥ गवामिति अंगमितिशेषः परिवदेतअपवदेत्मित्रेमित्राय ॥ ३१ ॥ विश्वासात्अयंकापिनप्रकटयिष्यतीतिविश्वासात् मिथःरहसि मि

...रथसंबाधेयुद्धेशस्त्रसमाकुले ॥ मास्मकार्षीत्सतांधर्मंयस्यार्योनुमतेगतः ॥ २७ ॥ उपदिष्टंसुसूक्ष्मार्थशास्त्रंयत्नेनधीमता ॥ सनाशयतुदुष्टात्मा
...र्योनुमतेगतः ॥ २८ ॥ माचतंव्यूढबाह्वंसंचंद्रभास्करतेजसम् ॥ द्राक्षीद्राज्यस्थमासीनंयस्यार्योनुमतेगतः ॥ २९ ॥ पायसंकृसरंछागंवृथासो
...तुनिर्घृणः ॥ गुरूंश्चाप्यवजानातुयस्यार्योनुमतेगतः ॥ ३० ॥ गवांस्पृशतुपादेनगुरून्परिवदेतच ॥ मित्रेद्रुह्येतसोत्यर्थंयस्यार्योनुमतेगतः ॥ ३१ ॥
...विश्वासात्कथितंकिंचित्परिवादंमिथःक्वचित् ॥ विवृणोतुसदुष्टात्मायस्यार्योनुमतेगतः ॥ ३२ ॥ अकर्ताचाकृतज्ञश्चत्यक्तश्चनिरपत्रपः ॥ लोकेभव
...विद्विष्टोयस्यार्योनुमतेगतः ॥ ३३ ॥ पुत्रैर्दासैश्चभृत्यैश्चस्वगृहेपरिवारितः ॥ सएकोमृष्टमश्नातुयस्यार्योनुमतेगतः ॥ ३४ ॥ अप्राप्यसदृशान्दारान
...पत्यःप्रमीयताम् ॥ अनवाप्यक्रियांधर्म्यांयस्यार्योनुमतेगतः ॥ ३५ ॥ मात्मनःसंततिंद्राक्षीत्स्वेषुदारेषुदुःखितः ॥ आयुःसमग्रमप्राप्ययस्यार्योनु
मतेगतः ॥ ३६ ॥ राजस्त्रीबालवृद्धानांवधेयत्पापमुच्यते ॥ भृत्यत्यागेचयत्पापंतत्पापंप्रतिपद्यताम् ॥ ३७ ॥ लाक्षयामधुमांसेनलोहेनचविषेणच ॥
सदैवविभृयाद्भृत्यान्यस्यार्योनुमतेगतः ॥ ३८ ॥ संग्रामेसमुपोढेचशत्रुपक्षभयंकरे ॥ पलायमानोवध्येतयस्यार्योनुमतेगतः ॥ ३९ ॥

...योन्योन्यरहस्ययोः किंचित्परिवादंकस्यचित्सुरापानादिदोषम् ॥ ३२ ॥ अकर्ताप्रत्युपकाराकर्ता अतएवाकृतज्ञःअतएवत्यक्तःसज्जनैः त्यक्तात्मेतिपाठेसज्जनैस्त्यक्तआत्मास्वरूपंयस्येत्येवा
...र्थः उद्बंधनादिनात्यक्तदेहइत्यर्थइतीर्थः अतएवलोकेविद्विष्टश्चभवतु ॥ ३३ ॥ एकोमृष्टमश्नातुइतरेष्वभोजितेषु ॥ ३४ ॥ प्रमीयतांम्रियताम् धर्म्यांक्रियांअग्निहोत्रादिकाम् म्रियतामित्यनु
...कर्षः ॥ ३५ ॥ दुःखितइत्यस्यभवत्वितिशेषः अप्राप्येत्यस्यम्रियतामितिशेषः ॥ ३६ ॥ राजस्त्रीत्यादौयस्यार्यइत्याद्यनुषंगः ॥ ३७ ॥ लाक्षयेति पतनीयतासंपादकवस्तुविक्रयेणेत्यर्थः भृ
...त्यान्भरणीयान्पुत्रदारादीन् ॥ ३८ ॥ समुपोढेप्राप्ते ॥ ३९ ॥

रामंहत्वानिर्वानरामुर्वींकृत्वापितुःप्रीतिंकरिष्येइत्यर्थः यत्त्वेवमादिवचसांरामस्तुतिपरतयाक्लेशेनव्याख्यानंतद्वृथैव कवेःकविनिबद्धवक्तुश्चतथातात्पर्याभावादितिएतत्सजार्तीयवालिवाक्या
वसरेनिरूपितम् ॥ १८ ॥ १९ ॥ तूर्णांधनुःसंबंधात्रिशिरोनागत्वोत्प्रेक्षा स्रजंतौस्रक्ष्यंतौ ॥ २० ॥ इमौताविति संचिंत्यसकलराक्षसहंताराविति स्मृत्वाइषुधाराभिःइषुवर्षैः संततानूपूरयामास
सर्वादिशइतिशेषः ॥ २१ ॥ वैहायसरथःआकाशगामीरथोयस्यसः अचक्षुर्विषयेतिष्ठन् इदंयुद्धंतद्रात्रावेवमध्यरात्रे ॥ २२ ॥ परीतौव्याप्तौ प्रचक्रतुः प्रादुश्चक्रतुः ॥ २३ ॥ अस्त्रैःअस्त्रमंत्रा

अद्यनिर्वानरामुर्वींहत्वारामंचलक्ष्मणम् ॥ करिष्येपरमांप्रीतिमित्युक्त्वांतरधीयत ॥ १८ ॥ आपपाताथसंक्रुद्धोदशग्रीवेणचोदितः ॥ तीक्ष्णकार्मु
कनाराचैस्तीक्ष्णस्त्विंद्ररिपूरणे ॥ १९ ॥ सददर्शमहावीर्यौनागौत्रिशिरसाविव ॥ स्रजंताविषुजालानिवीरौवानरमध्यगौ ॥ २० ॥ इमौताविति
संचिंत्यसज्जंकृत्वाचकार्मुकम् ॥ संततानिषुधाराभिःपर्जन्यइववृष्टिमान् ॥ २१ ॥ सतुवैहायसरथोयुधितौरामलक्ष्मणौ ॥ अचक्षुर्विषयेतिष्ठन्वि
व्याधनिशितैःशरैः ॥ २२ ॥ तौतस्यशरवेगेनपरीतौरामलक्ष्मणौ ॥ धनुषीसशरेकृत्वादिव्यमस्त्रंप्रचक्रतुः ॥ २३ ॥ प्रच्छादयंतौगगनंशरजालैर्महा
बलौ ॥ तमस्त्रैःसूर्यसंकाशैर्नैवपस्पर्शतुःशरैः ॥ २४ ॥ सहिधूमांधकारंचचक्रेप्रच्छादयन्नभः ॥ दिशश्चांतर्दधेश्रीमान्नीहारतमसावृतः ॥ २५ ॥ नैव
ज्यातलनिर्घोषोनचनेमिखुरस्वनः ॥ शुश्रुवेचरतस्तस्यनचरूपंप्रकाशते ॥ २६ ॥ घनांधकारेतिमिरेशिलावर्षमिवाद्भुतम् ॥ सववर्षमहाबाहुर्नारा
चशरवृष्टिभिः ॥ २७ ॥ सरामंसूर्यसंकाशैःशरैर्दत्तवरैर्भृशम् ॥ विव्याधसमरेक्रुद्धःसर्वगात्रेषुरावणिः ॥ २८ ॥ तौहन्यमानौनाराचैर्धाराभिरिवपर्व
तौ ॥ हेमपुंखान्नरव्याघ्रौतिग्मान्मुमुचतुःशरान् ॥ २९ ॥ अंतरिक्षेसमासाद्यरावणिंकंकपत्रिणः ॥ निकृत्यपतगाभूमौपेतुस्तेशोणिताप्लुताः ॥ ३० ॥
अतिमात्रंशरौघेणदीप्यमानौनरोत्तमौ ॥ तानिषून्पततोभल्लैरनेकैर्विचकर्ततुः ॥ ३१ ॥

न्त्रितैःशरैस्तौमिंद्रजितंनैवपस्पर्शतुःपस्पृशतुः अंतर्हितत्वादितिभावः ॥ २४ ॥ धूमांधकारंचक्रे माययेतिशेषः दिशश्चांतर्दधेअंतर्धापयामास नीहारवशात्तदविवेकंमाययासंपादयामा
॥ २५ ॥ २६ ॥ २७ ॥ दत्तवरैर्वरदत्तैः ॥ २८ ॥ २९ ॥ कंकपत्रिणस्तेपतगाबाणाअंतरिक्षेरावणिंसमासाद्यतंनिकृत्यविद्ध्वांभूमौशोणितोक्षिताःपेतुः ॥ ३० ॥ तानिषूनिंद्र
गणः ॥ ३१ ॥

प्तःतद्धरं
आगतंमणिपश्यामिइत
पल्लभ्यक्षणमपिनतिष्ठयंस्यातु

द्वंद्वयुद्धम् ॥ २७ ॥ ...शास्त्रंवेदः धीमताआचार्येणेतिशेषः ब्रह्मोज्झत्वरूपपापंप्राप्नोत्वित्यर्थः ॥ २८ ॥ व्यूढौ... बाहूअंसौचयस्यतंरामंराज्यस्थम् अतए
...नमाद्राक्षीत् तादृशरामदर्श... मार्गमि... हितोभवतुज्येष्ठानुवर्तनरहितोभवत्वित्यर्थः तावत्पर्यंतंजीवनंमाभूदितिवा ॥ २९ ॥ कृसरंतिलमुद्गतंदुलात्मकम् छागंछागमांसम् वृथाश्राद्धा
अश्नातु अशनजंपापंप्राप्नोतु ॥ ३० ॥ गवामिति अंगमितिशेषः परिवदेतअपवदेत्मित्रेमित्राय ॥ ३१ ॥ विश्वासात्अयंकापिनप्रकटयिष्यतीतिविश्वासात् मिथःरहसि मि



...रथसंबाधेयुद्धेशस्त्रसमाकुले ॥ मास्मकार्षीत्सतांधर्मंयस्यार्योनुमतेगतः ॥ २७ ॥ उपदिष्टंसुसूक्ष्मार्थंशास्त्रंयत्नेनधीमता ॥ सनाशयतुदुष्टात्मा
...र्योनुमतेगतः ॥ २८ ॥ माचतंव्यूढबाह्वंसंचंद्रभास्करतेजसम् ॥ द्राक्षीद्राज्यस्थमासीनंयस्यार्योनुमतेगतः ॥ २९ ॥ पायसंकृसरंछागंवृथासो
...तुनिर्घृणः ॥ गुरूंश्चाप्यवजानातुयस्यार्योनुमतेगतः ॥ ३० ॥ गवांस्पृशतुपादेनगुरून्परिवदेतच ॥ मित्रेद्रुह्येतसोत्यर्थंयस्यार्योनुमतेगतः ॥ ३१ ॥
...विश्वासात्कथितंकिंचित्परिवादंमिथःक्वचित् ॥ विवृणोतुसदुष्टात्मायस्यार्योनुमतेगतः ॥ ३२ ॥ अकर्ताचाकृतज्ञश्चत्यक्तश्चनिरपत्रपः ॥ लोकेभव
...विद्विष्टोयस्यार्योनुमतेगतः ॥ ३३ ॥ पुत्रैर्दासैश्चभृत्यैश्चस्वगृहेपरिवारितः ॥ सएकोमृष्टमश्नातुयस्यार्योनुमतेगतः ॥ ३४ ॥ अप्राप्यसदृशान्दारान
...नपत्यःप्रमीयताम् ॥ अनवाप्यक्रियांधर्म्यांयस्यार्योनुमतेगतः ॥ ३५ ॥ मात्मनःसंततिंद्राक्षीत्स्वेषुदारेषुदुःखितः ॥ आयुःसमग्रमप्राप्ययस्यार्योनु
मतेगतः ॥ ३६ ॥ राजस्त्रीबालवृद्धानांवधेयत्पापमुच्यते ॥ भृत्यत्यागेचयत्पापंतत्पापंप्रतिपद्यताम् ॥ ३७ ॥ लाक्षयामधुमांसेनलोहेनचविषेणच ॥
सदैवबिभृयाद्भृत्यान्यस्यार्योनुमतेगतः ॥ ३८ ॥ संग्रामेसमुपोढेचशत्रुपक्षभयंकरे ॥ पलायमानोवध्येतयस्यार्योनुमतेगतः ॥ ३९ ॥

थोन्योन्यरहस्ययोः किंचित्परिवादंकस्यचित्सुरापानादिदोषम् ॥ ३२ ॥ अकर्ताप्रत्युपकाराकर्ता अतएवाकृतज्ञः अतएवत्यक्तःसज्जनैः त्यक्तात्मेतिपाठेसज्जनैस्त्यक्तआत्मास्वरूपंयस्येत्येवा
र्थः उद्बंधनादिनात्यक्तदेहइत्यर्थतीर्थः अतएवलोकेविद्विष्टश्चभवतु ॥ ३३ ॥ एकोमृष्टमश्नातुइतरेष्वभोजितेषु ॥ ३४ ॥ प्रमीयतांम्रियताम् धर्म्यांक्रियांअग्निहोत्रादिकाम् म्रियतामित्यनु
कर्षः ॥ ३५ ॥ दुःखितइत्यस्यभवत्वितिशेषः अप्राप्येत्यस्यम्रियतामितिशेषः ॥ ३६ ॥ राजस्त्रीत्यादौयस्यार्यइत्याद्यनुषंगः ॥ ३७ ॥ लाक्षयेति पतनीयतासंपादकवस्तुविक्रयेणेत्यर्थः भृ
त्यान्भरणीयान्पुत्रदारादीन् ॥ ३८ ॥ समुपोढेप्राप्ते ॥ ३९ ॥

प्रजार्थेप्रजानामधिपत्यलक्षणेप्रयोजनेविफलोभवराज्याधिपत्यरहितोभवेत्यर्थः ॥ १४ ॥ १५ ॥ दुर्मतेस्तवसंतानइतिशेषः योप्यराक्षसस्तवसंतानःसोपिक्षत्रियमात्रमेवनतुसोमवंशराजपदाभिषिक्तः भवत्तुल्यदुर्विनीतत्वादितिभावः ॥ १६ ॥ आश्रमंवानप्रस्थाश्रमम् ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ यस्तृषिशापंनिमिर्नचक्षमेनक्षांतवान् तादृशउशनसामुक्तः शापोत्सर्गोम

राक्षसस्त्वंमयाजातःक्षत्ररूपोदुरासदः ॥ प्रतिहंसिममाज्ञांत्वंप्रजार्थेविफलोभव ॥ १४ ॥ पितरंगुरुभूतंमांयस्मात्त्वमवमन्यसे ॥ राक्षसान्यातुधानांस्त्वंजनयिष्यसिदारुणान् ॥ १५ ॥ नतुसोमकुलोत्पन्नेवंशेस्थास्यतिदुर्मतेः ॥ वंशोपिभवतस्तुल्योदुर्विनीतोभविष्यति ॥ १६ ॥ तमेवमुक्त्वाराजर्षिःपूरुंराज्यविवर्धनम् ॥ अभिषेकेणसंपूज्यआश्रमंप्रविवेशह ॥ १७ ॥ ततःकालेनमहतादिष्टांतमुपजग्मिवान् ॥ त्रिदिवंसगतोराजाययातिर्नहुषात्मजः ॥ १८ ॥ पूरुश्चकारतद्राज्यंधर्मेणमहतावृतः ॥ प्रतिष्ठानेपुरवरेकाशिराज्येमहायशाः ॥ १९ ॥ यदुस्तुजनयामासयातुधानान्सहस्रशः ॥ पुरेक्रौंचवनेदुर्गेराजवंशबहिष्कृते ॥ २० ॥ एषतूशनसामुक्तःशापोत्सर्गोययातिना ॥ धारितःक्षत्रधर्मेणयंनिमिश्चक्षमेनच ॥ २१ ॥ एतत्तेसर्वमाख्यातंदर्शनंसर्वकारिणाम् ॥ अनुवर्तामहेसौम्यदोषोनस्याद्यथानृगे ॥ २२ ॥ इतिकथयतिरामेचंद्रतुल्याननेनप्रविरलतरतारंव्योमजज्ञेतदानीम् ॥ अरुणकिरणरक्तादिग्बभौचैवपूर्वाकुसुमरसविमुक्तंवस्त्रमागुंठितेव ॥ २३ ॥ ॥ इत्यार्षेश्रीम० वा० आ० उत्तरकांडएकोनषष्टितमःसर्गः ॥ ५९ ॥ एतदग्रेप्रक्षिप्ताःसर्गाः ॥ ३ ॥ ततःप्रभातेविमलेकृत्वापौर्वाह्णिकींक्रियाम् ॥ धर्मासनगतोराजारामोराजीवलोचनः ॥ १ ॥ राजधर्मानवेक्षन्वैब्राह्मणैर्नैगमैःसह ॥ पुरोधसावसिष्ठेनऋषिणाकश्यपेनच ॥ २ ॥ मंत्रिभिर्व्यवहारज्ञैस्तथान्यैर्धर्मपाठकैः ॥ नीतिज्ञैरथसभ्यैश्चराजभिःसासभावृता ॥ ३ ॥ सभायथामहेंद्रस्ययमस्यवरुणस्यच ॥ शुशुभेराजसिंहस्यरामस्याक्लिष्टकर्मणः ॥ ४ ॥

हाशापोययातिनाधारितः ॥ २१ ॥ एतत्तेसर्वंप्रजाकार्यानवलोकनेशापःकेषांचित्तदक्षमाकेषांचित्क्षमेत्यादिकंसर्वमाख्यातं अतःकारःकृत्यंतद्येषामस्तितेकारिणस्तेषांकार्यापेक्षिणांसर्वेषांदर्शनमनुवर्तामहेऽङ्गीकुर्मः यथानृगेदोषोजातस्तथादोषोममनस्यान्नभवेदित्येतदर्थमित्यर्थः ॥ २२ ॥ विमुक्तंयुक्तम् ॥ २३ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडएकोनषष्टितमःसर्गः ॥ ५९ ॥ ॥ ७॥ ॥ एतदुत्तरंश्वमातुराख्यानंगृध्रोलूकाख्यानंचकचिद्दृश्यतेततृतीर्थकतकाद्यस्पृष्टत्वेनप्रक्षिप्तमितिनव्याख्यातम् ॥

अथरामोब्रवीत्तत्रलक्ष्मणंशुभलक्षणम् ॥ निर्गच्छत्वंमहाबाहोसुमित्रानंदवर्धन ॥ ५ ॥ कार्यार्थिनश्चसौमित्रेव्याहर्तुंत्वमुपाक्रम ॥ रामस्यभाषि
तंश्रुत्वालक्ष्मणःशुभलक्षणः ॥ ६ ॥ द्वारदेशमुपागम्यकार्यिणश्चाह्वयत्स्वयम् ॥ नकश्चिदब्रवीत्तत्रममकार्यमिहाद्यवै ॥ ७ ॥ नाधयोव्याधयश्चैव
रामेराज्यंप्रशासति ॥ पक्वसस्यावसुमतीसर्वौषधिसमन्विता ॥ ८ ॥ नबालोम्रियतेतत्रनयुवानचमध्यमः ॥ धर्मेणशासितंसर्वंनचबाधाविधीय
ते ॥ ९ ॥ दृश्यतेनचकार्यार्थीरामेराज्यंप्रशासति ॥ लक्ष्मणःप्रांजलिर्भूत्वारामायैवंन्यवेदयत् ॥ १० ॥ अथरामःप्रसन्नात्मासौमित्रिमिदमब्रवीत् ॥
भूयएवतुगच्छत्वंकार्यिणःप्रविचारय ॥ ११ ॥ सम्यक्प्रणीतयानीत्यानाधर्मोविद्यतेक्वचित् ॥ तस्माद्राजभयात्सर्वेरक्षंतीहपरस्परम् ॥ १२ ॥ बा
णाइवमयामुक्ताइहरक्षंतिमेप्रजाः ॥ तथापित्वंमहाबाहोप्रजारक्षस्वतत्परः ॥ १३ ॥ एवमुक्तस्तुसौमित्रिर्निर्जगामनृपालयात् ॥ अपश्यद्द्वारदेशे
वैश्वानंतावदवस्थितम् ॥ १४ ॥ तमेवंवीक्षमाणोवैविक्रोशंतंमुहुर्मुहुः ॥ दृष्ट्वाथलक्ष्मणःस्तंवैसपप्रच्छाथवीर्यवान् ॥ १५ ॥ किंतेकार्यंमहाभाग
ब्रूहिविस्रब्धमानसः ॥ लक्ष्मणस्यवचःश्रुत्वासारमेयोभ्यभाषत ॥ १६ ॥ सर्वभूतशरण्यायरामायाक्लिष्टकर्मणे ॥ भयेष्वभयदात्रेचतस्मैवक्तुंसमु
त्सहे ॥ १७ ॥ एतच्छ्रुत्वातुवचनंसारमेयस्यलक्ष्मणः ॥ राघवायतदाख्यातुंप्रविवेशालयंशुभम् ॥ १८ ॥ निवेद्यरामस्यपुनर्निर्जगामनृपालयात् ॥
वक्तव्यंयदितेकिंचित्तत्त्वंब्रूहिनृपायवै ॥ १९ ॥ लक्ष्मणस्यवचःश्रुत्वासारमेयोभ्यभाषत ॥ देवागारेनृपागारेद्विजवेश्मसुवैतथा ॥ २० ॥ वह्निःश
तक्रतुश्चैवसूर्योवायुश्चतिष्ठति ॥ नात्रयोग्यास्तुसौमित्रेयोनीनामधमावयम् ॥ २१ ॥ प्रवेष्टुंनात्रशक्ष्यामिधर्मोविग्रहवान्नृपः ॥ सत्यवादीरणपटुः
सर्वसत्वहितेरतः ॥ २२ ॥ षाड्गुण्यस्यपदंवेत्तिर्नीतिकर्तासराघवः ॥ सर्वज्ञःसर्वदर्शीचरामोरमयतांवरः ॥ २३ ॥ ससोमःसचमृत्युश्चसयमोधनद
स्तथा ॥ वह्निःशतक्रतुश्चैवसूर्योवैवरुणस्तथा ॥ २४ ॥ तस्यत्वंब्रूहिसौमित्रेप्रजापालःसराघवः ॥ अनाज्ञप्तस्तुसौमित्रेप्रवेष्टुंनेच्छयाम्यहम् ॥ २५ ॥
आनृशंस्यान्महाभागप्रविवेशमहाद्युतिः ॥ नृपालयंप्रविश्याथलक्ष्मणोवाक्यमब्रवीत् ॥ २६ ॥ श्रूयतांममविज्ञाप्यंकौसल्यानंदवर्धन ॥ यन्मयो
क्तंमहाबाहोतवशासनजंविभो ॥ २७ ॥ श्वावैतेतिष्ठतेद्वारिकार्यार्थीसमुपागतः ॥ लक्ष्मणस्यवचःश्रुत्वारामोवचनमब्रवीत् ॥ २८ ॥

संप्रवेशयवैक्षिप्रंकार्यार्थीयोत्रतिष्ठति ॥ २९ ॥ ॥इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेसर्गः॥ १ ॥ ॥ ५९ ॥ ॥श्रुत्वा रामस्यवचनंलक्ष्मणस्त्वरितस्तदा॥ श्वानमाहूयमतिमान्राघवायन्यवेदयत्॥ १ ॥ दृष्ट्वासमागतंश्वानंरामोवचनमब्रवीत्॥ विवक्षितार्थंमेब्रूहि सारमेयनतेभयम्॥ २ ॥ अथापश्यततत्रस्थंरामंश्वाभिन्नमस्तकः॥ ततोदृष्ट्वासराजानंसारमेयोब्रवीद्वचः॥ ३ ॥ राजैवकर्ताभूतानांराजाचैवविनायकः॥ राजासुप्तेषुजागर्तिराजापालयतिप्रजाः॥ ४ ॥ नीत्यासुनीतयाराजाधर्मंरक्षतिरक्षिता॥ यदानपालयेद्राजाक्षिप्रंनश्यंतिवैप्रजाः॥५॥ राजाकर्ताचगोप्ताचसर्वस्यजगतःपिता॥ राजाकालोयुगंचैवराजासर्वमिदंजगत्॥ ६ ॥ धारणाद्धर्ममित्याहुर्धर्मेणविधृताःप्रजाः॥ यस्माद्धारयतेसर्वंत्रैलोक्यंसचराचरम्॥ ७ ॥ धारणाद्विद्विषांचैवधर्मेणारंजयन्प्रजाः॥ तस्माद्धारणमित्युक्तंसधर्मइतिनिश्चयः॥८॥ एषराजन्परोधर्मःफलवान्प्रेत्यराघव ॥ नहिधर्माद्भवेत्किंचिद्दुष्प्रापमितिमेमतिः ॥ ९ ॥ दानंदयासतांपूजाव्यवहारेषुचार्जवम्॥ एषरामपरोधर्मोरक्षणात्प्रेत्यचेहच ॥ १० ॥ त्वंप्रमाणंप्रमाणानामसिराघवसुव्रत॥ विदितश्चैवतेधर्मःसद्भिराचरितस्तुवै ॥ ११ ॥ धर्माणांत्वंपरंधामगुणानांसागरोपमः॥ अज्ञानाच्चमयाराजन्नुक्तस्त्वंराजसत्तम ॥ १२ ॥ प्रसादयामिशिरसानत्वंक्रोद्धुमिहार्हसि॥ शुनःसवचनंश्रुत्वाराघवोवाक्यमब्रवीत्॥ १३ ॥ किंतेकार्यंकरोम्यद्यब्रूहिविस्रब्धमाचिरम्॥ रामस्यवचनंश्रुत्वासारमेयोब्रवीदिदम्॥ १४ ॥ धर्मेणराष्ट्रंविंदेतधर्मेणैवानुपालयेत्॥ धर्माच्छरण्यतांयातिराजासर्वभयापहः ॥ १५ ॥ इदंविज्ञाययत्कृत्यंश्रूयतांममराघव॥ भिक्षुःसर्वार्थसिद्धश्चब्राह्मणावसथेवसन्॥ १६ ॥ तेनदत्तःप्रहारोमेनिष्कारणमनागसः॥ एतच्छ्रुत्वातुरामेणद्वास्थःसंप्रेषितस्तदा ॥ १७॥ आनीतश्चद्विजस्तेनसर्वसिद्धार्थकोविदः ॥ अथद्विजवरस्तत्ररामंदृष्ट्वामहाद्युतिः ॥ १८ ॥ किंतेकार्यंमयारामतद्ब्रूहित्वंममानघ॥ एवमुक्तस्तुविप्रेणरामोवचनमब्रवीत्॥ १९ ॥ त्वयादत्तःप्रहारोयंसारमेयस्यवैद्विज ॥ किंतवापकृतंविप्रदंडेनाभिहतोयतः ॥ २० ॥ क्रोधःप्राणहरःशत्रुःक्रोधोमित्रमुखोरिपुः॥ क्रोधोह्यसिर्महातीक्ष्णःसर्वंक्रोधोऽपकर्षति॥ २१ ॥ तपतेयजतेचैवयच्चदानंप्रयच्छति॥ क्रोधेनसर्वंहरतितस्मात्क्रोधंविसर्जयेत्॥ २२ ॥ इंद्रियाणांप्रदुष्टानांहयानामिवधावताम्॥ कुर्वीतधृत्यासारथ्यंसंहृत्येंद्रियगोचरम्॥ २३ ॥ मनसाकर्मणावाचाचक्षुषाचसमाचरेत्॥ श्रेयोलोकस्यचरतोनद्वेष्टिनचलिप्यते॥ २४ ॥

नतत्कुर्यादसिस्तीक्ष्णःसर्पोवाव्याहतःपदा॥ अरिर्वानित्यसंक्रुद्धोयथात्मादुरनुष्ठितः॥ २५॥ विनीतविनयस्यापिप्रकृतिर्नविधीयते॥ प्रकृतिंगूह
मानस्यनिश्चयेनकृतिर्ध्रुवा॥ २६॥ एवमुक्तःसविप्रोवैरामेणाक्लिष्टकर्मणा॥ द्विजःसर्वार्थसिद्धस्तुअब्रवीद्रामसन्निधौ॥ २७॥ मयादत्तप्रहारो
यंक्रोधेनाविष्टचेतसा॥ भिक्षार्थमटमानेनकालेविगतभैक्षके॥ २८॥ रथ्यास्थितस्त्वयंश्वावैगच्छगच्छेतिभाषितः॥ अथस्वैरेणगच्छंस्तुरथ्यांते
विषमःस्थितः॥ २९॥ क्रोधेनक्षुधयाविष्टस्ततोदत्तोस्यराघव॥ प्रहारोराजराजेंद्रशाधिमामपराधिनम्॥ ३०॥ त्वयाशस्तस्यराजेंद्रनास्तिमेनर
काद्भयम्॥ अथरामेणसंपृष्टाःसर्वएवसभासदः॥३१॥किंकार्यमस्यवैब्रूतदंडोवैकोस्यपात्यताम्॥ सम्यक्प्रणिहितेदंडेप्रजाभवतिरक्षिता॥३२॥
भृग्वांगिरसकुत्साद्यावसिष्ठश्चसकाश्यपः॥ धर्मपाठकमुख्याश्चसचिवानैगमास्तथा॥३३॥ एतेचान्येचबहवःपंडितास्तत्रसंगताः॥ अवध्योब्रा
ह्मणोदंडैरितिशास्त्रविदोविदुः॥ ३४॥ ब्रुवतेराघवंसर्वेराजधर्मेषुनिष्ठिताः॥ अथतेमुनयःसर्वेराममेवाब्रुवंस्तदा॥ ३५॥ राजाशास्ताहिसर्वस्य
त्वंविशेषेणराघव॥ त्रैलोक्यस्यभवान्शास्तादेवोविष्णुःसनातनः॥ ३६॥ एवमुक्तेतुतैःसर्वैःश्वावैवचनमब्रवीत्॥ यदितुष्टोसिमेरामयदिदेयोव
रोमम॥ ३७॥ प्रतिज्ञातंत्वयावीरकिंकरोमीतिविश्रुतम्॥ प्रयच्छब्राह्मणस्यास्यकौलपत्यंनराधिप॥ ३८॥ कालंजरेमहाराजकौलपत्यंप्रदीय
ताम्॥ एतच्छ्रुत्वातुरामेणकौलपत्येभिषेचितः॥ ३९॥ प्रययौब्राह्मणोहृष्टोगजस्कंधेनसोर्चितः॥ अथतेरामसचिवाःस्मयमानावचोब्रुवन्
॥४०॥ वरोयंदत्तएतस्यनायंशापोमहाद्युते॥ एवमुक्तस्तुसचिवैरामोवचनमब्रवीत्॥ ४१॥ नयूयंगतितत्त्वज्ञाःश्वावैजानातिकारणम्॥ अथपृ
ष्टस्तुरामेणसारमेयोब्रवीदिदम्॥ ४२॥ अहंकुलपतिस्तत्रआसंशिष्टान्नभोजनः॥ देवद्विजातिपूजायांदासीदासेषुराघव॥ ४३॥ संविभागीशु
भरतिर्देवद्रव्यस्यरक्षिता॥ विनीतःशीलसंपन्नःसर्वसत्त्वहितेरतः॥ ४४॥ सोहंप्राप्तइमांघोरामवस्थामधमांगतिम्॥ एवंक्रोधान्वितोविप्रस्त्यक्त
धर्माहितेरतः॥ ४५॥ क्रुद्धोनृशंसःपरुषअविद्वांश्चाप्यधार्मिकः॥ कुलानिपातयत्येवसप्तसप्तचराघव॥ ४६॥ तस्मात्सर्वास्ववस्थासुकौलपत्यंन
कारयेत्॥ यमिच्छेन्नरकंनेतुंसपुत्रपशुबांधवम्॥ ४७॥ देवेष्वधिष्ठितंकुर्याद्गोषुतंब्राह्मणेषुच॥ ब्रह्मस्वंदेवताद्रव्यंस्त्रीणांबालधनंचयत्॥ ४८॥ द
त्तंहरतियोभूयइष्टैःसहविनश्यति॥ ब्राह्मणद्रव्यमादत्तेदेवानांचैवराघव॥ ४९॥

सद्यः पततिघोरेवैनरकेवीचिसंज्ञके॥ मनसापिहिदेवस्वंब्रह्मस्वंचहरेत्तुयः॥५०॥ निरयान्निरयंचैवपतत्येवनराधमः॥ तच्छ्रुत्वावचनंरामोविस्म योत्फुल्ललोचनः॥५१॥ स्थाप्यगच्छन्महातेजायतएवागतस्ततः॥ मनस्वीपूर्वजात्यासजातिमात्रोपदूषितः॥५२॥ वाराणस्यांमहाभागःप्रायंचो पविवेशह॥५३॥ ॥इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआ० उत्तरकांडेसर्गः॥२॥ ॥६॥ ॥ अथतस्मिन्वनोद्देशेरम्येपादपशोभिते॥ नदीकी र्णेगिरिवरेकोकिलानेककूजिते॥१॥ सिंहव्याघ्रसमाकीर्णेनानाद्विजगणावृते॥ गृध्रोलूकौप्रवसतोबहुवर्षगणानपि॥२॥ अथोलूकस्यभवनंगृ ध्रःपापविनिश्चयः॥ ममेदमितिकृत्वासौकलहंतेनचाकरोत्॥३॥ राजासर्वस्यलोकस्यरामोराजीवलोचनः॥ तंप्रपद्यावहेशीघ्रंयस्यैतद्भवनंभवेत् ॥४॥ इतिकृत्वामतिंतांतुनिश्चयार्थंसुनिश्चिताम्॥ गृध्रोलूकौप्रपद्येतांकोपाविष्टौत्यमर्षितौ॥५॥ रामंप्रपद्यतौशीघ्रंकलिव्याकुलचेतसौ॥ तौप रस्परविद्वेषात्स्पृशतश्चरणौतदा॥६॥ अथदृष्ट्वानरेंद्रंतंगृध्रोवचनमब्रवीत्॥ सुराणामसुराणांचप्रधानस्त्वंमतोमम॥७॥ बृहस्पतेश्चशुक्राच्चवि शिष्टोसिमहाद्युते॥ परावरज्ञोभूतानांकांत्याचंद्रइवापरः॥८॥ दुर्निरीक्ष्योयथासूर्योहिमवांश्चैवगौरवे॥ सागरश्चैवगांभीर्येलोकपालोयमोह्यसि ॥९॥ क्षांत्याधरण्यातुल्योसिशीघ्रत्वेह्यनिलोपमः॥ गुरुस्त्वंसर्वसंपन्नःकीर्तियुक्तश्चराघव॥१०॥ अमर्षीदुर्जयोजेतासर्वास्त्रविधिपारगः॥ शृणु ष्वममवैरामविज्ञाप्यंनरपुंगव॥११॥ ममालयंपूर्वकृतंबाहुवीर्येणराघव॥ उलूकोहरतेराजंस्तत्रत्वंत्रातुमर्हसि॥१२॥ एवमुक्तेतुगृध्रेणउलूको वाक्यमब्रवीत्॥ सोमाच्छतक्रतोःसूर्याद्धनदाद्वायमात्तथा॥१३॥ जायतेवैनृपोरामकिंचिद्भवतिमानुषः॥ त्वंतुसर्वमयोदेवोनारायणइवापरः ॥१४॥ याचतेसौम्यताराजन्सम्यक्प्रणिहिताविभो॥ समंचरसिचान्विष्यतेनसोमांशकोभवान्॥१५॥ क्रोधेदंडेप्रजानाथदानेपापभयापहः॥ दाताहर्तासिगोप्तासितेनेंद्रइवनोभवान्॥१६॥ अधृष्यःसर्वभूतेषुतेजसाचानलोपमः॥ अभीक्ष्णंतपसेलोकांस्तेनभास्करसन्निभः॥१७॥ साक्षा द्वित्तेशतुल्योसिअथवाधनदाधिकः॥ वित्तेशस्येवपद्माश्रीर्नित्यंतेराजसत्तम॥१८॥ धनदस्यतुकार्येणधनदस्तेननोभवान्॥ समःसर्वेषुभूतेषु स्थावरेषुचरेषुच॥१९॥ शत्रौमित्रेचतेदृष्टिःसमतांयातिराघव॥ धर्मेणशासनंनित्यंव्यवहारेविधिक्रमात्॥२०॥

यस्यरुष्यसिवैरामतस्यमृत्युर्विधावति ॥ गीयसेतेनवैरामयमइत्यभिविक्रमः॥ २१ ॥ यश्चैषमानुषोभावोभवतोनृपसत्तम॥ आनृशंस्यपरोरा
जासत्वेषुक्षमयान्वितः॥ २२ ॥ दुर्बलस्यत्वनाथस्यराजाभवतिवैबलम्॥ अचक्षुषोत्तमंचक्षुरगतेःसगतिर्भवान्॥ २३ ॥ अस्माकमपिनाथस्त्वं
श्रूयतांममधार्मिक ॥ ममालयंप्रविष्टस्तुगृध्रोमांबाधतेनृप॥ २४ ॥ त्वंहिदेवमनुष्येषुशास्तावैनरपुंगव ॥ एतच्छ्रुत्वातुवैरामःसचिवानाह्वयत्स्व
यम्॥ २५ ॥ धृष्टिर्जयंतोविजयःसिद्धार्थोराष्ट्रवर्धनः॥ अशोकोधर्मपालश्चसुमंत्रश्चमहाबलः॥ २६ ॥ एतेरामस्यसचिवाराज्ञोदशरथस्यच ॥ नी
तियुक्तामहात्मानःसर्वशास्त्रविशारदाः॥ २७॥ ह्रीमंतश्चकुलीनाश्चनयेमंत्रेचकोविदाः॥ तानाहूयचधर्मात्मापुष्पकादवतीर्यच॥ २८॥ गृध्रोलूककवि
वादंतंपृच्छतिस्मरघूत्तमः ॥ कतिवर्षाणिवैगृध्रतवेदंनिलयंकृतम्॥ २९ ॥ एतन्मेकारणंब्रूहियदिजानासितत्त्वतः॥ एतच्छ्रुत्वातुवैगृध्रोभाषतेराघ
वंसतम्॥ ३० ॥ इयंवसुमतीराममनुष्यैःपरितोयदा॥ उत्थितैरावृतासर्वातदाप्रभृतिमेगृहम्॥ ३१ ॥ उलूकश्चाब्रवीद्रामंपादपैरुपशोभिता॥ यदे
यंपृथिवीराजंस्तदाप्रभृतिमेगृहम् ॥ एतच्छ्रुत्वातुवैरामःसभासदमुवाचह॥ ३२॥ नसासभायत्रनसंतिवृद्धावृद्धानतेयेनवदंतिधर्मम्॥ नासौध
र्मोयत्रनसत्यमस्तिनतत्सत्यंयच्छलेनानुविद्धम्॥ ३३ ॥ येतुसभ्याःसदाज्ञात्वातूष्णींध्यायंतआसते॥ यथाप्राप्तंनब्रुवतेतेसर्वेनृतवादिनः॥ ३४॥
जानन्नवाब्रवीत्प्रश्नान्कामात्क्रोधाद्भयात्तथा॥ सहस्रंवारुणान्पाशानात्मनिप्रतिमुंचति॥३५॥ तेषांसंवत्सरेपूर्णेपाशएकःप्रमुच्यते॥ तस्मात्सत्ये
नवक्तव्यंजानतासत्यमंजसा॥ ३६ ॥ एतच्छ्रुत्वातुसचिवाराममेवाब्रुवंस्तदा॥ उलूकःशोभतेराजन्नतुगृध्रोमहामते॥ ३७॥ त्वंप्रमाणंमहाराज
राजाहिपरमागतिः ॥ राजमूलाःप्रजाःसर्वाराजाधर्मःसनातनः॥ ३८ ॥ शास्तानृणांनृपोयेषांतेनगच्छंतिदुर्गतिम् ॥ वैवस्वतेनमुक्तास्तुभवंतिपु
रुषोत्तमाः॥ ३९ ॥ सचिवानांवचःश्रुत्वारामोवचनमब्रवीत्॥ श्रूयतामभिधास्यामिपुराणेयदुदाहृतम्॥४० ॥ द्यौःसचंद्रार्कनक्षत्रासपर्वतमहा
वना॥ सलिलार्णवसंपूर्णात्रैलोक्यंसचराचरम्॥ ४१ ॥ एकएवतदाह्यासीद्युक्तोमेरुरिवापरः॥ पुराभूःसहलक्ष्म्याचविष्णोर्जठरमाविशत्॥४२॥
तांनिगृह्यमहातेजाःप्रविश्यसलिलार्णवम्॥ सुष्वापदेवोभूतात्मावहून्वर्षगणानपि॥४३॥

विष्णौसुप्तेतदाब्रह्माविवेशजठरंततः॥ रुद्रस्तोतंतुतंज्ञात्वामहायोगीसमाविशत्॥ ४४॥ नाभ्यांविष्णोःसमुत्पन्नेपद्मेहेमविभूषिते॥ सतुनिर्गम्यवै ब्रह्मायोगीभूत्वामहाप्रभुः॥ ४५॥ सिसृक्षुःपृथिवींवायुंपर्वतान्समहीरुहान्॥ तदंतरेप्रजाःसर्वाःसमनुष्यसरीसृपाः॥ ४६॥ जरायुजांडजाःसर्वाः ससर्जमहातपाः॥ तत्रश्रोत्रमलोत्पन्नःकैटभोमधुनासह॥४७॥ दानवौतौमहावीर्यौघोररूपौदुरासदौ॥दृष्ट्वाप्रजापतिंतत्रक्रोधाविष्टौबभूवतुः ॥४८॥ वेगेनमहतातत्रस्वयंभुवमधावताम्॥ दृष्ट्वास्वयंभुवामुक्तोरावोवैविकृतस्तदा॥४९॥ तेनशब्देनसंप्राप्तौदानवौहरिणासह॥ अथचक्रप्रहारेणसूदितौमधुकैटभौ॥५०॥ मेदसाप्लाविताःसर्वापृथिवीचसमंततः॥ भूयोविशोधितातेनहरिणालोकधारिणा॥ ५१॥ शुद्धांवैमेदिनींतांतुवृक्षैः सर्वामपूरयत्॥ ओषध्यःसर्वसस्यानिनिष्पद्यंतपृथग्विधाः॥५२॥मेदोगंधातुधरणीमेदिनीत्यभिसंज्ञिता॥ तस्मान्नगृध्रस्यगृहमुलूकस्येतिमेमतिः ॥५३॥ तस्माद्गृध्रस्तुदंड्योवैपापोहर्तापरालयम्॥ पीडांकरोतिपापात्मादुर्विनीतोमहानयम्॥ ५४॥ अथाशरीरिणीवाणीअंतरिक्षात्प्रबोधिनी॥ मावधीरामगृध्रंत्वंपूर्वदग्धंतपोबलात्॥ ५५॥ कालगौतमदग्धोयंप्रजानाथोनरेश्वर॥ ब्रह्मदत्तेतिनाम्नैषशूरःसत्यव्रतःशुचिः॥ ५६॥ गृहंत्वस्यागतोविप्रोभोजनंप्रत्यमार्गत॥ साग्रंवर्षशतंचैवभोक्तव्यंनृपसत्तम॥५७॥ ब्रह्मदत्तःसवैतस्यपाद्यमर्घ्यंस्वयंनृपः॥हार्दंचैवाकरोत्तस्यभोजनार्थंमहाद्युतेः॥ ५८॥ मांसमस्याभवत्तत्रआहारेतुमहात्मनः॥ अथक्रुद्धेनमुनिनाशापोदत्तोस्यदारुणः॥५९॥ गृध्रस्त्वंभववैराजन्मामैनंत्व्यथसोब्रवीत्॥ प्रसादंकुरुधर्मज्ञअज्ञानान्मेमहाव्रत॥ ६०॥ शापस्यांतंमहाभागक्रियतांवैममानघ॥ तदज्ञानकृतंमत्वाराजानंमुनिरब्रवीत्॥ ६१॥ उत्पत्स्यति कुलेराज्ञांरामोनाममहायशाः॥ इक्ष्वाकूणांमहाभागोराजाराजीवलोचनः॥ ६२॥ तेनस्पृष्टोविपापस्त्वंभवितानरपुंगव॥ स्पृष्टोरामेणतच्छ्रुत्वा नरेंद्रःपृथिवीपतिः॥ ६३॥ गृध्रत्वंत्यक्तवान्राजादिव्यगंधानुलेपनः॥ पुरुषोदिव्यरूपोभूदुवाचेदंचराघवम्॥६४॥ साधुराघवधर्मज्ञत्वत्प्रसादाद हंविभो॥ विमुक्तोनरकाद्घोराच्छापस्यांतःकृतस्त्वया॥ ६५॥ ॥इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेएतदंतंप्रक्षिप्ताः सर्गाः॥ ३॥ ॥ ॥ ॥ ॥

अथलवणासुरपीडितऋषीणांरामसमीपागमनम् तयोरिति एवंसंवदतोःप्रतिदिवसंधर्मसंवादंकुर्वतोस्तत्पूर्वंप्रजारक्षणंकुर्वतोरितियावत् वासंतिकीवसंतकालभवानिशाप्राप्ता कालांतरेइतिशेषः इदंकालवचनंऋषिकार्यौचितत्वप्रदर्शनार्थम् ॥ १ ॥ दर्शनमभिचक्राम प्रजादृश्यंतेयत्रस्थानेतत्स्थानंदर्शनमभिचक्रामजगाम ॥ २ ॥ प्रतिहताः द्वारिनिरुद्धाइत्यर्थः ॥ ३ ॥ भृगुगोत्रापत्यं

तयोःसंवदतोरेवंरामलक्ष्मणयोस्तदा ॥ वासंतिकीनिशाप्राप्तानशीतानचघर्मदा ॥ १ ॥ ततःप्रभातेविमलेकृतपूर्वाह्णिकक्रियः ॥ अभिचक्रामका कुत्स्थोदर्शनंपौरकार्यवित् ॥ २ ॥ ततःसुमंत्रस्त्वागम्यराघवंवाक्यमब्रवीत् ॥ एतेप्रतिहताराजन्द्वारितिष्ठंतितापसाः ॥ ३ ॥ भार्गवंच्यवनंचैवपुर स्कृत्यमहर्षयः ॥ दर्शनंतेमहाराजचोदयंतिकृतत्वराः ॥ ४ ॥ प्रीयमाणानरव्याघ्रयमुनातीरवासिनः ॥ तस्यतद्वचनंश्रुत्वारामःप्रोवाचधर्मवित् ॥ ५ ॥ प्रवेश्यंतांमहाभागाभार्गवप्रमुखाद्विजाः ॥ राज्ञस्त्वाज्ञांपुरस्कृत्यद्वास्थोमूर्ध्नाकृतांजलिः ॥ ६ ॥ प्रवेशयामासतदातापसान्सुदुरासदान् ॥ शतंसम धिकंतत्रदीप्यमानंस्वतेजसा ॥ ७ ॥ प्रविष्टंराजभवनंतापसानांमहात्मनाम् ॥ तेद्विजाःपूर्णकलशैःसर्वतीर्थांबुसत्कृतैः ॥ ८ ॥ गृहीत्वाफलमूलंच रामस्याभ्याहरन्बहु ॥ प्रतिगृह्यतुतत्सर्वंरामःप्रीतिपुरस्कृतः ॥ ९ ॥ तीर्थोदकानिसर्वाणिफलानिविविधानिच ॥ उवाचचमहाबाहुःसर्वानेवमहा मुनीन् ॥ १० ॥ इमान्यासनमुख्यानियथार्हमुपविश्यताम् ॥ रामस्यभाषितंश्रुत्वासर्वएवमहर्षयः ॥ ११ ॥ बृसीषुरुचिराख्यासुनिषेदुःकांचनीषु ते ॥ उपविष्टानृषींस्तत्रदृष्ट्वापरपुरंजयः ॥ प्रयतःप्रांजलिर्भूत्वाराघवोवाक्यमब्रवीत् ॥ १२ ॥ किमागमनकार्यंवःकिंकरोमिसमाहितः ॥ आज्ञाप्योऽ हंमहर्षीणांसर्वकामकरःसुखम् ॥ १३ ॥ इदंराज्यंचसकलंजीवितंचहृदिस्थितम् ॥ सर्वमेतद्द्विजार्थंमेसत्यमेतद्ब्रवीमिवः ॥ १४ ॥ तस्यतद्वचनंश्रु त्वासाधुकारोमहानभूत् ॥ ऋषीणामुग्रतपसांयमुनातीरवासिनाम् ॥ १५ ॥ ऊचुश्चैवमहात्मानोहर्षेणमहतावृताः ॥ उपपन्नंनरश्रेष्ठतवैवभुवि नान्यतः ॥ १६ ॥

च्यवनंपुरस्कृत्येहमहाराजतवदर्शनंप्रत्यस्मांश्चोदयंतिप्रेरयंति ॥ ४ ॥ ५ ॥ भार्गवप्रमुखाः च्यवनप्रमुखाः ॥ ६ ॥ समधिकंकिंचिदधिकंशतम् ॥ ७ ॥ पूर्णकलशैरुपलक्षिताः ॥ ८ ॥ फलमूलं गृहीत्वारामस्याभ्याहरन् ॥ ९ ॥ १० ॥ उपविश्यताम् एषुभवद्भिरितिशेषः ॥ ११ ॥ रुचिराख्यासुरुचिरशोभासु ॥ १२ ॥ किंकरोमिकिंकुर्याम् सर्वकामकरःसर्वाभीष्टसाधकः ॥ १३ ॥ हृ दिस्थितम् हृत्पुंडरीकप्रदेशेस्थितमित्यर्थः ॥ १४ ॥ साधुकारः साधुसाध्वितिशब्दप्रयोगः ॥ १५ ॥ तवैवोपपन्नंत्वय्येवेदृशंवचोयुक्तंनान्यतःनान्यस्य ॥ १६ ॥

कार्यस्यगौरवंमत्वान च्छ्रवणादुत्तरमपिकरिष्यामीतिप्रतिज्ञांनाभ्यरोचयन्नकुर्वंति अशक्यत्वेनेतिभावः भवांस्त्वर्थमश्रुत्वैवप्रतिज्ञातवानित्याश्चर्यम् ॥ १७ ॥ तदाह त्वयेति ॥ १८ ॥ ॥ इ
तिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेषष्टितमःसर्गः ॥ ६० ॥ ॥ ७ ॥ ॥ अथऋषिभिःस्वकार्यनिवेदनम् एवंब्रुवद्भिः भयत्राणमितिशेषः

बहवःपार्थिवाराजन्नतिक्रांतामहाबलाः॥ कार्यस्यगौरवंमत्वाप्रतिज्ञांनाभ्यरोचयन्॥ १७॥ त्वयापुनर्ब्राह्मणगौरवादियंकृताप्रतिज्ञाह्यनवेक्ष्य
कारणम्॥ ततश्चकर्ताह्यसिनात्रसंशयोमहाभयात्रातुमृषींस्त्वमर्हसि ॥ १८ ॥ ॥इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेष
ष्टितमःसर्गः॥ ६०॥ ॥ ७॥ ॥ब्रुवद्भिरेवमृषिभिःकाकुत्स्थोवाक्यमब्रवीत्॥ किंकार्यंब्रूतमुनयोभयंतावदपैतुवः॥ १ ॥ तथाब्रुवतिकाकुत्स्थे
भार्गवोवाक्यमब्रवीत्॥ भयानांशृणुयन्मूलंदेशस्यचनरेश्वर॥ २॥ पूर्वंकृतयुगेराजन्दैतेयःसुमहामतिः॥ लोलापुत्रोभवज्ज्येष्ठोमधुर्नाममहासुरः
॥ ३ ॥ ब्रह्मण्यश्चशरण्यश्चबुद्ध्याचपरिनिष्ठितः॥ सुरैश्चपरमोदारैःप्रीतिस्तस्यातुलाभवत्॥ ४॥ समधुर्वीर्यसंपन्नोधर्मेचसुसमाहितः॥ बहुमाना
च्चरुद्रेणदत्तस्तस्याद्भुतोवरः॥ ५॥ शूलंशूलाद्विनिष्कृष्यमहावीर्यंमहाप्रभम्॥ ददौमहात्मासुप्रीतोवाक्यंचैतदुवाचह ॥ ६ ॥ त्वयायमतुलोधर्मो
मत्प्रसादकरःशुभः॥ प्रीत्यापरमयायुक्तोददाम्यायुधमुत्तमम्॥ ७॥ यावत्सुरैश्चविप्रैश्चनविरुध्येर्महासुर ॥ तावच्छूलंतवेदंस्यादन्यथानाशमेष्य
ति॥ ८॥ यश्चमामभियुंजीतयुद्धायविगतज्वरः॥ तंशूलोभस्मसात्कृत्वापुनरेष्यतितेकरम्॥ ९ ॥ एवंरुद्राद्वरंलब्ध्वाभूयएवमहासुरः॥ प्रणिपत्य
महादेवंवाक्यमेतदुवाचह॥ १०॥ भगवन्ममवंशस्यशूलमेतदनुत्तमम्॥ भवेत्तुसततंदेवसुराणामीश्वरोह्यसि॥ ११॥ तंब्रुवाणंमधुंदेवःसर्वभूतप
तिःशिवः॥ प्रत्युवाचमहादेवोनैतदेवंभविष्यति॥ १२ ॥ माभूत्तेविफलावाणीमत्प्रसादकृताशुभा॥ भवतःपुत्रमेकंतुशूलमेतद्भविष्यति॥ १३ ॥
यावत्करस्थःशूलोयंभविष्यतिसुतस्यते॥ अवध्यःसर्वभूतानांशूलहस्तोभविष्यति ॥ १४ ॥

ऋषिभिःप्रेरितइतिशेषः किंकार्यंकिंजन्यभयत्राणंकार्यमित्यर्थः ॥ १ ॥ देशस्यचचादस्माकंभयानांयन्मूलंतच्छृणु ॥ २ ॥ लोलायाःपुत्रोलोलापुत्रः ॥ ३ ॥ ४ ॥ ५ ॥ विनिष्कृष्यतच्छ
क्तिमाकृष्य ॥ ६ ॥ यतस्त्वयामत्प्रसादकरोधर्मकृतोऽतआयुधंददामि ॥ ७ ॥ यावन्नविरुध्येःविरोधंनकुर्याःअन्यथानाशमदर्शनम् ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ मत्प्रसादकृतामत्प्रसा
दजसंतोषोक्ता भविष्यतिप्राप्स्यति ॥ १३ ॥ १४ ॥

॥ १५॥ कुंभीनसीमाल्यवत्सुतायाअनलायाःसुतारावणस्वसापूर्वंमधुनाहृतेत्युक्ता तदेवाहानलायामिति कुंभीनसीपितरमाह विश्वावसोरिति॥ १६॥ १७॥ १८॥वरंयावच्छूलंतवहस्तेतावदवध्य
त्वंतवेत्येवंरूपंवरदत्तांतंन्यवेदयन् ॥ १९ ॥ २० ॥ त्वंप्रमाणम् यथोचितकरणेइतिशेषः ॥ २१ ॥ २२ ॥ २३ ॥ भयजंभयजनकम् ॥ २४ ॥ ॥ इतिश्रीरा०श्रीरामी०रा०वा०आ०उत्तर

एवंमधुर्वरंलब्ध्वादेवात्सुमहदद्भुतम् ॥ भवनंसोऽसुरश्रेष्ठःकारयामाससुप्रभम् ॥ १५ ॥ तस्यपत्नीमहाभागाप्रियाकुंभीनसीतिया ॥ विश्वावसोरपत्यंसाप्यनलायांमहाप्रभा ॥ १६ ॥ तस्याःपुत्रोमहावीर्योलवणोनामदारुणः ॥ बाल्यात्प्रभृतिदुष्टात्मापापान्येवसमाचरत् ॥ १७ ॥ तंपुत्रंदुर्विनीतंतुदृष्ट्वाक्रोधसमन्वितः ॥ मधुःसशोकमापेदेनचैनंकिंचिदब्रवीत् ॥ १८ ॥ सविहायइमंलोकंप्रविष्टोवरुणालयम् ॥ शूलंनिवेश्यलवणेवरंतस्मैन्यवेदयत् ॥ १९ सप्रभावेणशूलस्यदौरात्म्येनात्मनस्तथा ॥ संतापयतिलोकांस्त्रीन्विशेषेणचतापसान् ॥ २० ॥ एवंप्रभावोलवणःशूलंचैवतथाविधम् ॥ श्रुत्वाप्रमाणंकाकुत्स्थत्वंहिनःपरमागतिः ॥ २१ ॥ बहवःपार्थिवारामभयार्तैर्ऋषिभिःपुरा ॥ अभयंयाचितावीरत्रातारंनचविद्महे ॥ २२ ॥ तवयंरावणंश्रुत्वाहतंसबलवाहनम् ॥ त्रातारंविद्महेतातनान्यंभुविनराधिपम् ॥ तत्परित्रातुमिच्छामोलवणाद्भयपीडितान् ॥ २३ ॥ इतिरामनिवेदितंतुतेभयजंकारणमुत्थितंचयत् ॥ विनिवारयितुंभवान्क्षमःकुरुतंकाममहीनविक्रम ॥ २४ ॥ ॥ इत्यार्षेश्रीम०वा०आ०उ०एकषष्टितमःसर्गः ॥ ६१ ॥ ॥ ५ ॥ ॥ तथोक्तेतानृषीन्रामःप्रत्युवाचकृतांजलिः ॥ किमाहारःकिमाचारोलवणःक्वचवर्तते ॥ १ ॥ राघवस्यवचःश्रुत्वाऋषयःसर्वएवते ॥ ततोनिवेदयामासुर्लवणोववृधेयथा ॥ २ ॥ आहारःसर्वसत्वानिविशेषेणचतापसाः ॥ आचारोरौद्रतानित्यंवासोमधुवनेतथा ॥ ३ ॥ हत्वाबहुसहस्राणिसिंहव्याघ्रमृगांडजान् ॥ मानुषांश्चैवकुरुतेनित्यमाहारमाह्निकम् ॥ ४ ॥ ततोंतराणिसत्वानिखादतेसमहाबलः ॥ संहारेसमनुप्राप्तेव्यादितास्यइवांतकः ॥ ५ ॥ तच्छ्रुत्वाराघवोवाक्यमुवाचसमहामुनीन् ॥ घातयिष्यामितद्रक्षोव्यपगच्छतुवोभयम् ॥ ६ ॥ प्रतिज्ञायतदातेषांमुनीनामुग्रतेजसाम् ॥ सभ्रातॄन्सहितान्सर्वानुवाचरघुनंदनः ॥ ७ ॥

कांडेएकषष्टितमःसर्गः ॥ ६१ ॥ ॥ ५ ॥ ॥ अथशत्रुघ्नस्यतद्वधार्थंप्रेषणम् तथोक्तेइति परित्राणमिच्छामइत्युक्ते ॥ १ ॥ यथाववृधेयादृगाहारादिनाऽवर्धततन्निवेदयामासुः ॥ २ ॥ ३ ॥ ॥ ४ ॥ ततोंतराणि अन्यान्यपीत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥

कस्यांशइतिपृष्टास्स्वयमेवनिश्चिनोति भरतस्येति लक्ष्मणेनमयावारावणवधवल्लवणवधोभरतशत्रुघ्नाभ्यांकार्यइतिभावः ॥ ८ ॥ ९ ॥ आसनंहित्वाआसनादुत्थायेत्यर्थः ॥ १० ॥ ११ ॥ पूर्वं त्वद्वियोगदुःखितस्यभरतस्यपुनरपिक्लेशायप्रेषणमयुक्तमित्याशयेनाहार्येणेति आर्येणत्वयाशून्यायोध्याभरतेनपालिता आर्यस्यागमनंप्रतितावत्पर्यंतम् ॥ १२ ॥ १३ ॥ १४ ॥ प्रेष्येविशि



कोऽहंतालवणंवीरःकस्यांशःसविधीयताम् ॥ भरतस्यमहाबाहोःशत्रुघ्नस्यचधीमतः ॥ ८ ॥ राघवेणैवमुक्तस्तुभरतोवाक्यमब्रवीत् ॥ अहमेनंवधिष्यामिममांशःसविधीयताम् ॥ ९ ॥ भरतस्यवचःश्रुत्वाधैर्यशौर्यसमन्वितम् ॥ लक्ष्मणावरजस्तस्थौहित्वासौवर्णमासनम् ॥ १० ॥ शत्रुघ्नस्त्वब्रवीद्वाक्यंप्रणिपत्यनराधिपम् ॥ कृतकर्मामहाबाहुर्मध्यमोरघुनंदन ॥ ११ ॥ आर्येणहिपुराशून्यात्वयोध्यापरिपालिता ॥ संतापंहृदयेकृत्वा आर्यस्यागमनंप्रति ॥ १२ ॥ दुःखानिचबहूनीहअनुभूतानिपार्थिव ॥ शयानोदुःखशय्यासुनंदिग्रामेमहायशाः ॥ १३ ॥ फलमूलाशनोभूत्वाजटीचीरधरस्तथा ॥ अनुभूयेदृशंदुःखमेषराघवनंदनः ॥ १४ ॥ प्रेष्येमयिस्थितेराजन्नभूयःक्लेशमाप्नुयात् ॥ तथाब्रुवतिशत्रुघ्नेराघवःपुनरब्रवीत् ॥ १५ ॥ एवंभवतुकाकुत्स्थक्रियतांममशासनम् ॥ राज्येत्वामभिषेक्ष्यामिमधोस्तुनगरेशुभे ॥ १६ ॥ निवेशयमहाबाहोभरतंयद्यवेक्षसे ॥ शूरस्त्वंकृतविद्यश्चसमर्थश्चनिवेशने ॥ १७ ॥ नगरंयमुनाजुष्टंतथाजनपदान्शुभान् ॥ योहिवंशंसमुत्पाद्यपार्थिवस्यनिवेशने ॥ १८ ॥ नविधत्तेनृपंतत्रनरकंसहिगच्छति ॥ सत्वंहत्वामधुसुतंलवणंपापनिश्चयम् ॥ १९ ॥ राज्यंप्रशाधिधर्मेणवाक्यंमेयद्यवेक्षसे ॥ उत्तरंचनवक्तव्यंशूरवाक्यांतरेमम ॥ २० ॥ बालेनपूर्वजस्याज्ञाकर्तव्यानात्रसंशयः ॥ अभिषेकंचकाकुत्स्थप्रतीच्छस्वममोद्यतम् ॥ २१ ॥ वसिष्ठप्रमुखैर्विप्रैर्विधिमंत्रपुरस्कृतम् ॥ २२ ॥ ॥ इत्यार्षेश्रीम० वा० आ० उत्तरकांडेद्विषष्टितमःसर्गः ॥ ६२ ॥

प्येभरतस्यनियोज्ये ॥ १५ ॥ १६ ॥ यद्यवेक्षसे अक्लेशनीयत्वेनेतिशेषः तदाभरतंनिवेशयाचैवस्थापयेत्यर्थः निवेशनेनूतननगरनिवेशनेत्वंसमर्थः ॥ १७ ॥ मधोर्नगरेत्वामभिषेक्ष्यामीतियदुक्तंतत्रहेतुमाह योहीति निवेशनेनगरे ॥ १८ ॥ नृपंतत्रउत्पादितवंशनृपराज्ये ॥ १९ ॥ उत्तरंनवक्तव्यम् लवणंहत्वात्वत्समीपएवमयास्थेयमित्यादिनवाच्यमित्यर्थः ॥ २० ॥ २१ ॥ विधिमंत्रपुरस्कृतंविधिनामंत्रेणपुरस्कृतम् ॥ २२ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येउत्तरकांडेद्विषष्टितमःसर्गः ॥ ६२ ॥ ॥ ७ ॥

अथरामणस्यसन्निधावेवमधुराज्येशत्रुघ्नमभिषिच्यलवणवधोपायोपदेशपूर्वकंतद्वधार्थंदिव्यास्त्रप्रदानम् एवमिति परांव्रीडांअनुचितराज्याभिषेकोक्तिश्रवणजांलज्जामतएवमंदंमंदमुवाच
॥ १ ॥ तदेवाह अधर्ममिति विद्धवेद्मि अस्मिन्नित्येतद्विशदयन्नधर्महेतुमाह कथमिति कनीयानभिषिच्यते नकथमपीत्यर्थः अतएवाधर्मइत्यर्थः ॥२॥ तवशासनंचावश्यंकरणीयंयतस्तवशा
सनंवेदशासनवद्दुरतिक्रमंअतिक्रमितुमशक्यम एवंचोभयतःपाशारज्जुरियंमेजातेत्यर्थः ॥ ३ ॥ ज्येष्ठेविद्यमानेकनिष्ठाभिषेकोऽधर्मस्तथाज्येष्ठवाक्याकरणंचाधर्मइतित्वयाकथमवगतंतत्राह
त्वत्तइति सद्गुरोस्त्वत्तःश्रुतिभ्यश्चममैवंश्रवणमितिभावः एवमधर्मसंकटप्राप्तिरपिमेस्वदोषमूलेत्याह नोत्तरंहीति मध्यमेभ्रातरिभरतेघोरंलवणंहंतास्मीतिप्रतिजानतिसतिहियस्मान्मयाज्येष्ठव
चनमुल्लंघ्योत्तरंनवाच्यंनवक्तुंयोग्यम् तद्वचस्तिरस्काररूपत्वात् ॥ ४ ॥ तथापिमृधेयुद्धेघोरंलवणंहंतास्मीत्येतद्दुर्वचोव्याहृतंतस्यास्यदुरुक्तस्यफलभूताइयंदुर्गतिर्ज्येष्ठातिक्रमहेतुनानिरयप्राप

एवमुक्तस्तुरामेणपरांव्रीडामुपागमत् ॥ शत्रुघ्नोवीर्यसंपन्नोमंदंमंदमुवाचह ॥ १ ॥ अधर्मंविद्मकाकुत्स्थअस्मिन्नर्थेनरेश्वर ॥ कथंतिष्ठत्सुज्येष्ठेषुक
नीयानभिषिच्यते ॥ २ ॥ अवश्यंकरणीयंचशासनंपुरुषर्षभ ॥ तवचैवमहाभागशासनंदुरतिक्रमम् ॥ ३ ॥ त्वत्तोमयाश्रुतंवीरश्रुतिभ्यश्चमयाश्रुत
म् ॥ नोत्तरंहिमयावाच्यंमध्यमेप्रतिजानति ॥ ४ ॥ व्याहृतंदुर्वचोघोरंहंतास्मिलवणंमृधे ॥ तस्यैवंमेदुरुक्तस्यदुर्गतिःपुरुषर्षभ ॥ ५ ॥ उत्तरंनहिव
क्तव्यंज्येष्ठेनाभिहितेपुनः ॥ अधर्मसहितंचैवपरलोकविवर्जितम् ॥ ६ ॥ सोहंद्वितीयंकाकुत्स्थनवक्ष्यामीतिचोत्तरम् ॥ माद्वितीयेनदंडोवैनिपतेन्म
यिमानद ॥ ७ ॥ कामकारोह्यहंराजंस्तवास्यपुरुषर्षभ ॥ अधर्मंजहिकाकुत्स्थमत्कृतेरघुनंदन ॥ ८ ॥ एवमुक्तेतुशूरेणशत्रुघ्नेनमहात्मना ॥ उवाच
रामःसंहृष्टोभरतंलक्ष्मणंतथा ॥ ९ ॥ संभारानभिषेकस्यआनयध्वंसमाहिताः ॥ अद्यैवपुरुषव्याघ्रमभिषेक्ष्यामिराघवम् ॥ १० ॥

काभिषेकप्राप्तिस्तद्व्यापकत्वद्वाक्यातिक्रमप्राप्तिर्वाजातेतिशेषः ॥ ५ ॥ अतिपीडावशादुक्तमेवपुनर्वदति उत्तरंहीति ज्येष्ठेनभरतेनत्वयावाभिहितेउत्तरंनवक्तव्यंवक्तुमनर्हमेव किंचतन्मूलकंत्व
याऽधर्मसहितमतएवपरलोकविवर्जितमभिषेकशासनंकृतम् तच्चदुरतिक्रममितिशेषः ॥ ६ ॥ यदेवमतःसोहंभरतोक्तेःप्रथमंकृतोत्तरवचनःहेकाकुत्स्थतवज्येष्ठस्योक्तेरभिषेकंप्रतीच्छेत्यस्याःद्वि
तीयमुत्तरमितिहेतोर्नवक्ष्यामि कुतस्तत्राह माद्वितीयेनेति यथाभरतेजिगमिषत्यहंगमिष्यामीत्युत्तरेणप्रथमेनराज्याभिषेकापत्तिरूपोदंडःपतितस्तथेदानींत्वयाभिषेकंप्रतीच्छेत्युक्तेतदनंगीकारो
त्तरेणद्वितीयेनममदंडोमानिपतेदिति ॥ ७ ॥ यदेवमतोहेराजन्नहमस्यतवकामकारोभीष्टनियोगकर्तास्मियतोऽतोहेरघुनंदनमत्कृतेमदनुष्ठितेराज्याभिषेकस्वीकारेऽधर्मंजहिममाधर्मसंबंधोयथा
नभवेत्तथाकुरु इहामुत्रसर्वलोकस्यमय्यन्याय्यकारित्वबुद्धिपरिहर ॥ ८ ॥ एवमुक्तेस्वातंत्र्यंविहायाभिषेकांगीकारवाक्येउक्ते ॥ ९ ॥ आनयध्वमितिबहुवचनंसुमंत्राद्यभिप्रायेण ॥ १० ॥

॥ ११ ॥ अभिषेकसमारंभंअभिषेकोपकरणवंतंपुरोधसंपुरस्कृत्य ॥ १२ ॥ राजानःक्षत्रियाब्राह्मणाश्चराजभवनंप्रविष्टाः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ आशंसुःआशशंसुःनिश्चितवं
तः तेजःशत्रुसंहारोचितबलवीर्यम् ॥ १८ ॥ अयंशरोदीयतइतिशेषः ॥ १९ ॥ शरस्यामोघत्वहेतुमाह सृष्टइति स्वयंभूर्जन्मरहितःअजितोविष्णुर्यदाप्रलयकालेमहार्णवेशेते यंतदासुराअसु
राश्चनापश्यन् ॥ कैमुतिकन्यायेनसर्वभूतादृश्यः महार्णवेशयनंचवायुरूपेण प्रजापतिर्वायुर्भूत्वाचरेदितिश्रुतेरितिकतकः तेनविष्णुनासाक्षादयंशरोत्तमःसृष्टः ॥ २० ॥ तदाकिमर्थंतत्सृष्टिस्त

पुरोधसंचकाकुत्स्थनैगमानृत्विजस्तथा ॥ मंत्रिणश्चैवतान्सर्वानानयध्वंममाज्ञया ॥ ११ ॥ राज्ञःशासनमाज्ञायतथाऽकुर्वन्महारथाः ॥ अभिषे
कसमारंभंपुरस्कृत्यपुरोधसम् ॥ १२ ॥ प्रविष्टाराजभवनंराजानोब्राह्मणास्तथा ॥ ततोभिषेकोववृधेशत्रुघ्नस्यमहात्मनः ॥ १३ ॥ संप्रहर्षकरःश्री
मानराघवस्यपुरस्यच ॥ अभिषिक्तस्तुकाकुत्स्थोबभौचादित्यसन्निभः ॥ १४ ॥ अभिषिक्तःपुरास्कंदःसेंद्रैरिवदिवौकसैः ॥ अभिषिक्तेतुशत्रुघ्नेरामे
णाक्लिष्टकर्मणा ॥ १५ ॥ पौराःप्रमुदिताश्चासन्ब्राह्मणाश्चबहुश्रुताः ॥ कौसल्याचसुमित्राचमंगलंकेकयीतथा ॥ १६ ॥ चक्रुस्ताराजभवनेयाश्चा
न्याराजयोषितः ॥ ऋषयश्चमहात्मानोयमुनातीरवासिनः ॥ १७ ॥ हतंलवणमाशंसुःशत्रुघ्नस्याभिषेचनात् ॥ ततोभिषिक्तंशत्रुघ्नमंकमारोप्यरा
घवः ॥ उवाचमधुरांवाणींतेजस्तस्याभिपूरयन् ॥ १८ ॥ अयंशरस्त्वमोघस्तेदिव्यःपरपुरंजयः ॥ अनेनलवणंसौम्यहंतासिरघुनंदन ॥ १९ ॥ सृष्टः
शरोयंकाकुत्स्थयदाशेतेमहार्णवे ॥ स्वयंभूरजितोदिव्योयंनापश्यन्सुरासुराः ॥ २० ॥ अदृश्यःसर्वभूतानांतेनायंहिशरोत्तमः ॥ सृष्टःक्रोधाभिभूतेन
विनाशार्थंदुरात्मनोः ॥ २१ ॥ मधुकैटभयोर्वीरविघातेसर्वरक्षसाम् ॥ स्रष्टुकामेनलोकांस्त्रींस्तौचानेनहतौयुधि ॥ २२ ॥ तौहत्वाजनभोगार्थेकैटभं
तुमधुंतथा ॥ अनेनशरमुख्येनततोलोकांश्चकारसः ॥ २३ ॥

त्राह सृष्टइति त्रींल्लोकान्स्रष्टुकामेनभगवताहिरण्यगर्भेणतस्याःसृष्टेर्मधुकैटभयोःसर्वरक्षसांचसकाशाद्विघातेविघ्नेप्राप्तेतयोर्दुरात्मनोर्विनाशार्थंक्रोधाभिभूतेनायंशरःसृष्टः सत्यसंकल्पत्वाच्चा
नेनतौहतौ सृष्टःक्रोधाभिभूतेनप्रभोसर्वदुरात्मनोरितिपाठेअभिषिक्तत्वाच्छत्रुघ्नसंबोधनंप्रभोइति ॥ २१ ॥ २२ ॥ उपसंहरति तौहत्वेति जनभोगार्थंजनानांभोग्यभोगस्थानादिसंपादनद्वाराभो
गसिद्ध्यर्थंलोकांश्चकार निष्प्रत्यूहंससर्जेत्यर्थः अनेनस्वस्यविष्णुत्वंदृढीकृतम् ॥ २३ ॥

नायंमुक्तस्तत्रहेतुर्लोकानांत्रासोभवेदिति अल्पलक्ष्येमहास्त्रप्रयोगेणतन्मात्रहननेनशाम्यतिकिंतुभूतानिसंहरति अतोभूतदययानक्षिप्तइतिभावः अनेनरावणादपिलवणस्यमहाबलत्वेनदिव्य शरपर्याप्तविषयत्वमुक्तम् ॥ २४ ॥ अथनिकुंभिलायांसमाप्तयागस्यैंद्रजितइवगृहीतशूलस्यतस्यदुर्जयत्वान्निकुंभिलानिरोधमिवपुरप्रवेशनिरोधमुपदिशति यच्चतस्येत्यादि मधोर्दत्तमित्य न्वयः ॥ २५ ॥ २६ ॥ २७ ॥ आयुधविनाकृतंआयुधरहितं युध्यस्वेतिशेषः तत्प्रकारमाह अप्रविष्टमिति पुरमप्रविष्टंप्रतीक्षन्पूर्वमेवद्वारितिष्ठ ॥ २८ ॥ उक्तमेवार्थंदार्ढ्यायस्पष्टमाहाप्रविष्टं चेति ॥ २९ ॥ यदित्वेवमुक्तरीत्याकृतमनुष्ठितंभवतितदाऽवश्यंविनाशमुपयास्यति ॥ ३० ॥ विपर्ययःपरिहारः ननुकिमनेननिर्बंधेन बाणेनशूलंछित्वातमपिहनिष्यामितत्राह श्रीमतइतिकृत्यं

नायंमयाशरःपूर्वंरावणस्यवधार्थिना ॥ मुक्तःशत्रुघ्नभूतानांमहान्त्रासोभवेदिति ॥ २४ ॥ यच्चतस्यमहच्छूलंत्र्यंबकेणमहात्मना ॥ दत्तंशत्रुविना शायमधोरायुधमुत्तमम् ॥ २५ ॥ तत्सन्निक्षिप्यभवनेपूज्यमानंपुनःपुनः ॥ दिशःसर्वासमासाद्यप्राप्नोत्याहारमुत्तमम् ॥ २६ ॥ यदातुयुद्धमाकां क्षन्यदिकश्चित्समाह्वयेत् ॥ तदाशूलंगृहीत्वातुभस्मरक्षःकरोतिहि ॥ २७ ॥ सत्वंपुरुषशार्दूलतमायुधविनाकृतम् ॥ अप्रविष्टंपुरंपूर्वंद्वारितिष्ठधृता युध ॥ २८ ॥ अप्रविष्टंचभवनंयुद्धायपुरुषर्षभ ॥ आह्वयेथामहाबाहोततोहंतासिराक्षसम् ॥ २९ ॥ अन्यथाक्रियमाणेतुअवध्यःसभविष्यति ॥ यदित्वेवंकृतंवीरविनाशमुपयास्यति ॥ ३० ॥ एतत्तेसर्वमाख्यातंशूलस्यचविपर्ययः ॥ श्रीमतःशितिकंठस्यकृत्यंहिदुरतिक्रमम् ॥ ३१ ॥ ॥ इत्या र्षेश्रीमद्रामायणेवाल्मीकीयेआदिकाव्येउत्तरकांडेत्रिषष्टितमःसर्गः ॥ ६३ ॥ ॥ ७ ॥ ॥ एवमुक्त्वाचकाकुत्स्थंप्रशस्यचपुनःपुनः ॥ पु नरेवापरंवाक्यमुवाचरघुनंदनः ॥ १ ॥ इमान्यश्वसहस्राणिचत्वारिपुरुषर्षभ ॥ रथानांद्विसहस्रेचगजानांशतमुत्तमम् ॥ २ ॥ अंतरापणवीथ्यश्च नानापण्योपशोभिताः ॥ अनुगच्छंतुकाकुत्स्थंतथैवनटनर्तकाः ॥ ३ ॥

शूलमाहात्म्यंदुरतिक्रमंअतिक्रमितुमशक्यं शक्तावप्यनुचितंचेत्यर्थः ईश्वरकृतमर्यादापालनार्थमेवास्मदवतारादितिभावः ॥ ३१ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मी कीयेआदिकाव्येउत्तरकांडेत्रिषष्टितमःसर्गः ॥ ६३ ॥ ॥ ७ ॥ ॥ अथशत्रुघ्नप्रस्थानं एवमिति प्रशस्यस्तुत्वा ॥ १ ॥ २ ॥ अंतरानगरमध्यवर्तिन्योयाआपणवीथ्योवीथ्योवीथिस्था वणिजःनानाविधैःपण्यैःक्रयविक्रयार्हद्रव्यैरुपशोभितायुक्ताःअनुगच्छंतु नानावर्णोपशोभिताइतिपाठेनानावर्णैर्ब्राह्मणादिभिरुपशोभिताइत्यर्थइतिकतकः पण्येतिपाठएवयुक्तः नटाःवा क्यार्थाभिनयकर्तारः नर्तकाःपदार्थाभिनयकर्तारः ॥ ३ ॥

सुवर्णस्य उत्कृष्टवर्णस्य नियुतंलक्षमित्येके दशलक्षमित्यन्ये पर्याप्तधनवाहनः जीवनपर्याप्तधनःयुद्धपर्याप्तवाहनइत्यर्थः ॥ ४ ॥ बलंसुभृतंत्दृष्टंतुष्टंअतएवत्वय्यनुद्धतंयथाभवतितथाकुरु वेतनादिप्रदानेनेत्यर्थः किंचसंभाषायाःसम्यग्वचनस्यसंप्रदानेनोक्त्यारंजयतत् ॥ ५ ॥ किमेवंबलादरेणतत्राह नह्यर्थाइति यत्ररिपुसंकटेभृत्यास्तिष्ठंतितत्रार्थादयोनतिष्ठंतीत्येतेसर्वेआदर्तव्या इत्यर्थः ॥ ६ ॥ ननुकिंसेनयानहिलवणेनयोत्स्यामिनेत्याहातइति अतोऽयोध्यायाइदानीमेवमहतींचमूंप्रस्थाप्यएकएवत्वंमधुनोवनंमधोर्वनंगच्छ अयंभावः सुखेनजाह्नवीतरणायग्रीष्मकालएवप्रस्थायजाह्नवींमुत्तीर्यकिंचित्कालंतत्रस्थित्वातद्बलंतत्रैवसंस्थाप्यस्वयमेकएवमधुवनंप्राप्यवर्षाप्रादुर्भावेलवणंजहीति ॥ ७ ॥ तदेवाह यथेति अशंकितंत्वदागमनशंकारहितंयथात

हिरण्यस्यसुवर्णस्यनियुतंपुरुषर्षभ ॥ आदायगच्छशत्रुघ्नपर्याप्तधनवाहनः ॥ ४ ॥ बलंचसुभृतंवीरहृष्टतुष्टमनुद्धतम् ॥ संभाषासंप्रदानेनरंजयस्वनरोत्तम ॥ ५ ॥ नह्यर्थास्तत्रतिष्ठंतिनदारानचबांधवाः ॥ सुप्रीतोभृत्यवर्गस्तुयत्रतिष्ठतिराघव ॥ ६ ॥ अतोहृष्टजनाकीर्णांप्रस्थाप्यमहतींचमूम् ॥ एकएवधनुष्पाणिर्गच्छत्वंमधुनोवनम् ॥ ७ ॥ यथात्वांनप्रजानातिगच्छंतंयुद्धकांक्षिणम् ॥ लवणस्तुमधोःपुत्रस्तथागच्छेरशंकितम् ॥ ८ ॥ नतस्यमृत्युरन्योऽस्तिकश्चिद्धिपुरुषर्षभ ॥ दर्शनंयोभिगच्छेतसवध्योलवणेनहि ॥ ९ ॥ सग्रीष्मेअपयातेतुवर्षारात्रउपागते ॥ हन्यास्त्वंलवणंसौम्यसहिकालोऽस्यदुर्मतेः ॥ १० ॥ महर्षींस्तुपुरस्कृत्यप्रयांतुतवसैनिकाः ॥ यथाग्रीष्मावशेषेणतरेयुर्जाह्नवीजलम् ॥ ११ ॥ तत्रस्थाप्यबलंसर्वंनदीतीरेसमाहितः ॥ अग्रतोधनुषासार्धंगच्छत्वंलघुविक्रम ॥ १२ ॥ एवमुक्तस्तुरामेणशत्रुघ्नस्तान्महाबलान् ॥ सेनामुख्यान्समानीयततोवाक्यमुवाचह ॥ १३ ॥ एतेवोगणितावासायत्रतत्रनिवत्स्यथ ॥ स्थातव्यंचाविरोधेनयथाबाधानकस्यचित् ॥ १४ ॥ तथातांस्तुसमाज्ञाप्यप्रस्थाप्यचमहद्बलम् ॥ कौसल्यांचसुमित्रांचकैकेयींचाभ्यवादयत् ॥ १५ ॥ रामंप्रदक्षिणीकृत्यशिरसाभिप्रणम्यच ॥ लक्ष्मणंभरतंचैवप्रणिपत्यकृतांजलिः ॥ १६ ॥

थागच्छेः ॥ ८ ॥ तस्यलवणस्यान्योऽशंकितनतयातदुपरोधकव्यतिरिक्तोमृत्युर्नास्तीत्येतदुपपादयति दर्शनमिति युद्धाकांक्षीसमायातीतितत्कर्तृकज्ञानविषयोयोभवेदित्यर्थः ॥ ९ ॥ वसंतेप्रस्थितस्यापियुद्धकालोनायमित्याह सइति वर्षारात्रेवर्षाकालेवर्षासुकेपियुद्धार्थंनयतंतइतिनिर्भयोनिःशूलएवचरत्यतःसएवास्यवधकालइतिभावः ॥ १० ॥ तर्हिनेदानींगंतव्यमित्याशंक्यस्वदेशेकार्यांतरसाधनार्थमेवप्रथमतःशनैःसेनामात्रगमनंकार्यमित्याह महर्षीनिति ॥ ११ ॥ तत्रजाह्नवीपरतीरेअयतःततःपरभूतेमार्गे धनुषासार्धं नान्येनबलेनेत्यर्थः ॥ १२ ॥ १३ ॥ एतेप्रसिद्धावोयुष्माकंवासागणिताएवसंति यत्रयत्रवासेवत्स्यथतत्रतत्राविरोधेनस्थातव्यं तदेवाह यथेति इदंसैनिकान्प्रतिवाक्यम् ॥ १४ ॥ अनेनकेवलसेनैवप्रस्थिताशत्रुघ्नस्तुपश्चादयोध्यातएकलएवगमिष्यतीतिज्ञायते ॥ १५ ॥ १६ ॥

तंघटंहस्तेइतिजाताविकवचनं मनोजवान्वानरान्व्यादिदेश ॥ १२ ॥ समुद्रसलिलंतदानयनं ॥ १३ ॥ समुद्राच्चतुःसमुद्रेभ्यइत्यर्थः परमासने विभीषणंसंस्थाप्यतमभ्यषिंचत् ॥ १४ ॥ १५ ॥ मंत्रदृष्टेनवेददृष्टेन ॥ १६ ॥ भक्तायेचास्यविभीषणस्यामात्यव्यतिरिक्ताभक्तास्तेपीत्यर्थः ॥ १७ ॥ १८ ॥ प्रकृतयःप्रकृतीःस्वपुरराष्ट्रप्रजाः ॥ १९ ॥ पौरास्तस्मैविभीषणायाजह्रुःरामस

तथेत्युक्त्वासुसंहृष्टःसौवर्णघटमाददे॥ तंघटंवानरेंद्राणांहस्तेदत्वामनोजवान्॥ १२ ॥ व्यादिदेशमहासत्त्वःसमुद्रसलिलंतदा॥ अतिशीघ्रंततोग त्वावानरास्तेमनोजवाः॥ १३ ॥ आगतास्तुजलंगृह्यसमुद्राद्वानरोत्तमाः॥ ततस्त्वेकंघटंगृह्यसंस्थाप्यपरमासने॥ १४ ॥ घटेनतेनसौमित्रिरभ्य षिंचद्विभीषणम्॥ लंकायांरक्षसांमध्येराजानंरामशासनात् ॥ १५ ॥ विधिनामंत्रदृष्टेनसुहृद्गणसमावृतः॥ अभ्यषिंचंस्तदासर्वेराक्षसावानरा स्तथा॥ १६ ॥ प्रहर्षमतुलंगत्वातुष्टुवूराममेवहि ॥ तस्यामात्याजहृषिरेभक्तायेचास्यराक्षसाः ॥ १७ ॥ दृष्ट्वाभिषिक्तंलंकायांराक्षसेंद्रंविभीषण म्॥ राघवःपरमांप्रीतिंजगामसहलक्ष्मणः॥ १८ ॥ सांत्वयित्वाप्रकृतयस्ततोराममुपागमत्॥ दध्यक्षतान्मोदकांश्चलाजाःसुमनसस्तथा॥ १९ ॥ आजह्रुरथसंहृष्टाःपौरास्तस्मैनिशाचराः॥ सतान्गृहीत्वादुर्धर्षोराघवायन्यवेदयत् ॥ २० ॥ मांगल्यंमंगलंसर्वंलक्ष्मणायचवीर्यवान्॥ कृतका र्यंसमृद्धार्थंदृष्ट्वारामोविभीषणम्॥ प्रतिजग्राहतत्सर्वंतस्यैवप्रतिकाम्यया॥ २१ ॥ ततःशैलोपमंवीरंप्रांजलिंप्रणतंस्थितम्॥ उवाचेदंवचोरामो हनूमंतंप्लवंगमम्॥ २२ ॥ अनुज्ञाप्यमहाराजमिमंसौम्यविभीषणम्॥ प्रविश्यनगरींलंकांकौशलंब्रूहिमैथिलीम्॥ २३ ॥ वैदेह्यामांचकुशलंसु ग्रीवंचसलक्ष्मणम्॥ आचक्ष्ववदतांश्रेष्ठरावणंचहतंरणे ॥ २४ ॥ प्रियमेतदिहाख्याहिवैदेह्यास्त्वंहरीश्वर॥ प्रतिगृह्यतुसंदेशमुपावर्तितुमर्हसि ॥ २५॥ ॥इत्यार्षेश्रीम०वा०आ०युद्धकांडेचतुर्दशाधिकशततमःसर्गः॥ ११४॥ ॥ ७ ॥ ॥ ७॥

मीपगमनवेलायामितिशेषः तानुपहृतान्पदार्थान् ॥ २० ॥ लक्ष्मणायचन्यवेदयत् प्रतिकाम्याइच्छा ॥ २१ ॥ ततःअभिषेकोत्तरंदिनद्वयेतस्यप्रजासांत्वनोत्तररामपूजार्थमागतेविभी षणेतत्पूजांकृत्वानगरंगतेसतितस्मिन्मेदिनेइत्यर्थः ॥ २२ ॥ अनुज्ञाप्यपुराधिपतित्वात्कर्तव्येर्थेतदनुज्ञापेक्षणं आदौसीतांप्रतिकुशलप्रश्नस्ततःस्वकुशलनिवेदनम ॥ २३ ॥ २४ ॥ संदेशंवैदेह्याः प्रतिसंदेशमित्यर्थः ॥ २५ ॥ कतकरी० ॥ १०५ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येयुद्धकांडेचतुर्दशाधिकशततमःसर्गः ॥ ११४ ॥ ॥ ७॥ ॥

सुवर्णस्यउत्कृष्टवर्णस्य नियुतंलक्षमित्येके दशलक्षमित्यन्ये पर्याप्तधनवाहनः जीवनपर्याप्तधनःयुद्धपर्याप्तवाहनइत्यर्थः ॥ ४ ॥ बलंसुभृतंहृष्टंतुष्टंअतएवत्वय्यनुद्धतंयथाभवतितथाकुरु वे
तनादिप्रदानेनेत्यर्थः किंचसंभाषायाःसम्यग्वचनस्यसंप्रदानेनोक्त्यारंजयतत् ॥ ५ ॥ किमेवंबलादरेणतत्राह नह्यर्थाइति यत्ररिपुसंकटेभृत्यास्तिष्ठंतितत्रार्थादयोनतिष्ठंतीत्येतेसर्वेआदर्तव्या
इत्यर्थः ॥ ६ ॥ ननुकिंसेनयातर्हिलवणेनयोत्स्यामिनेत्याहातइति अतोऽयोध्यायाइदानीमेवमहतींचमूंप्रस्थाप्यएकएवत्वंमधुनोवनंमधोर्वनंगच्छ अयंभावः सुखेनजाह्नवीतरणायग्रीष्मका
लएवप्रस्थायजाह्नवीमुत्तीर्यकिंचित्कालंतत्रस्थित्वातद्बलंतत्रैवसंस्थाप्यस्त्वयमेकएवमधुवनंप्राप्यवर्षाप्रादुर्भावेलवणंजहीति ॥ ७ ॥ तदेवाह यथेति अशंकितंत्वदागमनशंकारहितंयथात

हिरण्यस्यसुवर्णस्यनियुतंपुरुषर्षभ ॥ आदायगच्छशत्रुघ्नपर्याप्तधनवाहनः ॥४॥ बलंचसुभृतंवीरहृष्टतुष्टमनुद्धतम् ॥ संभाषासंप्रदानेनरंजय
स्वनरोत्तम ॥५॥ नह्यर्थास्तत्रतिष्ठंतिनदारानचबांधवाः ॥ सुप्रीतोभृत्यवर्गस्तुयत्रतिष्ठतिराघव ॥६॥ अतोहृष्टजनाकीर्णांप्रस्थाप्यमहतींचमू
म् ॥ एकएवधनुष्पाणिर्गच्छत्वंमधुनोवनम् ॥७॥ यथात्वांनप्रजानातिगच्छंतंयुद्धकांक्षिणम् ॥ लवणस्तुमधोःपुत्रस्तथागच्छेरशंकितम् ॥८॥
नतस्यमृत्युरन्योऽस्तिकश्चिद्धिपुरुषर्षभ ॥ दर्शनंयोभिगच्छेतसवध्योलवणेनहि ॥९॥ सग्रीष्मेअपयातेतुवर्षारात्रउपागते ॥ हन्यास्त्वंलवणंसौम्य
सहिकालोस्यदुर्मतेः ॥१०॥ महर्षींस्तुपुरस्कृत्यप्रयांतुतवसैनिकाः ॥ यथाग्रीष्मावशेषेणतरेयुर्जाह्नवीजलम् ॥११॥ तत्रस्थाप्यबलंसर्वंनदीतीरे
समाहितः ॥ अग्रतोधनुषासार्धंगच्छत्वंलघुविक्रम ॥१२॥ एवमुक्तस्तुरामेणशत्रुघ्नस्तान्महाबलान् ॥ सेनामुख्यान्समानीयततोवाक्यमुवाचह
॥१३॥ एतेवोगणितावासायत्रतत्रनिवत्स्यथ ॥ स्थातव्यंचाविरोधेनयथाबाधानकस्यचित् ॥१४॥ तथातांस्तुसमाज्ञाप्यप्रस्थाप्यचमहद्बलम् ॥
कौसल्यांचसुमित्रांचकैकेयींचाभ्यवादयत् ॥१५॥ रामंप्रदक्षिणीकृत्यशिरसाभिप्रणम्यच ॥ लक्ष्मणंभरतंचैवप्रणिपत्यकृतांजलिः ॥१६॥

थागच्छेः ॥ ८ ॥ तस्यलवणस्यान्योऽशंकिततयातदुपरोधकव्यतिरिक्तोमृत्युर्नास्तीत्येतदुपपादयति दर्शनमिति युद्धाकांक्षीसमायातीतितत्कर्तृकज्ञानविषयोयोभवेदित्यर्थः ॥ ९ ॥ वसंतेप्र
स्थितस्यापियुद्धकालोनायमित्याह सइति वर्षारात्रेवर्षाकालेवर्षासुकेपियुद्धार्थंनयतंतइतिनिर्भयोनिःशूलएवचरत्यतःसएवास्यवधकालइतिभावः ॥ १० ॥ तर्हिनेदानींगंतव्यमित्याशंक्य
स्वदेशेकार्यांतरसाधनार्थमेवप्रथमतःशनैःसेनामात्रगमनंकार्यमित्याह महर्षीनिति ॥ ११ ॥ तत्रजाह्नवीपरतीरेअग्रतःततःपरभूतेमार्गे धनुषासार्धं नान्येनबलेनेत्यर्थः ॥ १२ ॥ १३ ॥ एतेप्र
सिद्धावोयुष्माकंवासागणिताएवसंति यत्रयत्रवासेवत्स्यथतत्रतत्राविरोधेनस्थातव्यं तदेवाह यथेति इदंसैनिकान्प्रतिवाक्यम् ॥ १४ ॥ अनेनकेवलसेनैवप्रस्थिताशत्रुघ्नस्तुपश्चादयोध्यातए
कलएवगमिष्यतीतिज्ञायते ॥ १५ ॥ १६ ॥

वृत्तावापीति सुग्रीवस्येवतवापिप्रियंराज्याभिषेकलक्षणंमयाकार्यंकर्तव्यं ह्रियतस्त्वत्प्रभावान्मयाजितम् ॥ ९७ ॥ तस्मादवश्यंक्षमंअभिषेकसंपादनयोग्यंयत्कृत्यंप्रेतनिर्हारलक्षणंतन्मयात्वंवा
तवापीति सुग्रीवस्येवतवापिप्रियंराज्याभिषेकलक्षणंमयाकार्यंकर्तव्यं ह्रियतस्त्वत्प्रभावान्मयाजितम् ॥ ९८ ॥ ९९ ॥ त्वच्छत्रुत्वादसंस्कार्यइतिचेत्तत्राह मरणांतानीति नःसात्विकानामस्माकंप्रयोजनंवैरनिर्या
त्यः यद्यप्ययंत्वदुक्तदोषवांस्तथापिगुणबाहुल्यात्संस्कार्यएवेत्याह अधर्मेत्यादि ॥ ९८ ॥ ९९ ॥ त्वच्छत्रुत्वादसंस्कार्यइतिचेत्तत्राह मरणांतानीति नःसात्विकानामस्माकंप्रयोजनंवैरनिर्या
त्यः यद्यप्ययंत्वदुक्तदोषवांस्तथापिगुणबाहुल्यात्संस्कार्यएवेत्याह अधर्मेत्यादि ॥ एषयथातवभ्रातासंस्कारादिनातवानुग्राह्यस्तथाममाप्यनुग्राह्यएव चतुर्विधमुक्तिष्वेकापिनास्य तदु
तनरूपंनिर्वृत्तंसंपन्नमतःपरंनवैरप्रयोजनमस्ति॥ १०० ॥यदेवमतोस्यसंस्कारःक्रियतामिति एषयथातवभ्रातासंस्कारादिनातवानुग्राह्यस्तथाममाप्यनुग्राह्यएव चतुर्विधमुक्तिष्वेकापिनास्य तदु

तवापिमेप्रियंकार्यंत्वत्प्रभावान्मयाजितम् ॥ ९७ ॥ अवश्यंतुक्षमंवाच्योमयात्वंराक्षसेश्वर ॥ अधर्मा विभीषणमुवाचेदंवाक्यज्ञंवाक्यकोविदः ॥ तवापिमेप्रियंकार्यंत्वत्प्रभावान्मयाजितम् ॥ ९७ ॥ अवश्यंतुक्षमंवाच्योमयात्वंराक्षसेश्वर ॥ अधर्मा
विभीषणमुवाचेदंवाक्यज्ञंवाक्यकोविदः ॥ तेजस्वीबलवाञ्छूरःसंग्रामेषुचनित्यशः ॥ शतक्रतुमुखैर्देवैःश्रूयतेनपराजितः ॥ ९९ ॥ महात्माबलसंप
नृतसंयुक्तःकामंत्वंपनिशाचरः ॥ ९८ ॥ तेजस्वीबलवाञ्छूरःसंग्रामेषुचनित्यशः ॥ शतक्रतुमुखैर्देवैःश्रूयतेनपराजितः ॥ ९९ ॥ महात्माबलसंप
न्नोरावणोलोकरावणः ॥ मरणांतानिवैराणिनिर्वृत्तंनःप्रयोजनम् ॥ १०० ॥ क्रियतामस्यसंस्कारोममाप्येषयथातव ॥ त्वत्सकाशान्महाबाहो
न्नोरावणोलोकरावणः ॥ मरणांतानिवैराणिनिर्वृत्तंनःप्रयोजनम् ॥ १०० ॥ क्रियतामस्यसंस्कारोममाप्येषयथातव ॥ त्वत्सकाशान्महाबाहो
संस्कारंविधिपूर्वकम् ॥ १ ॥ क्षिप्रमर्हतिधर्मेणत्वंयशोभाग्भविष्यसि ॥ राघवस्यवचःश्रुत्वात्वरमाणोविभीषणः ॥ २ ॥ संस्कारयितुमारेभेभ्रातरं
रावणंहतम् ॥ सप्रविश्यपुरींलंकांराक्षसेंद्रोविभीषणः ॥ ३ ॥ रावणस्याग्निहोत्रंतुनिर्यापयतिसत्वरम् ॥ शकटान्दारुरूपाणि अग्नीन्वैयाजकांस्त
था ॥ ४ ॥ तथाचंदनकाष्ठानिकाष्ठानिविविधानिच ॥ अगुरूणिसुगंधीनिगंधांश्चसुरभींस्तथा ॥ ५ ॥ मणिमुक्ताप्रवालानिनिर्यापयतिराक्षसः ॥
आजगाममुहूर्तेनराक्षसैःपरिवारितः ॥ ६ ॥ ततोमाल्यवतासार्धंक्रियामेवचकारसः ॥ सौवर्णींशिबिकांदिव्यामारोप्यक्षौमवाससम् ॥ ७ ॥ रा
वणंराक्षसाधीशमश्रुपूर्णमुखाद्विजाः ॥ तूर्यघोषैश्चविविधैस्तुवद्भिश्चाभिनंदितम् ॥ ८ ॥ पताकाभिश्चचित्राभिःसुमनोभिश्चचित्रिताम् ॥ उत्क्षि
प्यशिबिकांतांतुविभीषणपुरोगमाः ॥ ९ ॥ दक्षिणाभिमुखाःसर्वेगृह्यकाष्ठानिभेजिरे ॥ अग्नयोदीप्यमानास्तेतदाध्वर्युसमीरिताः ॥ ११० ॥

कंविष्णुपुराणे हिरण्यकशिपोर्विष्णुरयमित्येवंनमनस्यभूत् दशाननत्वेप्यनंगपराधीनतयाजानकीसमासक्तचेतसोदाशरथिरूपदर्शनमेवासीत् नायमच्युतइत्यासक्तिर्विपद्यतोंतःकरणस्यमानुष
बुद्धिरेवकेवलमभूदिति अतएवरावणकुंभकर्णयोःशिशुपालदंतवक्ररूपेणजन्मश्रूयते नहिभगवत्सालोक्यंप्राप्तयोरपिजन्मभवतिकिंतुब्रह्मणासहमुक्तिरेवेतिसिद्धांतः ॥ १ ॥ यशोभागितिराम
वाक्येनत्यक्तवैरोभ्रातरंसंस्कृतवानितिख्यातिरेवभविष्यतीत्यर्थः ॥ २ ॥ ३ ॥ निर्यापयति स्मेतिशेषः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ द्विजाःराक्षसद्विजाः स्तुवद्भिर्वंदिजनैरभिनंदितमभिनंदितमिव
रावणंशिबिकामारोप्यद्विजाययुरितिशेषः ॥ ८ ॥ पताकादिभिश्चित्रितांशिबिकांवाहकैरुत्थाप्यविभीषणादयः काष्ठानिगृहीत्वादक्षिणामुखाःश्मशानमार्गंभेजिरे ॥ ९ ॥ ११० ॥

शरणाभिगताः आधारस्थानकुंडस्थाः ॥११॥ प्लवमानानिचलनाभ्यासाभावात्त्वरयाचप्लवमानानीव ॥१२॥ पद्मकोगंधवृक्षः ब्राह्म्याःवेदमार्गानुगतक्रियया रंकुःकृष्णसारमृगस्तत्संबंधिरांकवं तेनास्तरणेनावृतांचितांसंवर्तयामासुःचक्रुः ॥१३॥ पितृमेधंपितृमेधविहितंकर्मप्रचक्रुः तत्प्रकारोवेदिंचेत्यादि दक्षिणाप्राचीं चितायादक्षिणाप्राग्देशेइत्यर्थः यथास्थानंपावकंचप्रचक्रुः दक्षिण पूर्वदेशेआहवनीयंनिदधातिउत्तरपश्चिमेगार्हपत्यंदक्षिणपश्चिमेदक्षिणाग्निमितिसूत्रोक्तस्थानमनतिक्रम्येत्यर्थः ॥ १४ ॥ पृषदाज्येनसदध्याज्येनसंपूर्णेनोपलक्षितंस्रुवंस्कंधेस्कंधदेशेप्रचिक्षिपुः यद्यपिनासिकेस्रुवाविंत्यापस्तंबेनोक्तंतथापिसूत्रांतरात्स्कंधेपिनिक्षेपःस्रुवस्यबोध्यः तथापादयोःशकटमूर्वोरुलूखलमितिचसूत्रांतरादेवबोध्यम् ॥ १५ ॥ दारुपात्रादिसर्वंसूत्रोक्ततत्तत्स्थानेद

शरणाभिगताःसर्वेपुरस्तात्तस्यतेययुः॥ अंतःपुराणिसर्वाणिरुदमानानिसत्वरम्॥ ११ ॥ पृष्ठतोनुययुस्तानिप्लवमानानिसर्वतः॥ रावणंप्रयतेदेशेस्थाप्यतेभृशदुःखिताः॥ १२ ॥ चितांचंदनकाष्ठैश्चपद्मकोशीरचंदनैः॥ ब्राह्म्यासंवर्तयामासूरांकवास्तरणावृताम्॥ १३ ॥ प्रचक्रूराक्षसेंद्रस्य पितृमेधमनुत्तमम्॥ वेदिंचदक्षिणाप्राचींयथास्थानंचपावकम्॥ १४ ॥ पृषदाज्येनसंपूर्णंस्रुवंस्कंधेप्रचिक्षिपुः॥ पादयोःशकटंप्रापुरूर्वोश्चोलूखलंतदा॥ १५ ॥ दारुपात्राणिसर्वाणि अरणिंचोत्तरारणिम्॥ दत्वातुमुसलंचान्यंयथास्थानंविचक्रमुः॥ १६ ॥ शास्त्रदृष्टेनविधिनामहर्षिविहितेनच॥ तत्रमेध्यंपशुंहत्वाराक्षसेंद्रस्यराक्षसाः॥ १७॥ परिस्तरणिकांराज्ञोघृताक्तांसमवेशयन्॥ गंधैर्माल्यैरलंकृत्यरावणंदीनमानसाः॥ १८॥ विभीषणसहायास्तेवस्त्रैश्चविविधैरपि॥ लाजैरवकिरंतिस्मबाष्पपूर्णमुखास्तथा॥ १९॥ सददौपावकंतस्यविधियुक्तंविभीषणः॥ स्नात्वाचैवार्द्रवस्त्रेणतिलान्दर्भविमिश्रितान्॥ १२० ॥ उदकेनचसंमिश्रान्प्रदायविधिपूर्वकम्॥ ताःस्त्रियोनुनयामाससांत्वयित्वापुनःपुनः॥ २१ ॥

त्वाअन्यंमुसलंचातुर्मास्यमुसलंयथास्थानंदत्वाचविचक्रमुःपितृमेधंचक्रुः ॥ १६ ॥ शास्त्रदृष्टेनश्रुतिदृष्टेनमहर्षिविहितेनकल्पसूत्रकृदृषिविहितेन ॥ १७ ॥ परिस्तीर्यतेमुखमनयेतिपरिस्तरणिकावपातांराक्षसेंद्रस्यमुखेसमवेशयन् वपास्यमुखंप्रोर्णोतीतिसूत्रात् तीर्थस्तुअनुस्तरणिकींराज्ञइतिपठित्वानुस्तरणिकींराजगवींतामालभ्यतच्चर्मणायजमानमास्तृतवंतइत्यर्थः मृतायानुस्तरणींघ्नंतीतिश्रुतेरित्याह ॥ १८ ॥ वस्त्रैश्चेति अलंकृत्येत्यनुकर्षः ॥ १९ ॥ १२० ॥ विधिपूर्वकंप्रदायस्थितइतिशेषः ननुनिहतंरावणंदृष्ट्वारामेणाक्लिष्टकर्मणा तत्यजुस्तंमहाभागंपंचभूतानिरावणम् शरीरधातवोह्यस्यमांसंरुधिरमेवच नेशुर्ब्रह्मास्त्रनिर्दग्धानचभस्माप्यदृश्यतेतिमहाभारतेउक्तत्वेनकस्यवाल्मीकिनाश्मशानानयनपूर्वकंदाहउक्तइतिचेन्न तस्यरामबाणतेजोवर्णनविषयेऽत्युक्त्यलंकारपरत्वादितिवदंति ॥ २१ ॥

गम्यतामित्युवाचेत्यर्थः रावणपत्नीरितिशेषः ॥ २२ ॥ २३ ॥ १२४ ॥ अयंसंस्कारोनवम्यामेवसायंकाले ॥ कतकरी० ॥ १०४ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मी
कीयेआदिकाव्येयुद्धकांडेत्रयोदशाधिकशततमःसर्गः ॥११३ ॥ ॥ ७ ॥ ॥ तेरावणेति ॥ १ ॥ सुग्रीवस्यमंत्रितंसेनासंमेलनसीतान्वेषणादिसर्वकार्यसाधकंमंत्रसामर्थ्यम् ॥ २ ॥ मारुति

गम्यतामितिताःसर्वाविविशुर्नगरंततः॥ प्रविष्टासुपुरींस्त्रीषुराक्षसेंद्रोविभीषणः॥ रामपार्श्वमुपागम्यसमतिष्ठद्विनीतवत् ॥ २२ ॥ रामोपिसहसै
न्येनससुग्रीवःसलक्ष्मणः॥ हर्षंलेभेरिपुंहत्वायथावृत्रंवज्रधरोयथा॥ २३ ॥ ततोविमुक्तासशरंशरासनंमहेंद्रदत्तंकवचंसतन्महत् ॥ विमुच्यरोषंरिपुनि
ग्रहात्ततोरामःससौम्यत्वमुपागतोरिहा ॥ १२४ ॥ ॥ इत्यार्षेश्रीमद्रामायणेवाल्मीकीयेआ० युद्धकांडेत्रयोदशाधिकशततमःसर्गः॥ ११३॥
तेरावणवधंदृष्ट्वादेवगंधर्वदानवाः॥ जग्मुःस्वैःस्वैर्विमानैस्तेकथयंतःशुभाःकथाः॥ १ ॥ रावणस्यवधंघोरंराघवस्यपराक्रमम् ॥ सुयुद्धंवानराणां
चसुग्रीवस्यचमंत्रितम् ॥ २ ॥ अनुरागंचवीर्यंचमारुतेर्लक्ष्मणस्यच ॥ पतिव्रतात्वंसीतायाहनूमतिपराक्रमम् ॥ ३ ॥ कथयंतोमहाभागाजग्मुर्हृ
ष्टायथागतम् ॥ राघवस्तुरथंदिव्यमिंद्रदत्तंशिखिप्रभम् ॥ ४ ॥ अनुज्ञाप्यमहाबाहुर्मातलिंप्रत्यपूजयत् ॥ राघवेणाभ्यनुज्ञातोमातलिःशक्रसारथिः
॥ ५ ॥ दिव्यंतंरथमास्थायदिवमेवोत्पपातह ॥ तस्मिंस्तुदिवमारूढेसरथेरथिनांवरः॥ ६ ॥ राघवःपरमप्रीतःसुग्रीवंपरिषस्वजे॥ परिष्वज्यचसुग्री
वंलक्ष्मणेनाभिवादितः॥ ७ ॥ पूज्यमानोहरिगणैराजगामबलालयम् ॥ अथोवाचसकाकुत्स्थःसमीपपरिवर्तिनम् ॥ ८ ॥ सौमित्रिंमित्रसंपन्नं
लक्ष्मणंशुभलक्षणम् ॥ विभीषणमिमंसौम्यलंकायामभिषेचय ॥ ९ ॥ अनुरक्तंचभक्तंचतथापूर्वोपकारिणम् ॥ एषमेपरमःकामोयदिमंरावणा
नुजम् ॥ १० ॥ लंकायांसौम्यपश्येयमभिषिक्तंविभीषणम् ॥ एवमुक्तस्तुसौमित्रीराघवेणमहात्मना ॥ ११ ॥

लक्ष्मणयोरामेऽनुरागंवीर्यंच ॥ ३ ॥ इंद्रदत्तंइंद्रप्रेषितम् ॥ ४ ॥ अनुज्ञाप्यरथंनयेत्याज्ञांदत्वा यद्यपिभारतेसीतायाआगमनोत्तरंरथादवतरणंभगवतउक्तंतथापितत्रपौर्वापर्यक्रमेतात्पर्याभा
वान्नक्षतिः ॥ ५ ॥ ६ ॥ लक्ष्मणेनाभिवादितोराघवः ॥ ७ ॥ बलालयंसेनानिवेशस्थानं अथत्रिभिर्दिनैर्दशरात्रैकादशाहद्वादशाहकर्तव्यक्रियासमाप्तौचतुर्थेऽहनीत्यर्थः नात्रदशाहमाशौच
मितिभ्रमितव्यं उद्यतैराहवेशस्त्रैःक्षत्रधर्महतस्यतु सद्यःसंतिष्ठतेयज्ञस्तथाशौचमितिस्थितिरितिमनूक्तेः ॥ ८ ॥ लंकायामभिषेचय रावणसिंहासनेसाक्षादितिशेषः ॥ ९ ॥ १० ॥ ११ ॥

तंघटंहस्तेइतिजातावेकवचनं मनोजवान्वानरान्व्यादिदेश ॥ १२ ॥ समुद्रसलिलंतदानयनं ॥ १३ ॥ समुद्राच्चतुःसमुद्रेभ्यइत्यर्थः परमासनेविभीषणंसंस्थाप्यतमभ्यषिचत् ॥ १४ ॥ १५ ॥ मंत्रदृष्टेनवेददृष्टेन ॥ १६ ॥ भक्तायेचास्यविभीषणस्यामात्यव्यतिरिक्ताभक्तास्तेपीत्यर्थः ॥ १७ ॥ १८ ॥ प्रकृतयःप्रकृतीःस्वपुरराष्ट्रप्रजाः ॥ १९ ॥ पौरास्तस्मैविभीषणायाजकुःरामस



तथेत्युक्त्वासुसंहृष्टःसौवर्णघटमाददे ॥ तंघटंवानरेंद्राणांहस्तेदत्वामनोजवान् ॥ १२ ॥ व्यादिदेशमहासत्त्वःसमुद्रसलिलंतदा ॥ अतिशीघ्रंततोगत्वावानरास्तेमनोजवाः ॥ १३ ॥ आगतास्तुजलंगृह्यसमुद्राद्वानरोत्तमाः ॥ ततस्त्वेकंघटंगृह्यसंस्थाप्यपरमासने ॥ १४ ॥ घटेनतेनसौमित्रिरभ्यषिंचद्विभीषणम् ॥ लंकायांरक्षसांमध्येराजानंरामशासनात् ॥ १५ ॥ विधिनामंत्रदृष्टेनसुहृद्गणसमावृतः ॥ अभ्यषिंचंस्तदासर्वेराक्षसावानरास्तथा ॥ १६ ॥ प्रहर्षमतुलंगत्वातुष्टुवूराममेवहि ॥ तस्यामात्याजहृषिरेभक्तायेचास्यराक्षसाः ॥ १७ ॥ दृष्ट्वाभिषिक्तंलंकायांराक्षसेंद्रंविभीषणम् ॥ राघवःपरमांप्रीतिंजगामसहलक्ष्मणः ॥ १८ ॥ सांत्वयित्वाप्रकृतयस्ततोराममुपागमत् ॥ दध्यक्षतान्मोदकांश्चलाजाःसुमनसस्तथा ॥ १९ ॥ आजह्रुरथसंहृष्टाःपौरास्तस्मैनिशाचराः ॥ सतान्गृहीत्वादुर्धर्षोराघवायन्यवेदयत् ॥ २० ॥ मांगल्यंमंगलंसर्वंलक्ष्मणायचवीर्यवान् ॥ कृतकार्यंसमृद्धार्थंदृष्ट्वारामोविभीषणम् ॥ प्रतिजग्राहतत्सर्वंतस्यैवप्रतिकाम्यया ॥ २१ ॥ ततःशैलोपमंवीरंप्रांजलिंप्रणतंस्थितम् ॥ उवाचेदंवचोरामोहनूमंतंप्लवंगमम् ॥ २२ ॥ अनुज्ञाप्यमहाराजमिमंसौम्यविभीषणम् ॥ प्रविश्यनगरींलंकांकौशलंब्रूहिमैथिलीम् ॥ २३ ॥ वैदेह्यामांचकुशलंसुग्रीवंचसलक्ष्मणम् ॥ आचक्ष्ववदतांश्रेष्ठरावणंचहतंरणे ॥ २४ ॥ प्रियमेतदिहाख्याहिवैदेह्यास्त्वंहरीश्वर ॥ प्रतिगृह्यतुसंदेशमुपावर्तितुमर्हसि ॥ २५ ॥ ॥ इत्यार्षेश्रीम० वा० आ० युद्धकांडेचतुर्दशाधिकशततमःसर्गः ॥ ११४ ॥ ॥ ७ ॥ ॥ ७ ॥

मीपगमनवेलायामितिशेषः तानुपहृतान्पदार्थान् ॥ २० ॥ लक्ष्मणायचन्यवेदयत् प्रतिकाम्याइच्छा ॥ २१ ॥ ततःअभिषेकोत्तरंदिनद्वयेतस्यप्रजासांत्वनोत्तररामपूजार्थमागतेविभीषणेतत्पूजांकृत्वानगरंगतेतस्मिन्सप्तमेदिनेइत्यर्थः ॥ २२ ॥ अनुज्ञाप्यपुराधिपतित्वात्कर्तव्येर्थेतदनुज्ञापेक्षणं आदौसीतांप्रतिकुशलप्रश्नस्ततःस्वकुशलनिवेदनम् ॥ २३ ॥ २४ ॥ संदेशंवैदेह्याः प्रतिसंदेशमित्यर्थः ॥ २५ ॥ कतकरी० ॥ १०५ ॥ ॥ इतिश्रीरामाभिरामेश्रीरामीयेरामायणतिलकेवाल्मीकीयेआदिकाव्येयुद्धकांडेचतुर्दशाधिकशततमःसर्गः ॥ ११४ ॥ ॥ ७ ॥ ॥

॥ ३० ॥ ३१ ॥ श्रियाउपलक्षितेतिशेषः ॥ ३२ ॥ ३३ ॥ सैवाहंसौभाग्यलक्षणवत्येवतववधादन्येवविधवेवसंवृत्तेत्यर्थः अत्रान्येवेतीवकारेणदेवस्थित्यावस्तुतोऽवैधव्यंसूचितम् सुभ्रुशोभ
नभ्रूयुतम् सुत्वक्शोभनत्वगिंद्रियस्थानम् ॥ ३४ ॥ कांतिराल्हादकरीप्रभातयाचंद्रतुल्यम् श्रीरुज्वलतातयापद्मवत् द्युतिःपराभिभवसामर्थ्यंतेजस्तेनरवितुल्यम् कूटःसमूहः ताम्रास्यंताम्रो
ष्ठम् ॥ ३५ ॥ पानभूमिषुमदव्याकुललोलाक्षंभूत्वायद्भ्राजतेतिशेषः चारुसुंदरम् वल्गुचंचलम् स्मितकथंस्मितोपेतकथायुतम ॥ ३६ ॥ तदेवतेवक्त्रम् एवमेवकथामापन्नंनभ्राजते तामव

सीतानिमित्तजोमृत्युस्त्वयादूरादुपाहृतः ॥ मैथिलीसहरामेणविशोकाविहरिष्यति ॥ ३० ॥ अल्पपुण्यात्वहंघोरेपतिताशोकसागरे ॥ कैलासेमं
दरेमेरौतथाचैत्ररथेवने ॥ ३१ ॥ देवोद्यानेषुसर्वेषुविहृत्यसहितात्वया ॥ विमानेनानुरूपेणयायाम्यतुलयाश्रिया ॥ ३२ ॥ पश्यंतीविविधान्देशां
स्तांस्तांश्चित्रस्रगंबरा ॥ भ्रंशिताकामभोगेभ्यःसास्मिवीरवधात्तव ॥ ३३ ॥ सैवान्यवास्मिसंवृत्ताधिग्राज्ञांचंचलांश्रियम् ॥ हाराजन्सुकुमारंते
सुभ्रुसुत्वक्समुन्नसम् ॥ ३४ ॥ कांतिश्रीद्युतिभिस्तुल्यमिंदुपद्मदिवाकरैः ॥ किरीटकूटोज्ज्वलितंताम्रास्यंदीप्तकुंडलम् ॥ ३५ ॥ मदव्याकुललोला
क्षंभूत्वायत्पानभूमिषु ॥ विविधस्रग्धरंचारुवल्गुस्मितकथंशुभम् ॥ ३६ ॥ तदेवाद्यतवैवंहिवक्त्रंनभ्राजतेप्रभो ॥ रामसायकनिर्भिन्नंरक्तंरुधिरवि
स्रवैः ॥ ३७ ॥ विशीर्णमेदोमस्तिष्कंरूक्षंस्यंदनरेणुभिः ॥ हापश्चिमामेसंप्राप्तादशावैधव्यदायिनी ॥ ३८ ॥ यामयासीन्नसंबुद्धाकदाचिदपिमंदया ॥
पितादानवराजोमेभर्तामेराक्षसेश्वरः ॥ ३९ ॥ पुत्रोमेशक्रनिर्जेताइत्यहंगर्विताभृशम् ॥ दृप्तारिमथनाःक्रूराःप्रख्यातबलपौरुषाः ॥ ४० ॥ अकुत
श्चिद्भयानाथाममेत्यासीन्मतिर्ध्रुवा ॥ तेषामेवंप्रभावाणांयुष्माकंराक्षसर्षभाः ॥ ४१ ॥ कथंभयमसंबुद्धंमानुषादिदमागतम् ॥ स्निग्धेंद्रनीलनी
लंतुप्रांशुशैलोपमंमहत् ॥ ४२ ॥ केयूरांगदवैडूर्यमुक्ताहारस्रगुज्वलम् ॥ कांतंविहारेष्वधिकंदीप्तंसंग्रामभूमिषु ॥ ४३ ॥ भात्याभरणभाभिर्यद्विद्युद्भि
रिवतोयदः ॥ तदेवाद्यशरीरंतेतीक्ष्णैर्नैकशरैश्चितम् ॥ ४४ ॥ पुनर्दुर्लभसंस्पर्शंपरिष्वक्तुंनशक्यते ॥ श्वाविधःशललैर्युक्तंलग्नैर्बाणैर्निरंतरम् ॥ ४५ ॥

स्यामाह रामेति रक्तंरक्तवर्णम् ॥ ३७ ॥ विशीर्णमेदोस्थिगतमांसंमस्तिष्कंमज्जाचयस्यतत् सावैधव्यदापश्चिमादशामेमयासंप्राप्ता ॥ ३८ ॥ यामयासंबुद्धानासीत् दानवराजोमयः ॥ ३९ ॥
अहंगर्विताविशिष्टपतिपुत्रपितृत्वात् दृप्तारिमथनत्वादिधर्मामनाथास्त्रातारःसंतीतिममध्रुवादृढामतिरासीत् ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ श्वाविधःशल्यकस्यशललैःकंटकैरिवलग्नैर्बाणै
र्निरंतरम् कृतमितिशेषः ॥ ४५ ॥

तथाममर्मसुस्वर्पितैर्बाणैः संछिन्नस्नायुबंधनम् रुधिरच्छवितत्संबंधेनरक्तकांति ॥ ४६ ॥ वज्रप्रहारमभितोविकीर्णःपर्वतइवतेशरीरंविकीर्णम् हाखेदे स्वप्नइवेदंकथंसत्यमेवजातम् ॥ ४७ ॥ वसुरत्नम् महत्अत्यर्थम् ॥ ४८ ॥ ४९ ॥ साधुभूतानांसाधुजनानांविदारणं ओजसाबलेन दृप्तवाक्यानांगर्विष्ठवचसाम् ॥ ५० ॥ ५१ ॥ आहवेनिग्रहीतारंजेतारमितियावत् ॥ ५२ ॥ ५३ ॥

स्वर्पितैर्मर्मसुभृशंसंछिन्नस्नायुबंधनम् ॥ क्षितौनिपतितंराजन्श्यामंवैरुधिरच्छवि ॥ ४६ ॥ वज्रप्रहारमभितोविकीर्णइवपर्वतः ॥ हास्वप्नःसत्यमेवेदंत्वंरामेणकथंहतः ॥ ४७ ॥ त्वंमृत्योरपिमृत्युःस्याःकथंमृत्युवशंगतः ॥ त्रैलोक्यवसुभोक्तारंत्रैलोक्योद्वेगदंमहत् ॥ ४८ ॥ जेतारंलोकपालानांक्षेप्तारंशंकरस्यच ॥ दृप्तानांनिग्रहीतारमाविष्कृतपराक्रमम् ॥ ४९ ॥ लोकक्षोभयितारंचसाधुभूतविदारणम् ॥ ओजसादृप्तवाक्यानांवक्तारंरिपुसन्निधौ ॥ ५० ॥ स्वयूथभृत्यगोप्तारंहंतारंभीमकर्मणाम् ॥ हंतारंदानवेंद्राणांयक्षाणांचसहस्रशः ॥ ५१ ॥ निवातकवचानांतुनिग्रहीतारमाहवे ॥ नैकयज्ञविलोप्तारंत्रातारंस्वजनस्यच ॥ ५२ ॥ धर्मव्यवस्थाभेत्तारंमायास्रष्टारमाहवे ॥ देवासुरनृकन्यानामाहर्तारंततस्ततः ॥ ५३ ॥ शत्रुस्त्रीशोकदातारंनेतारंस्वजनस्यच ॥ लंकाद्वीपस्यगोप्तारंकर्तारंभीमकर्मणाम् ॥ ५४ ॥ अस्माकंकामभोगानांदातारंरथिनांवरम् ॥ एवंप्रभावंभर्तारंदृष्ट्वारामेणपातितम् ॥ ५५ ॥ स्थिरास्मियादेहमिमंधारयामिहतप्रिया ॥ शयनेषुमहार्हेषुशयित्वाराक्षसेश्वर ॥ ५६ ॥ इहकस्मात्प्रसुप्तोसिधरण्यांरेणुगुंठितः ॥ यदामेतनयःशस्तोलक्ष्मणेनेंद्रजिद्युधि ॥ ५७ ॥ तदात्वभिहतातीव्रमद्यत्वस्मिनिपातिता ॥ साहंबंधुजनैर्हीनाहीनानाथेनचत्वया ॥ ५८ ॥ विहीनाकामभोगैश्चशोचिष्येशाश्वतीःसमाः ॥ प्रपन्नोदीर्घमध्वानंराजन्नद्यसुदुर्गमम् ॥ ५९ ॥ नयमामपिदुःखार्तानवर्तिष्येत्वयाविना ॥ कस्मात्त्वंमांविहायेहकृपणांगंतुमिच्छसि ॥ ६० ॥ दीनांविलपतींमंदांकिंचमांनाभिभाषसे ॥ दृष्ट्वानखल्वभिक्रुद्धोमामिहानवगुंठिताम् ॥ ६१ ॥ निर्गतांनगरद्वारात्पद्भ्यामेवागतांप्रभो ॥ पश्येष्टदारदारांस्तेभ्रष्टलज्जावगुंठनान् ॥ ६२ ॥

॥ ५४ ॥ एवंप्रभावंत्वांहतंदृष्ट्वाहतप्रियाइमंदेहंधारयामि अतःस्थिराकठिनहृदयास्मीतिजाने ॥ ५५ ॥ ५६ ॥ ५७ ॥ तदात्वभिहताअभिघातमात्रंप्राप्ता अद्यतुनिपातितास्मि ॥ ५८ ॥ ५९ ॥ ६० ॥ अनवगुंठितांभ्रष्टावगुंठनाम् ॥ ६१ ॥ भ्रष्टंलज्जारक्षकमवगुंठनंयेषांतान् ॥ ६२ ॥

